सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-

"विद्यावारिधिः" (Ph. D.)

इत्युपाधये स्वीकृतगवेषणाप्रबन्धः

पुस्तकप्राप्तिस्थानम्-
सी० २२/३७ कबीरचौरा,
वाराणसी-२२१ ०१
( उ. प्र. )

प्रथमावृत्तिः १०००

लेखकाधीनं पुनर्मुद्रणम्

मूल्यम्............२७) रु

प्रकाशकः
आचार्य-महन्त-श्रीविद्यानन्ददाससाहब
आचार्यगद्दी, फतुहा,
पटना, बिहार

मुद्रकः—मास्टर प्रिण्टिङ्ग प्रेस,
बुलानाला, वाराणसी

सर्वशास्त्रावताराणां विद्वद्वरेण्यानां प्रखरवैदुष्यापसारितवादिनिवहानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये दर्शनसंकायाध्यक्षपदविभूषितवेदान्तविभागाध्यक्षाणां श्रीमतां डॉ० देवस्वरूपमिश्रमहाभागानां शुभसम्मतिः ।

श्रीमता शिष्टशिरोमणिना तीव्रमतिना प्रसादिताचार्येण विदुषा डॉ० कपलदेव ब्रह्मचारिणा रचितो भक्तिपरः परो ग्रन्थो दृष्टः पठितोऽनुमतश्च मया। ग्रन्थमेनं दृष्ट्वा परं मोदमाप्तोऽहमनाप्तानुक्तत्वादस्य ग्रन्थस्य प्रामाण्यमनुभवामि, भवामि च व्यापृतोऽत्र किञ्चिन्निवेदयितुम् । "भक्तिरसविमर्श" इत्यभिधाने स्वरचिते महिम्नि ग्रन्थेऽस्मिन् लेखकेन महानुभावेन स्वानुभवानुसारेण युक्त्या प्रमाणकदम्बेन च भक्तेरेव मुख्यरसत्वं निरूपितम्। सतां ह्येष स्वभावो यद्यथानुभव मेव भाषन्ते। अत एव तद्वचो वहति प्रमाण्यशिरोभागत्वम्। प्राहुश्च पूर्वाचार्याः-"आप्तवाक्यं प्रमाणम्। आप्तस्तु यथार्थवक्ता रागादिवशादपि नान्यथावादी" इति। अत एव कवीश्वरेण भवभूतिना स्वानुभवो व्यक्तीकृतः-"एको रसः करुण एव निमित्तभेदात्" इत्यादिना। तेन न्यायेनात्र ग्रन्थे विविधशास्त्रानुशीलनजनितप्रकर्षशेमुषीकेण विदुषा डॉ० कपिलदेव ब्रह्मचारिणा स्वानुभवसाक्षिकं शास्त्रप्रामाण्यसाहायकं भक्तेरितररसानुप्राणकत्वं मुख्यरसत्वञ्च परिदर्शितम् ।

मन्ये ग्रन्थस्यास्य पठनेन पाठनेन प्रचारेण च भक्तेः सेव्यता प्रसृता भविष्यति। ग्रन्थकर्तुः कीर्तिश्च धार्मिकत्वप्रयुक्तोत्कृष्टत्वप्रकारकनानादिग्देशीयलोकसमवेतज्ञानविषयतालक्षणा विलक्षणा स्थिरा यथानामगुणा परिलक्षयिष्यते। शब्दस्य च प्रामाण्यमत एव शिष्टैरनुमन्यते, यतो हि प्रमाणप्रकारेषु मूर्धन्यं प्रमाणं शब्दः, "उत्तरोत्तरं गुरुः" इत्युक्तेः। शब्दप्रमाणं हि स्वजन्यज्ञानद्वारासमुपजातां विप्रतिपत्तिं संशयं भ्रमञ्च निवर्तयति। अत एव तस्य प्रमाणस्य महत्वम्। भक्ती रसो नवेति चिरात्प्रवृत्ता विप्रतिपत्तिः, तत्र न केवलं भक्ते रसत्वमेव लेखकेन विदुषा प्रसाधितम्, किन्तु सकलप्रसिद्धरसमूलत्वे सतिरसत्वम्। अतोऽस्य लोकोत्तरं प्रतिभानं, स्वसिद्धान्तनिरूपणे नैपुण्यञ्चावेक्ष्य मोदमानं मामकीनं मनोऽस्य लोकोत्तरयशसे दीर्घायुष्याय नैरोग्यलोकोत्तराभ्युदयादिकल्याणाय परमेश्वरं भवानीजानिमनुस्मरति। स सर्वं पुरयिष्यतीति शुभाशिषा संयोजयन्नहं विरमामि।

**डॉ० श्री देवस्वरूपमिश्रः**

वेदान्तविभागाध्यक्षः, संकायाध्यक्षश्च

संम्पूर्णानन्दसंस्कृतविश्वविद्यालये वाराणस्याम्

॥ श्रीहरिः ॥

**प्राचीनभारतीयशास्त्रज्ञानां प्राच्यप्रतीच्योभयदर्शनतत्त्वज्ञानां शोध--लेखन-पाठनादिकर्मणि परमदक्षाणां परमसहृदयानां जम्मू-स्थकेन्द्रीयरणधीरसंस्कृतविद्यापीठप्राचार्यपदमलंकुर्वतां श्रीमतां डॉ० मुरलीधरपाण्डेयमहोदयानां शुभाशंसनम् ।**

परमप्रियेण श्रीकपिलदेवब्रह्मचारिणा विद्यावारिध्युपाधये रचितोऽयं प्रबन्धो नितरां भक्तिरसरसिकाणां विदुषां महामोदाय भविष्यतीति दृढं विश्वसीमि । ब्रह्मचारिवरोऽयं महान् विचारकः सत्यसन्धो दृढाध्यवसायश्चास्तीति विज्ञायाहं भृशं संतुष्यामि । यथावसरं मयाऽप्यस्मिन् शोधग्रन्थे ब्रह्मचारिणः सहयोगो व्यधायीति कृत्येनानेन भगवतः काऽपि सेवैव कृतेति मन्ये ।

प्रबन्धोऽयं स्वस्मिन् भक्तिरसमयान् बहून् विषयान् समावेश्य भक्तिरसस्य सर्वविधपरिचयप्रदाने समर्थो दृश्यते । सूक्ष्ममतिना रचयित्रा बहूनि शास्त्राणि समालोड्य "नातिव्यासव्यतिकरवती नातिसङ्कोच खेदा" रचना प्रस्तुता । नाद्यावधि केनापि रचनैतद्विधा विहितेति परमोपयोगश्चास्य लोके सुतरां सिद्धः । प्राचीनशास्त्रीयविषयान् नवीनमनोविज्ञानादिविषयांश्च यथायथं सङ्कलय्य निष्पक्षभावेन तत्-तत्सिद्धान्तांश्च समालोच्य काचन नवीना दिशा गवेषकानां कृते दर्शिता परमविदुषा लेखकेन ब्रह्मचारिवरेण ।

अद्यत्वे नवीनविषयस्यापि संस्कृतशोधनिबन्धेषु निवेशो नाम परमावश्यकं वस्तु, यतो हि कर्मणैतेन नवीनज्ञानविज्ञानयोः श्रद्धातिशयसम्पन्ना अपि नूनं प्रवृत्ता अत्र भविष्यन्ति । सर्वकालेष्वपि तत्सामयिकनूतनविचारधारायाः प्राचीनविचारकलापेन सहैकत्र संकलनं दृष्टचरमुपयुक्तञ्चेत्यत्र नास्ति सन्देहलेशः । प्राचीनतापक्षपातिनोऽपि वर्त्तमानं सर्वथोपेक्षितुं नोत्सहन्ते । "तदात्वे नूतनं सर्वमायत्याञ्च पुरातन" मिति रीत्या ग्राह्यत्वाग्राह्यत्वयोर्नूतनताप्राचीनतयोः प्रयोजकता नैव वक्तुं शक्या । तस्मात् दोषं गुणञ्चालोच्य त्याग उपादानं वा कर्त्तव्यं न तु नूतनत्वेन प्राचीनत्वेन वेति फलितम् । उक्तं च "पुराणमित्येव न साधुसर्वम्" इत्यादि ।

एवञ्च शोधोऽयमवश्यं विद्वन्मनोमोदयिता भक्तिविषयकजिज्ञासान्वितानामुपकारकश्च भविष्यतीति समाशासे । शोधकर्त्ता महोदयश्च स्वकर्मणि सफलः प्रबन्धमेनं प्रकाश्य स्वयमपि प्रकाशितो भवतु इति मे शुभाशंसा ।

**डॉ० मुरलीधरपाण्डेयः ।**

प्राचार्यः
केन्द्रीयरणधीरसंस्कृतविद्यापीठे
जम्मू तवी, कश्मीरे

## समर्पणम्

अनन्तश्रीविभूषितानां निगमागमसकलसच्छास्त्रपारदृश्वनां वेदान्तविद्याचिन्तनतत्पराणां लोककल्याणैक-परायणानां त्यागतपोवैराग्यनिष्ठानां सदाचारपूतान्तःकरणानां परमाराध्य-श्रीगुरुचरणानां स्वामिरामलखनदेव-ब्रह्मचारिगुरुवर्य्याणां चरण-कमलयोः समर्प्यमाणः पद्यप्रसूनाञ्जलिः

१

अन्यायादिपराङ्गमुखो मृदुतरो दानी दयावान् बुधो
नन्दन्नात्मसुखेन योगनिरतः सद्ब्रह्मचर्ये रतः।
तत्त्वान्वेषणचारुचिन्तनपरो रामेऽनुरक्तः परे
श्रीमद्ब्रह्मणि सच्चिदात्मनि मुदा नित्यान्वितः पुण्यवान्॥

२

विश्वाराधनतो यशोभिरतुलैः सम्पूरितः सद्गुरू
रागी सम्प्रथिते कबीरकलिते मार्गे गरिष्ठो मुनिः।
जिष्णुर्दुष्टदलस्य पीडितजनोद्धारे प्रवीणः सदा
तस्मै ज्ञानिवराय दिव्यवपुषे देवाय नित्यं नमः॥

३

स्वामी धर्मविचारकार्यनिरतः प्रोद्दीप्तकीर्त्युज्ज्वलो
राशिर्ज्ञानचयस्य धर्मनिरतो मान्यो वदान्यः सुधीः ।
मत्या निर्मलया विनाशितमहामोहान्धकारावलिः
लक्ष्म्या भास्वरया सदा विलसितः सोऽयं प्रभावी गुरुः ॥

४

खड्गो यो ऽस्ति सदा कुभावविटपिप्रच्छेदने साम्प्रतं
नत्या मे भवतीह सोऽद्यविषयः प्राणायितः सद्गुरुः ।
देवोऽसौ शुभरामलक्ष्मणनिभस्तन्नामधेयस्सदा
वन्द्यस्सद्गुणवारिधिर्मम धनं जीयादसौ भूतले ॥

५

ब्रह्मध्यानपरायणः परतरो वेदान्तकल्पद्रुमः
चाणक्येन समो नये गुणवतां विद्यावताञ्चाश्रयः ।
रीतिः स्वच्छतमा प्रभावभरिता यस्येह संराजते
जीयाद् यः सुखशान्तिकामवरदः कारुण्यवारांनिधिः ॥

६

सर्ववेदान्तविद्यानामधीशस्य गुरोर्मम ।
प्रबन्धोऽयं पदाम्भोजे पुष्पबुद्ध्या समर्प्यते ॥

# प्राक्कथनम्

१

भक्तिर्नाम सुधास्ति लोकविदिता स्वाभाविकानन्ददा
विष्णोः प्रीतिकरी जगद्धितकरी लोकोत्तरा शान्तिदा।
पीत्वा सौख्यमयीमिमां बुधजनाः सम्पादयध्वं निजं
मोक्षं लोकसुखं यशश्च विमलं लोके सुखेनाचिरात्॥

२

ग्रन्थेऽस्मिन् विधिना मया बहुविधा वादाः समालोचिता
भक्ते रूपमनुत्तमं प्रकथितं भेदाश्च संदर्शिताः।
तस्याः पूर्णरसत्वमत्र विविधैर्वाक्यैश्च संसाधितं
प्राधान्यञ्च रसेषु तस्य कथितं प्रत्यर्थिनः खण्डिताः॥

३

वेदेष्वागमसत्पुराणभगवच्छास्त्रेषु रामायणे
प्राच्यार्वाच्यमते जये च भगवद्भक्तेः स्थितिर्वर्णिता।
भक्ताचार्यमतानि भक्तिविषये संक्षिप्य प्रोक्तानि वै
प्रेम्णः सम्पुरुषार्थता प्रकटिता वाक्यार्थसंशीलनैः॥

४

अध्याये प्रथमे विचार्य विषयान् प्रोक्तान् क्रमात् तत्परेऽ-
ध्याये भक्तिरसस्य मानसविदां दृष्ट्या विचारः कृतः।
पाश्चात्यैरधुनातनैर्मनसि याः संवर्णिता वृत्तय-
स्तासां भक्तिरसप्रवेशविषये चर्चा विशिष्टा ह्यभूत्॥

५

कः कामः, सुरतिश्च का, गुणवती किं प्रेम भक्तिश्च का
भेदश्चैषु परस्परं कथमभूत् प्रेमैव कामोऽस्ति किम्।
इत्याद्या विषया यथामति मया दृष्टा विचारैः सतां
विज्ञाने मनसश्च भक्तिरुचिता संस्थापिता साहसात्॥

६

अध्यायेषु तृतीयके बहुविधं सद्दर्शनानां मतं
भक्तौ दर्शितमत्र सेव्यविदुषां सन्तोषवृद्ध्यै: पुनः ।
अद्वैते गुणवर्जितेऽपि विविधा भक्तिश्च संदर्शिता
श्रीमच्छङ्करपाददर्शितदिशा तस्याः फलं चिन्तितम् ॥

७

अग्रे तत्र विचारितं गुणयुतं ब्रह्मस्वरूपं परं
श्रीरामानुजसम्प्रदायविधिना भक्तिस्ततश्चिन्तिता ।
भेदः साधनसाध्ययोश्च भगवद्भक्तयोः पुनर्वर्णितः
रामानन्दमतञ्च तत्परमथो संक्षिप्य प्रोक्तं क्रमात् ॥

८

श्रीमन्मध्वमतं विविच्य परतो निम्बार्कदृष्टं मतं
विष्णुस्वामिमतञ्च प्रोच्य शुभदा पुष्टिः समालोचिता ।
श्रीमद्वल्लभदेववर्णितदिशा चैतन्यदेवस्य च
भेदाभेदमचिन्त्यरूपमतुलं दृष्टं मया ह्यादरात् ॥

९

सांख्ये भक्तिरसं विचार्य परतस्तद्दर्शनं वर्णितं
योगाख्यं सुमतं विविच्य बहुधा योगस्य भेदाः कृताः ।
शैवं दर्शनमत्र चर्चितमथो भेदान्वितं भक्तिदं
शाक्तं चापि मतं शिवान्वितमहो संवर्ण्य तन्त्रान्वितम् ॥

१०

अध्यायेषु चतुर्थके तु शुभसाहित्येषु भक्तिः परा
प्रोक्ता मूलरसत्वमत्र भगवत्प्रेम्णीति संस्थापितम् ।
शृंगारादिषु नास्ति भक्तिरसता पार्थक्यसद्भावत
इत्याद्या विषया विचारमहिताः सम्पादिता यत्नतः ॥

११

भेदा भक्तिरसस्य शान्तप्रमुखाः पञ्चैव संवर्णिताः
भावाः स्थायिमुखाश्च तस्य बहवः संदर्शिता भक्तितः ।
गौणा भक्तिरसाश्च हास्यप्रमुखाः सप्तैव प्रोक्ताः क्रमात्
अन्तेऽस्मिन् दिशयानया हि विषयाः प्रासंगिका वर्णिताः ॥

# उपोद्घातः

अथैतस्य मदीयानुसन्धानप्रबन्धस्य "भक्तिरस-विमर्शः" इति नाम्नः परिचयार्थं-मुपोद्घातरूपेण संक्षिप्तमिदं विवेचनमुपस्थाप्यते—

तत्र भक्तितत्त्वस्य नानाविधसम्प्रदायभेदात् शास्त्रकाराणां सिद्धान्तभेदाच्च विवेचन-स्यापि भेदाः स्वाभाविका एव भवन्ति। ततो कस्याप्येकस्य दृष्ट्या सिद्धान्तप्रतिपादनं दुष्करमेव, तथापि मया प्रमुखतया ये भक्तेः रसत्वमङ्गीकुर्वन्ति, तेषामेव दृष्टिः मुख्य-त्वेन व्यवस्थापिता। तदनुसङ्गेन च विभिन्ना विचाराः प्रतिपादयाञ्चक्रिरे।

तत्र प्रथमाध्याये तावत् भक्तिसूत्रं भक्तिशास्त्रं वा समालोच्य ऐतिहासिकविवेचनेन सार्धं भक्तेः स्वरूपमुपवर्णितम्। क्रमेण च वेदेषु आगमेषु रामायणमहाभारतयोरन्येषु पुराणेषु भक्तिधारा कथं प्रवर्तितेति उपदर्शितम्। तदग्रे भक्तिस्वरूपस्यान्वेषणं विधाय विभिन्नाचार्याणां मते भक्तेः प्रभेदाः प्रदर्शिताः। एवमग्रे माध्वचैतन्यादिमतानुसारेण प्रेम्णः परमपुरुषार्थत्वं दर्शितम्।

द्वितीयाध्याये आधुनिकमानसशास्त्रम (मनोविज्ञानम्) वलम्ब्य भक्तिरसस्योपरि कश्चन प्रकाशो निक्षिप्तः। आधुनिकमनोविज्ञानदृष्ट्या मानवस्य एकाकिताया अतृप्ति-तायाश्च निराकरणाय भक्तेरावश्यकत्वं प्रत्यपादि। पाश्चात्यमतखण्डनपूर्वकं मलिन-कामस्य शोधनेन भक्तिप्रेमरूपेण तत्प्रणत्या उज्ज्वलं स्वरूपं च निर्णितम्।

तृतीयाध्याये दार्शनिकदृष्ट्या भक्तिरसस्य विवेचने यत्नः कृतः। तत्र विभिन्न-दार्शनिकदृष्ट्या भक्तिरसस्य समन्वयः कृतः। यद्यपि भारतीयवाङ्मये आस्तिकनास्ति-कादिभेदोपभेदेन सह न्यायः, वैशेषिकः, सांख्यम्, योगः, पूर्वमीमांसा, उत्तरमीमांसा (वेदान्तः) चेमानि षड्वेदसापेक्षाणि तथा चार्वाकः, माध्यमिकः, योगचारः सौत्रान्तिको वैभाषिकः, आर्हतमिति च षड्वेदनिरपेक्षाणि दर्शनानि सन्ति[1], किन्तु सर्वं विहाय

---

१, नास्ति वेदोदितो लोक इति येषां मतिः स्थिरा।
नास्तिकास्ते तथास्तीति मतिर्येषां त आस्तिकाः॥
अवैदिकप्रमाणानां सिद्धान्तानां प्रदर्शकाः।
चार्वाकाद्याः षड्विधास्ते ख्याता लोकेषु नास्तिकाः॥
वेदप्रमाणकानीह प्रोचुर्ये दर्शनानि षट्।
न्यायवैशेषिकादीनि स्मृतास्ते आस्तिकाभिधाः॥

केवलं भक्तिरसस्वरूपविवेचने येषां दर्शनानां साक्षात् परम्परया वा महत्त्वं वर्तते तेषां दर्शनानां दृष्ट्यैव भक्तिरसो निष्पादितः। दार्शनिकदृष्ट्या भक्तिरसस्य स्वरूपनिरूपणे आस्तिकदर्शनेष्वन्यापेक्षया वेदान्तदर्शनस्य, तत्रापि वैष्णवदर्शनस्य महत्त्वपूर्णं योगदानं परिलक्ष्यते, तेनैव सह सांख्य-योग-शैव-शाक्त-तन्त्रदर्शनानामपि योगदानं नातिन्यूनमस्ति।

अत एव तत्राद्वैत-विशिष्टाद्वैत-द्वैत-द्वैताद्वैत-शुद्धाद्वैताचिन्त्यभेदाभेद-सांख्य-योग-शैव-शाक्त-तन्त्रदर्शनानां संक्षिप्तदार्शनिकसिद्धान्तनिरूपणपुरःसरं भक्तिरसस्य स्वरूपं प्रतिपादितम्। भक्तिप्रपत्त्योश्च स्वरूपनिर्शनपूर्वकं तयोश्च भेदोऽपि निरूपितः। भक्तिसाधनायां दाम्पत्यादिनानाविधानां भावानां वैशिष्ट्यमुपयोगित्वं च व्यावर्णितम्। भक्त्यर्थं भगवतः स्वरूपकल्पनाविषयेऽपि शास्त्रीयविचारः प्रदर्शितः। एवं च तत्तद्दर्शनदृष्ट्या यथायथं साक्षात्परम्परया वा भक्तिरसस्य स्वरूपमुपयोगित्वं च निरूपितम्।

चतुर्थाध्याये भरतस्य नाट्यशास्त्रमनुसृत्य तद्व्याख्याकाराणां भट्टलोल्लटाद्यभिनवगुप्तपर्यन्ता व्याख्याभेदाः प्रदर्शिताः। प्राक्तनरसशास्त्राद् भक्तिरसशास्त्रस्य भेददर्शनपूर्वकं भक्तिरसस्वरूपं तदीयस्थायिभावादिकं च निरूप्य भक्तिरसस्य न केवलं शान्तरसाद् अपि तु सर्वेभ्यो रसेभ्यो भेदोऽपि व्यवस्थापितः। प्रसङ्गेन वैदिकवाङ्मयमारभ्य लौकिकसाहित्यपर्यन्तं भक्तिरसस्य स्थितिः प्रदर्शिता। मुख्यगौणभेदेन भक्तिरसस्य द्वादशभेदाः दर्शिताः। एकरसवादोऽनेकरसवादश्चापि निरूपितः। स्वतन्त्रस्य भक्तिरस्य स्थापने विदुषां विचारा अपि उपन्यस्ताः। भक्तिरसस्वीकारे पूर्वपरम्पराभङ्गोऽपि न भवतीति दर्शितम्। भक्ते भावमात्रत्वस्य क्रियाहीनत्वस्यासार्वजनीनत्वस्य निराशः कृतः। भक्तिरसस्य सकलसामाजिकप्रियत्वं सर्वेषां रसानां मूलत्वं चापि व्यवस्थापितम्। एवं तत्तद्रसेभ्यो भक्तिरसस्य भेदः सम्यक् प्रदर्शितः। भक्तेः पञ्चमपुरुषार्थत्वमपि शास्त्रदृष्ट्या निर्णितम्।

यद्यपि भक्तिरसशास्त्रदृष्ट्या भारतीयवाङ्मये आलम्बनरूपेण श्रीकृष्णस्य प्राधान्यमवलोक्यते किन्तु श्रीराम-शिव-शक्त्यादिनामपि तत्तद्भक्तिरसे आलम्बनत्वमस्त्येव। प्रस्तुतनिबन्धे श्रीकृष्णस्याऽऽलम्बनत्वेन तत्र तत्रोपवर्णनं तत्तद्भक्तिरसप्रसङ्गे तत्तद्देवानामुपलक्षणमित्येवावधेयम्।

# कृतज्ञता-ज्ञापनम्

१

गुरुर्मे कवीरो विचारे प्रवीरः, सुशोधोऽयमद्य प्रकाशीकरोति ।
निमित्तं विधत्ते मनो मे सुतुच्छं, दयालुर्मदीयां प्रवृत्तिं विलोक्य ॥

२

न मे कोऽपि यत्नः सुप्रत्नस्य तस्य दया ह्यत्र कार्यं विधत्तेऽभिलाषः ।
मदीयः सुपूर्णः प्रसन्नोऽहमद्य, कृतार्थोऽस्मि धन्यान् गुरून् स्तौमि नित्यम् ॥

३

कृपाभिर्यदीयाभिरद्यास्ति कार्यं सुसम्पन्नमेषोऽस्ति तेषु प्रणामः ।
सदा देयदृष्टिर्भवेयं तथाऽहं महासज्जनानां सुविद्यायुतानाम् ॥

४

न दोषे गुणे वा ममात्रास्ति भारो गुरूक्तानुकारे सदा तत्परस्य ।
कदाचित् भ्रमः स्यात् तदुक्तानुकारे, ततस्ते निवेद्याः क्षमार्थं मयाद्य ॥

५

वाचिकं कायिकं मानसं चापि यत्, सज्जनस्यास्ति सत्पुस्तके मत्कृते ।
यत्नदानं परं ते समे साधवो, वन्दनीया मया सर्वदा सादरम् ॥

६

दयाच्छात्रवर्गेऽपवर्गे त्रिवर्गे विचारः प्रचारः सुशास्त्रस्य यस्य ।
तदाचार्यरत्नं मदीयं पवित्रं सुपाण्डेयवंश्यं सदा संस्मरामि ॥

७

यदाज्ञानुसारं विमृष्टा सुभक्ति यदायत्तबुद्धिस्त्वहं सर्वशास्त्रे ।
गुणी सर्वशास्त्रान्वितो यो वदान्यो गुरोर्मेऽस्तु तस्याधमर्णत्वमेव ॥

८

पाण्डेयान्वयदीपसद्गुणगणालंकारविद्वन्मणिः
शास्त्राभ्यास-प्रचार-पाठन-महादीक्षान्वितो वन्दितः ।
श्रीमत्सन्मुरलीधराह्वयबुधो विद्यासु वाचस्पतिः
साचार्यो मम शोधलेखनविधौ सद्बुद्धिदः स्मर्यते ॥

९

निर्देशने व्यरचि यस्य मया प्रबन्धः सोऽयं गुरुर्गुणयुतोऽप्यथ निर्गुणाख्यः ।
साहित्यशास्त्ररसिको विबुधो वरिष्ठो श्रीमद्द्विजेन्द्रविबुधोऽस्तु हशोर्ममाग्रे ॥

१०

शास्त्रदः सद्गुरुः पूजनीयः स मे, माधवाचार्यनामा बुधः साधुभिः ।
वन्दितो नन्दितो रामसंसेवनात्, भक्तरत्नं सदा संस्मरेयं मुहुः ॥

---

# निवेदनीयं किञ्चित्

कमप्याद्यं गुरुं वन्दे सर्वलोकहितावहम् ।
यत्राभेदेन तिष्ठन्ति जातयश्च मतानि च ॥

नाहं कामपि विशिष्टां वैदुषीमात्मनि वहामि । न च संस्कृतवाङ्मये मम तावन् परिचयो येन च भक्तिमिमां विवेचयितुं सरलतानुभूयेत । न चाहं तादृशभक्तिसम्पन्नो येन सूरदासादिवत् स्वतोऽलौकिकीदृष्टिर्मे स्यात्, तथापि "अतिशय रगड़ करे जो कोई–" इति तौलसिकन्यायेन तत्र तत्राटित्वा सोत्साहं परिश्रम्य गुरून् परिश्राम्य च कृतिमिमां प्रस्तुवन् अस्मि सचेतसां विदुषां समक्षम् ।

बाल्यादेव "भक्तिविषये" किमपि लिखितुमासीन्मे मनः । भक्ता रसिका भवन्ति । तां भक्तिमनुसृत्य मातृ-पितृ-सुतकलत्रादीन् परित्यज्य सकलसुखसाधनानि धनानि सपरिजनानि भवनानि च विहाय वनानि वृण्वन्ति, यदि भक्तौ रसत्वं न स्यात्तदा कथञ्चैतत् सर्वं स्यात्, तस्मादस्ति भक्ती रस इत्यपि मम चेतसि दृढः प्रत्ययो गच्छता कालेनोद्भूतः ।

यदाऽऽचार्यकक्षादौ मया साहित्यस्य लक्षणग्रन्थादौ श्रृंगारादीनामेव रसानां विचारणा, भक्तिरसस्य प्रारम्भकालादेवोपेक्षा च समालोचिता, तदाऽभून्मे मनसि महाश्चर्यं लक्षणकाराणां विषये कश्चनाश्रद्धाङ्कुरलेशश्च ।

विषयेऽस्मिन् जाता मे क्रमशोऽनुसन्दिधित्सा, ततश्चाहमाचार्यपरीक्षोत्तीर्णोऽस्मिन्नेव विषये लिखितुं प्रवृत्तः । प्रवृत्तिश्चेयं वाराणसेयैर्विद्वद्भिः सर्वैरपि प्रशंसितेति ततोऽपि द्विगुणितोत्साहः शोधप्रबन्धमिमं विरचयितुं पूर्णतया संलग्नः ।

परमेशकृपया निर्देशकताप्यस्य ममैव गुरोः श्री द्विजेन्द्रनाथमिश्रस्याऽभूत् । यथावसरं काशीस्थैः सर्वैरपि विद्वद्भिर्विहितसहाय्योऽहं विशेषतः श्रीमुरलीधरपाण्डेयगुरुवर द्वारा समुपकृतः । येषामन्येषाञ्च विशिष्टसहयोगोऽभूत्, तेऽत्र सबहुमानं स्मर्यन्ते ।

मयात्र सर्वेषां भक्तिरससम्बन्धिमतानां समावेशाय प्रयासो विहितः । वस्तुतस्तु सर्वसम्प्रदायेष्वपि भक्तिभावनाया महात्म्यमधिकतया वर्त्तते । न केवलं भारतीयसाहित्ये धर्मे, दर्शने कलायामेव भक्तिभावो दृश्यते, किन्तु वैदेशिकसाहित्यादावप्ययं दृश्यते । वैदेशिकसाहित्यादौ भक्तिरसप्रवेशं दर्शयितुं मयात्र नावसरोऽप्रापि, तथापि यत्र कुत्रचित प्रसंगत इदमपि सूचितमेव ।

*

भक्तिर्नाम तादृशं तत्त्वमस्ति मद्विचारे यया विना राष्ट्रस्य समाजस्य विश्वस्य च स्थितिरपि न सम्भवति । "महनीयविषये प्रीतिर्भक्तिरित्युक्तम्" सा च महत्सु पूर्वजेषु नायकेषु रक्षकेषु वा श्रद्धा कदा नावश्यकी, क्षणं विचार्यतान्नाम देशरक्षणे नियुक्ताः सैनिकाः स्वनायकेऽश्रद्धालवो यदा भवन्ति तदा किं देशस्य सुरक्षा संभवति । जनेषु अयमस्माकं पूर्वजानां देशः सोऽयमस्माभी रक्षणीय इत्येषा भावना यदा न स्यात्तदा का वा दशा स्याद् देशस्य, मातृवाक्ये श्रद्धया एव पितरि विश्वासः, 'पिताऽयमेव मे' इति श्रद्धायाः प्रीतेश्चावश्यकता सर्वत्रैव सर्वदैव भवतीति निश्चितम् ।

निखिलजगदधिष्ठानेश्वरप्रीतिरपि वस्तुतः चेतनाचेतनात्मकजगति पर्यवस्यति । तच्चेत्थम्—न खलु ईश्वरो दूरदेशस्थतयाऽदृश्यतया वा भक्तिविषयीभवति, अपितु सर्वव्यापकतया निखिलचेतनाचेतनात्मकतया च तस्योपासना परमोत्तमा गण्यते । उक्तं च गीतायाम्—"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्न कर्मकृत्—" इति । सर्वे प्राणिनः सरित्समुद्रादयश्चेश्वरशरीरभूता इति सर्वत्र प्रणामो युक्तः इति भागवते प्रोक्तम् । एवञ्चादृश्येश्वरभक्त्या देशस्य को लाभ इत्यादिकुतर्काः प्रध्वस्ता वेदितव्याः । नहि भक्तः शिलादिरूपां मूर्त्तिं प्रीतिविषयां करोति किन्तु सकलचेतनाचेतनात्मकं निखिलाधारं परमात्मानं तत्र भजते । अत एव भक्ता वदन्ति "सीया राम मय सब जगजानी, करौं प्रणाम जोरी जुगपानी" इत्यादि । तस्मात् परमेश्वरभक्तौ देशभक्तिः समाजभक्ति नैतावदेव समस्तविश्वभक्तिरपि समापतति । तदिदं चिन्तितमद्यत्वेऽपि भक्तेः परमावश्यकता लोकोपकारकता च ।

तत्तादाचार्येण स्वानुभवानुसारेण स्वोपास्यानुकूल्येन च भक्तेर्भेदा लक्षणानि च यानि प्रदर्शितानि तेषां सर्वेषां तत्कालोपयोगित्वमहं स्वीकरोमि । तस्मात् तानि मतानि यथाशास्त्रं तथैव निवेदितानि, तेषु न्यूनत्वश्रेष्ठत्वप्रदर्शनचेष्टापि नावश्यकीति मया नाकारि ।

ये भारतीयसम्प्रदायेषु दीक्षामवाप्य भक्तिरसरसिका भवन्ति, ते जनसेवातो विमुखीभूय जडमूर्त्तेरेव सेवां कुर्वन्तः समाजशक्तिं निरर्थयन्तीति इदानीन्तनजनानां कुतर्केषु नाहं श्रद्दधे, यतोहि अहं प्रत्यक्षं जनसेवासु संलग्नान् दीनजनभरणपरायणान् भक्तान् पश्यामि । पुराकालादेव महाराणाप्रताप-शिवाजीप्रभृतिभिरास्तिकैर्भक्तैर्देवाराधकैश्चेयं भारतभूर्मुहुर्मुहू रक्षिता । अस्मिन् युगेऽपि महात्मगान्धिनामकमहापुरुषेण भक्तवरेणैव वैदेशिकायत्तेयं भूः स्वायत्तीकृता । तस्मात् भक्तिसाहित्यस्य विकासः, संरक्षणं संशीलनञ्च परमावश्यकमित्यतिरोहितं भवति ।

प्रबन्धेऽस्मिन् सर्वत्र भक्तेः रसत्वस्थापन एव प्रयासो नास्ति, किन्तु क्वचित् भक्ति-लक्षणानि क्वचिच्च तद्भेदाः कुत्रचित् प्रसंगतो विविधमतानुशीलनादिकञ्चास्ति। तस्मात् प्रबन्धस्यैतस्य "भक्तिविमर्शः" इत्येव नामास्तु इत्यपि मतं केषाञ्चन मित्राणामभूत्, तत्र ते मयैवं प्रत्युक्ता भक्तेः रसत्वस्थापने प्रयत्नोऽस्तु वा मास्तु, भक्तिस्तु स्वत एव रसरूपेति भक्तिविमर्श एव "भक्तिरसविमर्शता"मेतीति। इयाँस्तु विशेषः—अद्यावधिः साहित्यिकैर्लक्षणग्रन्थेषु भक्तेः रसत्वं स्पष्टतया नाङ्गीकारि, अत्र तु महतोल्लासेन तस्यास्तत्ताङ्गीकृतेति।

द्वितीयाध्याये आधुनिकमनोविज्ञानशास्त्रानुसारेण भक्तिरालोचितास्ति। मनोवैज्ञानिकैः खलु मानवानां प्रवृत्तिः प्रयोजनभेदेन षड्धा विभक्ता। ईश्वरादिविषयकभक्तौ प्रवर्त्तने किं वा प्रयोजनं संभवेत् मानवानामिति जिज्ञासामुत्थाप्य सर्वाधिकाऽऽनन्द-प्राप्त्यभिलाषैवात्र मुख्यतः प्रवर्त्तयतीति निर्णयोऽकरि। एतत् प्रसंगे पारिभाषिकशब्दानां संस्कृतानुवादे काठिन्यमभूत्तस्मात् यत्र तत्र स्खालित्यमपि जातमेव स्यादिति मन्ये।

भारतीयदर्शनानां विविधरूपत्वाच्च तृतीयो दर्शनाध्यायो नूनं प्रवृद्धः। भारतीयाऽऽस्तिकदर्शनेषु क्वचिन्न्यूनतया कुत्रचिच्चाधिकतया भक्तिस्थितिरस्त्येवेत्यत्र नास्ति सन्देह-गन्धः। वैष्णवदर्शनानि तु भक्तिगंगाया हिमालयायमानानि सन्तीति विषये न कोऽपि विवदते। अध्यायेऽस्मिन् शङ्कराचार्यादिमते भक्तेः स्वरूपं प्रदर्शयता मया तत्तदाचार्य-सिद्धान्तानां प्रदर्शनचेष्टापि यथावसरं कृतास्ति। यतो हि तदभावे तदीयभक्तिस्वरूपस्य दुर्विज्ञेयत्वप्रसंगात्। शांकरमतेऽपि मोक्षकारणसामग्रीषु भक्तिः स्वीकृतैव। एवमेव शैव-शाक्त-तन्त्र-सांख्ययोगादावपि यथाकथञ्चित् भक्तिः साधिता, तत्रापि भक्तिः स्वीकर्त्तव्येति न विवादावकाशः। इत्थञ्च भारतीयाऽऽस्तिकषड्दर्शन्यां भक्तिर्भक्ति-रसो वा समालोचितः। बौद्धजैनाद्यागमेष्वपि स्वस्वाचार्यादौ भक्तिः यत् किञ्चित् प्रतीकपूजनादिकमस्तीति तदपि विचारणीयमासीत् किन्तु ग्रन्थविस्तारभयाद् न तत्र लेखनी प्रवर्त्तिता।

प्रसंगतः यवन (इस्लाम) दर्शनानुसारेणापि तत् सिद्धान्तनिरूपणपुरःसरं भक्तिरसो निरूपितः।

वस्तुतस्तु चतुर्थाध्याय एव भक्तौ रसत्वं साधयितुं यत्नो विहितः। न केवलं भक्ती रस एवापितु सा सकलरसाङ्कुराणां महाकन्दरूपेत्यपि संसाधितम्। तत्र खलु मया कुत्र मूलरसत्वमिति विचार्य भक्तेरेव मूलरसत्वं साधितमस्ति। नायं भक्तिरसोऽन्यरसेष्वन्त-र्भवति। किन्तु स्वस्मिनन्यानेवान्तर्भावयतीति तदध्यायस्य सारार्थः।

श्रीमद्भिः स्वनामधन्यैः कबीरसाहबैः सामान्यतया सर्वमानवानां निरपेक्षभावेन सेवा कार्या इति उपदेशः कृतः। सर्वान्तर्यामिपरमात्मनः सेवायाम् आदराति-

शयस्तैः प्रदर्शितः । तेषां मतेऽपि अहिंसा नामानिवार्यं वस्तु । कस्यापि प्राणिनो मनसा वाचा कर्मणा दुःखाप्रदाने श्रीकबीरसाहबस्य महानाग्रहोऽभूदिति, ते अन्तर्यामिस्वरूप-परमात्मनो भक्ता इति, तन्मतेऽपि आत्मकल्याणाय भक्तिः स्वीकृतेति तन्मतावलम्बिना मया भक्तिरसो विमृष्टः । धर्मं सम्प्रदायं वा निमित्तीकृत्य कलहायमानान् मानवान् भर्त्सयित्वा सन्मार्गं दर्शयित्वा च तैः यथार्थमानवधर्मस्य प्रचारः कृतः, तत्प्रयासेन साम्प्रदायिकविद्वेषो मनाक् शान्त इव संवृत्तः ।

प्रबन्धस्यास्य विरचने सहयोगिनः श्रीमतः सुहृद्वरस्य मनुदेवभट्टाचार्यस्य परमोपकारं स्मारं स्मारं एतावदेव वक्तुं पारयामि—

पाटवं वाचि शास्त्रेषु पाण्डित्यं हृदि स्वच्छता ।
वैयाकरणमूर्धन्यो भट्टाचार्यो भवेत् सुखी ॥

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये नैपालीप्राध्यापकश्रीजगन्नाथशर्म्मकण्डेल महानुभावस्य सौहार्दमवाप्यैवेयं कृतिः पूर्णतामानीतेति तदुपकारस्य प्रतिविधाने सर्वथा स्वासामर्थ्यं प्रकटयतैवमुच्यते—

येषां सहाय्यप्राप्तिर्मे जाता नौरिव सागरे ।
कण्डेलोपाह्वयान् श्रीमज्जगन्नाथान् स्मराम्यहम् ॥
वेदान्तादिषु निष्णाताः सर्वशास्त्रे कृतश्रमाः ।
अपूर्वप्रतिभावन्तः सन्तस्ते सन्तु पूजिताः ॥

यदा यदा मम बहुकार्यव्यापृततया शोधकार्येऽरुचिरिवोत्पन्ना तदा तदोत्साहप्रदाने-नान्यविधसहयोगेन च येनोपकृतं तं श्रीवल्लभदासशाहमहोदयं प्रति—

वाचि सत्यं सदा यस्य हृदि चैव दयालुता ।
विद्याबुद्धियुतो मित्रं चिरं जीवतु शाह जी ॥

मम विविधकार्यपारवश्यात् मुद्राराक्षसकृपया च यत्र कुत्रचित् स्खालित्यं भवेदे-वेति संशोध्य पठनाय संसूच्य पुनर्मुद्रणे साहाय्यदानाय च भृशमभ्यर्थयामि, यतो हि—

गच्छतः स्खलनं क्वापि, भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ॥

विदुषां वशंवदः
डॉ० कपिलदेव ब्रह्मचारी

# विषयानुक्रमणिका

## भक्तिसूत्रदृष्ट्या भक्तिरसविवेचनात्मकः

पृष्ठाङ्काः

### प्रथमोऽध्यायः १–५३



## मानसशास्त्रदृष्ट्या भक्तिरसविवेचनात्मको

### द्वितीयोऽध्यायः ५५–७२

# दर्शनशास्त्रदृष्ट्या भक्तिरसविवेचनात्मकः

## तृतीयोऽध्यायः

## साहित्यशास्त्रदृष्ट्या भक्तिरसविवेचनात्मकः

ॐ

श्रीसद्गुरवे नमः

# भक्तिरस-विमर्शः

## भक्तिसूत्रदृष्ट्या भक्तिरसविवेचनात्मकः

## प्रथमोऽध्यायः

सर्वविघ्नहरं देवं सर्वसम्पत्करं परम्।
रञ्जकं सर्वलोकानां श्रीरामं प्रणमाम्यहम् ॥ १ ॥

अखण्डं सच्चिदानन्दं पूर्णं चिदचिदात्मकम्।
येन तद्बोधितं तत्त्वं तस्मै श्रीगुरवे नमः ॥ २ ॥

सुकर्म-ज्ञानान्वितभक्ति-योगाः समन्विता येन विना विरोधम्।
तं सद्गुरुं सर्वहिते प्रवृत्तं वन्दे कबीरं कविलोकनाथम् ॥ ३ ॥

अशेष-जन्मार्जित-पापहारिणी
समस्त-शास्त्रोदित-सारधारिणी।
नौकेव संसारसमुद्र-तारिणी
भक्तिर्भवेद् भूजनभद्रकारिणी ॥ ४ ॥

प्रपञ्च-प्रस्तार-प्रशमनपटुर्मोहदलनी
सदामन्दानन्दाम्बुधिसमुदये पूरणतिथिः।
मनोवाप्यां प्रेमाम्बुरुहनिचयोल्लासलसिता
सिता भक्तिर्नित्यं परमरसरूपा विजयते ॥ ५ ॥

प्रभावोऽयं भक्तेर्विलसति सदैव क्षितितले
समे भक्ता मुक्ताः श्वपच-पशु-नीचप्रभृतयः ।
पुनश्चाद्यत्वे वा विविधविधिहीनाः खलु जनाः
कथं न स्वीकुर्युः सकलहितदां भक्तिसरणिम् ॥ ६ ॥

सदालम्बो यस्या हरिरिह सदालम्बनमयो
वनी सा वृन्दाया विलसति रसोद्दीपनपरा ।
उदञ्चद्-रोमाञ्चाञ्चित - तनुरहो कोऽपि रसिको
भवेद् यस्यामेषा जयति हृदि भक्ती रसमयी ॥ ७ ॥

संसाररोगेण चिरं सुतप्ताः कुतोऽपि शान्तिं न परां प्रपन्नाः ।
श्रुत्यब्धिनिर्मन्थनलब्धसारं सन्तः सदा भक्तिरसं पिवन्तु ॥ ८ ॥

अयं ग्रन्थो भक्तेर्विषयमखिलं तत्त्वसहितं
सचेतश्चेतःसु स्फुटयति मुहुः सारवचनैः ।
चतुर्भिः संयुक्तो निरुपमविचारैः प्रकरणै
श्चतुर्दिक्षु स्वीयोऽमलपरिमलोऽस्य प्रसरतु ॥ ९ ॥

किं दानेन सुरार्चया सुरधुनीस्नानेन वाऽनेन किम् ?
किं वा क्लिष्टतपस्ययाऽनुदिनमभ्यस्तेन शास्त्रेण किम् ? ।
हे धीराः शृणुतास्मदीयवचनं चेदिच्छथ स्वं हितम्
हित्वा मोहपरम्परां हि भगवद्भक्तिः सदाऽऽश्रीयताम् ॥ १० ॥

## भक्तेर्वैदिकत्वम्

अथ सम्पूर्णभारतीयमौलिकविचारधाराणां निधिर्वैदिकवाङ्मय एवास्ति। तत एव मौलिकविचारधारा बीजरूपेण प्रत्नाऽपि समये समये देशकालादिभेदेन परिच्छिन्ना सती नूतनरूपेण निःसरति। यथा वैदिकवाङ्मयः कर्मज्ञानयोश्चोद्गमभूमिस्तथैव स भक्तेरपि उत्सभूमिः। एवं सत्यपि केचन वेदेषु स्नेहाधिक्यावेदकभक्तिशब्दस्याभावं वदन्तः ऋचि प्रयुक्तस्य "भक्तये,"[1] इति चतुर्थ्यन्तभक्तिशब्दस्य तु "भक्तये=सम्भजनाय लाभाय" इति वेदभाष्यानुसारं विभागजनितलाभार्थकत्वात् स्नेहाधिक्यार्थकत्वं न प्रतीयते। एवमेव ऐतरेयब्राह्मणे[2], दैवतब्राह्मणे[3], निरुक्ते[4] च विभागार्थ एव भक्तिशब्दो दृश्यते। तस्मादुपास्यविषयकप्रीत्यतिशयसूचको भक्तिशब्दो वेदेषु नास्त्येवेति वदन्ति, नैतत् युक्तिसहम्, भगवद्विषयकप्रीतिसूचकभक्तिशब्दस्यापि श्रुतौ श्रूयमाणत्वात्। तथाहि—"तस्य ते भक्तिवांसः स्याम"[5] इति मन्त्रे भक्तिशब्दो भगवद्विषयकप्रीतिवाचक एव। "महस्ते विष्णोः सुमतिं भजामहे"[6] इत्यत्रापि भक्तीत्यानुपूर्व्यभावेऽपि स्नेहातिशयरूपोऽर्थप्रतीयत एव। एवञ्च शब्दतोऽर्थतश्च भक्तिर्वेदे वर्तत एवेति निश्चितम्। एवमेव सामवेदे प्रतिपादितं यत्—भक्त्या परमात्मानमाश्रित्य मर्त्याः सर्वबन्धनेभ्यो मुच्यन्ते इति।[7] इत्थञ्च परिज्ञायते वैदिकवाङ्मयेऽपि भक्ताचार्यैः प्रयुक्तेऽप्यर्थे भक्तिशब्दो लभ्यते, एतत् सर्वं भक्तिरसस्य वैदिकत्वमिति प्रकरणे विवेचयिष्यते।

अभ्युपगमवादेन साक्षात् भगवत्-प्रीत्यर्थक-भक्तिशब्दस्य वेदे प्रयोगाभावे स्वीकृतेऽपि तत्र भक्तिभावनाप्राचुर्यात् भक्तेरवैदिकत्वं नाशङ्कनीयम्। वैदिकमन्त्रेषु

---

१. ऋग्वेदसंहितायाम् ८।२७।११।

२. ऐतरेयब्राह्मणे ३।२० तथा ७।४ सातवलेकर-सम्पादिते—पृ. ४६५

३. दैवतब्राह्मणे ३।२२

४. तिस्र एव देवता इत्युक्तं पुरस्तात् तासां भक्तिसाहचर्यं—
व्याख्यास्यामः। अथैतानि अग्निभक्तीनि, अयं लोकः,
प्रातः सवनम्, वसन्तः, गायत्री।

५. अथर्ववेदे ६।७९।३।

६. ऋग्वेदे १।१५६।३। पृ. ११८

७. 'उपास्यतां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धनः।'
सामवेदे अग्निवेश्यशाखायाम्। पृ. १३१

देवानां विषयेऽतीवरमणीया हृदयस्पर्शिनी स्तुतिर्विद्यते, यया स्तुत्या अनायासेन तत्र स्तुतिकारकाणां हृदयेऽनुरागातिशयोऽवश्यमेव विज्ञायते, यतो हि चेतसि भक्त्यभावे तादृशानां मधुरभावपरिपूर्णानां स्तुतीनां बन्ध्यापुत्राणामिव दुर्लभत्वं स्यात्। वेदेषु प्रार्थनाकाले साधकर्षिः परमात्मना सह जन्य-जनक-रक्ष्य-रक्षक-सेव्य-सेवक-भर्तृ-भार्यादि-विविध-सम्बन्धं स्थापयति[1]। यथा "जाया पतिमालिङ्गति तथैव मम बुद्धिरिन्द्रनामधेयं देवमालिङ्गति" इत्यर्थके मन्त्रे[2] तु दाम्पत्यविषयक-शृङ्गाररयुक्तभावना दृश्यते। "कुह-स्विद् दोषा"[3]—इति मन्त्रे काक्षीवतीघोषानाम्न्यर्षि अश्विनीकुमारौ पृच्छति—"भो अश्विनीकुमारौ! युवां रात्रौ कुत्र निवसतः, यथा विधवा स्वदेवरं स्ववशे करोति तथैव युवां कस्याः प्रेमपाशेन बद्धौ स्तः" इति। सर्वोऽप्ययं प्रसंगो भक्तेर्वैदिकत्वसाधकः।

यज्ञेषु प्रधानदेवता अग्निर्भवति, तेनैव यज्ञस्य सम्पादनं जायते। अग्निर्न केवलं भयाद् रक्षकरूपेणैव वेदे वर्णितोऽस्ति अपि तु स माता-पित्रादिरूपेणापि वर्णितोऽस्ति[4]। एवमेवेन्द्रोऽपि मातापितृरूपेण वर्णितः[5]। पुनरग्रे इन्द्रः पितृष्वपि श्रेष्ठः प्रतिपादितः[6]। एवं च तत्र वैदिकवाङ्मये मघवा महाबलिष्ठः परमैश्वर्यसम्पन्नः शत्रुविनाशकः आर्याणां संरक्षकः सर्वप्रधानदेवोऽस्ति। स दस्युदमनाय आर्याणां सततं साहाय्यं करोति। अतस्तेन सह अलौकिकदृष्टिर्महर्षिः प्रोक्तं मधुरानुरागसम्बन्धं स्थापयति। तत्र केवलं भक्तिरेव कारणम्। ये साधका अग्निमिन्द्रं च मातापित्रादिरूपेण स्वीकुर्वन्ति तेषां हृदये भक्तिरवश्यमेव भवितव्या।

एवमेव वरुणविषयकस्तुतिष्वपि भक्तेः प्राधान्यं वर्तते। देवेषु वरुणदेवस्य माहात्म्यं बाहुल्येन वर्णितमस्ति। वेदे सोऽकारणकरुणावरुणालयः परमदयालुः निष्पक्षो नियन्ता ऋतस्य संचालको जनकश्च वर्णितः। प्रार्थयिता ऋषिरपराधानां क्षमार्थं कल्याणार्थं च तं प्रार्थयते। स ऋषिभ्यः शिवं प्रयच्छति। इत्थञ्च दृश्यते केषुचित् मन्त्रेषु गूढतया अन्येषु च स्पष्टतया भक्तिभावो वर्णितः।

शाण्डिल्यभक्तिसूत्रे "भक्तिः प्रमेया श्रुतिभ्यः"[7] इति सूत्रमस्ति। अस्य "श्रुतितो भक्तिर्ज्ञातव्ये"त्यर्थो भवति। श्रुतौ भक्तेरभावे सूत्रमिदं व्यर्थमेव स्यात्। एतदपि भक्तेर्वैदि-

१. पुराणविमर्शे पृ. ४३१ तथा भागवतसम्प्रदाये पृ. ६४
२. ऋग्वेदसंहितायाम् १०।४३।१, पृ. ६६२।
३. ऋग्वेदसंहितायाम्—१०।४०।२, पृ. ६६०।
४. ऋग्वेदसंहितायाम् ६।१।५
५. ऋग्वेदसंहितायाम् ८।९८।११।
६. ऋग्वेदसंहितायाम् १४।१७।१७।
७. शाण्डिल्यभक्तिसूत्रे—१।२।६

कत्वे स्पष्टं मानम्। एतत् सूत्रस्य व्याख्यानावसरे टीकाकारनारायणतीर्थैर्भागवत-प्रतिपादितश्रवणादिभक्तिप्रकाराणां समर्थका मन्त्रा उदाहृताः प्रसंगवशात्। एतदनुसारं वेदे न केवलं भक्तिसामान्यस्य, अपि तु भक्तिविशेषभूतश्रवणादीनामप्युल्लेखोऽस्तीति तत्र भक्त्यभावो न भावनीयः। प्रसंगादत्रापि नारायणतीर्थोद्धृतास्तत्तद्-भक्तिप्रकारनिरूपकवेदमन्त्रा उद्ध्रीयन्ते—

तत्रादौ भक्तिसामान्याभिधायकत्वेन "तमु स्तोतारः[1] पूर्व्यं—" इत्यादिको मन्त्र उदाहृतः। अस्य च मन्त्रस्य भक्तिपरकता वस्तुतो वर्त्तत एव। तैश्च टीकाकारैः समीचीनया रीत्या मन्त्रममुं व्याख्याय भक्तिपरकताऽस्य निर्णीता। अस्य टीकाकारसम्मतो वास्तविकश्चायमर्थः—"( हे जनाः ) जगत्कारणस्य वेदान्तवेद्यस्य परमात्मनो यथामति स्तुतिं कुरुत, तेन च जन्मसमाप्तिरूपं फलं भविष्यति। पुनरपि जननं पुनरपि मरणमित्यादिरूपं भवदुःखं न भविष्यतीत्याशयः। स्तुतौ सामर्थ्याभावेऽपि तस्य नामैव गीयताम्। हे विष्णो! वयं तु सच्चिदानन्दघनविग्रहस्य तव प्रेमलक्षणां सेवां कुर्मः" इति। अग्रे टीकाकारः स्वग्रन्थे लिखति 'अत्र च तमु स्तोतारः'—इत्युपक्रमात् 'भजामहे' इत्युपसंहाराच्च द्वादशविधायाः फलभक्तेर्नवविधायाः साधनभक्तेश्च कर्त्तव्यत्वमवगतमिति। सम्यगेवैतत्। एवं समासतो वेदे भक्तिसामान्यप्रतिपादनमभिधाय श्रीनारायणतीर्थः श्रवणादीन् पार्थक्येनाभिदधती श्रुतिरुपस्थापयति। तथाहि—मन्त्रः "यः पूर्व्याय वेधसे"[2] इत्यादि। अस्यायमर्थः—जगत्कारणभूत-नित्यनूतन-सर्वश्रेष्ठ-श्रीपति--विष्णवे यो भक्तः स्वकीयं सर्वं वस्तु समर्पयति, तन्नाम्नः श्रवणं कीर्त्तनं वा करोति सोऽवश्यं परमात्मानं प्राप्नुयादिति। एवञ्च मन्त्रोऽयं श्रवण-कीर्त्तनस्वकीयसर्वसमर्पणरूपभक्ति-भेदत्रितयप्रतिपादकः।

एवमेव "विचक्रमे पृथिवीमेष[3] एता" मित्यादिमन्त्रे स्मरणकीर्त्तनयोः प्रतिपादनमस्ति। अस्य मन्त्रस्यापि टीकाकारसम्मतो यथार्थोऽयमर्थः—"यो विष्णुः स्वमननशीलदेवगणाय तदीयं निवासस्थानं स्वर्गमसुरेभ्यः प्रतिदातुकामः त्रिविक्रमरूपं धृत्वा वामनावतारे दैत्येभ्य आच्छिद्य स्वर्गसाम्राज्यं देवेभ्यः प्रायच्छत्। कृष्णावतारे च यः कीर्त्तनकारकान् पार्थादिभक्तान् विस्तृतराज्यप्रदानेन तोषयामास" इति। एवमत्र मन्त्रे भगवतो भक्तवात्सल्यमपि सूच्यते।

---

१. तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन।
आस्य जानन्तो नामचिद् विवक्तनमहस्ते विष्णो सुमतिं भजामहे॥
ऋग्वेदसंहितायाम् १।१५६।३, पृ. ११८

२. ऋग्वेदसंहितायाम् १।१५६।२

३. ऋग्वेदसंहितायाम् ७।१००।४

एवमेव पादसेवनरूपभक्तिप्रतिपादनमपि "यस्य त्री पूर्णा–" इत्यादिके मन्त्रेऽस्ति। यतो हि तत्र "त्रिविक्रमस्य विष्णोस्त्रिषु स्थानेषु क्षिप्तत्वेन त्रित्वयुक्ताः पादाः स्वाश्रितान् सर्वफलप्रदानेन हर्षयन्ति" इति भगवत्पादवर्णनमस्ति। एवं पादवैशिष्ट्यवर्णनं तत्सेवार्थमेवेत्ययं मन्त्रः पादसेवनप्रतिपादक इति सिद्धम्।

विष्णूद्देश्यकदाने, तत्पूजने,तत्परिचर्यायाञ्च "नू मर्तो दयते सनिष्यन्–"[2] इत्यादिश्रुतिः प्रामाण्यमावहति। अस्यार्थः–यो मानवो बहुभिः कीर्त्यमानं विष्णुमुद्दिश्य ददाति सुमनसा त यजते परिचरति च सः सर्वं फलमवाप्नोतीति।

दास्येऽपि "त्रिदेवः पृथिवीमेष एता" मित्यादिश्रुतिमूलभूता वर्तते। अत्र स्वामित्वेन विष्णोः प्रार्थनं स्वस्य दासत्वाभ्यर्थने पर्यवस्यतीति दास्यरूपा भक्तिरपि वेदे प्रोक्तैव।

नैतावदेव विष्णुचरणोदकग्रहणादावपि श्रुतेः प्रामाण्यमुदाहृतं नारायणतीर्थैः तत्र "तदस्य प्रियमभिपाथा–" इत्यादि-श्रुतिरुदाहृता। इयञ्च श्रुतिः पादोदकग्रहणे सख्ये च मूलभूताऽस्ति। रुच्यं तज्जलमहं पिबेयम्, यत् पानेन भगवन्तं प्राप्तुमिच्छन्तो नरा हर्षिता भवन्ति, एवं भगवच्चरणजलपाता पुरुषो भगवतो बन्धुर्भवति" इत्यस्यार्थः। श्वेताश्वेतरोपनिषदि "यो ब्रह्माणं विदधति पूर्वं–" इत्यादिमन्त्रे आत्मनिवेदनरूपा शरणागतिभक्तिः स्पष्टमुक्तेति उदाहरता नारायणतीर्थेन भक्तेर्वास्तविकं वैदिकत्वं संसाधितम्। यद्यपि मन्त्राणामेषां व्याख्यान्तरमपि सम्भवति तथापि नैतावता भक्तिपरकव्याख्यानस्यानौचित्यं भवति। तत्र शब्दानां तादृशार्थप्रतिपादने नितरां समर्थत्वात्। प्रोक्तमन्त्राणां प्रतिपदं व्याख्यानं तु शाण्डिल्यभक्तिसूत्रस्य भक्तिचन्द्रिकातो ज्ञेयमिति।

यद्यपि ब्राह्मणभागस्य कर्म एव मुख्यो विषयस्तथापि यत्र तत्र भक्तिप्रतिपादनमस्त्येव तत्रापि। यज्ञादिकर्मस्वपि श्रद्धा विधीयते। "श्रद्धाविरहितं यज्ञं तामसं परिचक्ष्यते"[4] इत्यादिस्मृत्या च कर्मसु श्रद्धाऽऽवश्यकी। तया विना कृतं कर्मादृष्टमुत्पादयितुं न प्रभवति। श्रद्धा च भक्तिरूपैव भवति।

वस्तुतस्तु वैदिककर्मापि परमात्माराधनरूपमेव। स्वेष्टदेवस्याराधनरूपतायामेव यज्ञादिकर्मसु श्रद्धोत्पत्तिसंभवः। श्रीरामानुजाचार्यस्वामिभिस्तु ब्रह्मसूत्रभाष्ये सर्वकर्मारा-

---

१. ऋग्वेदसंहितायाम् १।१५४।४

२. ऋग्वेदसंहितायाम् ७।१००।१

३. ऋग्वेदसंहितायाम् ७।१००।३

४. गीतायाम् १७।१३

ध्यत्वं भगवतो नारायणस्यैवेति सोपष्टम्भमुपपादितम्[१]। सकलजगन्नियन्तारं जगद्व्यापिनं परमेश्वरं स्वकर्मणाभ्यर्च्यैव मानवः सिद्धिमाप्नोति[२]। भगवानेव सर्वयज्ञानां भोक्ता प्रभुः[३]। विष्णुपुराणेऽपि "यज्ञैस्त्वमिज्यसे नाथ सर्वदेवमयाच्युत। हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्"[४] इत्युक्त्या एकस्यैव परमात्मनः सर्वकर्माराध्यत्वमभिहितम्। [५]"यज्ञभुगि"ति विष्णोरेव नाम। श्रीभागवते च–"तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः। नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः॥"[६] इत्यादिना भगवत्सेवनरूपकर्मणामेव वास्तविककर्मत्वमुक्तम्। ईश्वरसेवनबुद्धया स्वकर्त्तव्य-पालनरूपेण यज्ञादिनित्य-नैमित्तककर्माणि कर्त्तव्यानि तत्र फलयाचना कर्तृत्वाभिमानश्च त्याज्यः। सम्यगनुष्ठितकर्मणां सिद्धिर्भगवति प्रसन्ने सत्येव मन्तव्यः। "कर्माण्येकं तस्य देवस्य सेवा" इत्यादि च प्रसिद्धमेव।

"मत्कर्मकृन्मत्परमः," "ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः", 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः," "मयि सर्वाणि कर्माणि सन्यस्य–" इत्यादिगीता-वाक्यान्यपि कर्मणामीश्वरार्पणरूपतामापादयन्ति। किं बहुना कृष्णस्तु लौकिककर्मणा-मपि "यत्करोषि यदश्नासी" त्यादिना भगवदर्पणं समनुते। भागवतगीतयोरयं भावो विशदतयोपपादितः।

ईश्वरसेवनबुद्धया कर्मसु शास्त्रीयेषु विहितेषु तैः परमात्मा तुष्यति। ईश्वर-भावरहितशुष्ककर्ममात्रानुष्ठाने तु क्षणिकानां दानादिकर्मणां फलप्रदानकालेऽसत्वात् कथं ततो फललाभः। ततोऽदृष्टोत्पत्त्यभ्युपगमेऽपि तस्यापि जडत्वेन व्यवस्थितया फलप्रदानासंभवः। श्रुतिस्मृत्युदितसत्कर्मभिः परमेश्वरः प्रीयत इत्यभ्युपगम एव सर्वापि व्यवस्था साधूपपद्यते। तस्मात् "वेदे कर्मणां प्राधान्यमस्ती"ति कथनस्य यथार्थत्वेऽपि तत्र भक्ते-रप्राधान्यमभावो वा नैव सिध्यति। अतः परमेश्वराराधनरूपत्वेन लब्धसत्ताककर्मप्रति-पादकभागस्यापि भक्तिप्रतिपादकत्वस्याव्याहतत्वमेव। "यज्ञेन[७] यज्ञमयजन्त देवाः" इत्यादिमन्त्रेऽपि द्वितीययज्ञशब्दः परमात्मपरो वर्तते। देवा यज्ञेन कर्मणा परमात्मा-राधनरूपेण यज्ञमीश्वरमयजन्तेत्यस्यार्थः। एवञ्च वेदे कर्मप्रतिपादकस्थलेऽपि भक्तिरस्त्येवेति तत्र भक्तिप्रतिपादनाभावप्रतिपादनं स्ववेदानभिज्ञत्वज्ञापकमिति नाधिकं तन्यते।

---

१. ब्र. सू. भा. २।१।१, अ. २, अधि. १, सू. १

२. गीतायाम् १८।४६

३. गीतायाम् ९।२४

४. विष्णुपुराणे ५।२०।९७

५. विष्णुसहस्रनाम्नि (महाभारते)

६. भागवते ४।३१।—६

७. पुरुषसूक्तमन्त्रः १६

वेदे [1]पूर्वकाण्डेनेश्वराराधनरूपो धर्मो वर्णितः। उत्तरब्रह्मकाण्डेन च पूर्वकाण्डोक्ताराधनरूपधर्माराध्यं ब्रह्माभिधीयते। अत एव वेदस्य पूर्वापरभागयोः संगतिः। पूर्वभागस्य ब्रह्मसम्बन्धरहितं कर्मैव प्रतिपाद्यमुत्तरभागस्य तु कर्माविषयब्रह्मैवेति कथने भागद्वयस्य परस्परं विरोधादन्यतरस्यापि प्रामाण्यं न स्यात्। तस्मात् वेदोक्तकर्माणि परमेश्वराराधनरूपतयैव लब्धसत्ताकानीति सिद्ध्यति। एवञ्च कर्मप्रतिपादकवेदवाक्येषु परमात्मविषयिणी भक्तिर्निगूढास्तीति स्वतः सिद्धं वस्तु न निगूहनीयम्।

अपि च यो ह्याचारो धर्ममोक्षकामैरर्थकामानपेक्षैरपगतमदमानैर्विशिष्टैः शिष्टैराचरितस्तत्रेदानीं स्पष्टवेदप्रमाणस्यानुपलम्भेऽप्यविगीतशिष्टाचारविषयत्वे श्रुतिरनुमेया, श्रुतयो हि बह्व्यः कालदैर्घ्यात् विलुप्तेति न विवादास्पदतामाटीकते।

तत्रैव लुप्तवेदवाक्येषु स्मृतीतिहासपुराणोक्तस्य शिष्टैरनुष्ठितस्य सदाचारस्य मूलं कल्प्यते। यथाऽष्टकाश्राद्धादिविषये। इदानीं श्रूयमाणश्रुतिभिः सह विरोधाभावे प्रोक्तरीत्या वैदिकत्वसिद्धिर्भवत्याचारादीनाम्। इदञ्च मीमांसकैरप्यनुमतम् "विरोधे त्वनपेक्षं स्यादसति विरोधे ह्यनुमानम्" इति सूत्रद्वारा। श्रुतिस्मृत्योर्विरोधेऽसति स्मृतिमूलभूतवेदभागस्यानुमानं भवतीत्यत्राभिहितम्। तस्मादभ्युपगमवादेनेदानीं श्रुतायां श्रुतौ स्मृत्यादिप्रोक्तभक्तिभेदानामभावे स्वीकृतेऽप्येतन्मूलभूतवेदांशस्य कल्पयितुं युक्तत्वाच्च वैदिकत्वं भक्तेः सुस्थितमेव भातीति।

वेदे भक्तिर्नास्तीति वदन्तोऽप्याधुनिकास्तत्रार्चनवन्दनादिरूपभक्तिनिषेधं तु न प्रदर्शयितुं क्षमन्ते। निषेधाभावमात्रेण शिष्टाचारानुमितश्रुतिविषयत्वं भक्तेः साधयितुं शक्यते। यथा "समाप्तिकामो मङ्गलमाचरेदि"ति कार्यादौ मङ्गलस्य कर्त्तव्यतोपदेशिका श्रुतिः स्मृत्या शिष्टाचारेण चानुमीयते। तस्या रीतेरत्र न दण्डाघातः सर्पमारो वा।

नैतावदेवापितु वेदस्य कर्मोपासनाज्ञानात्मिका त्रिकाण्डी प्रसिद्धा। तत्रोपासनाकाण्डमिति काण्डमेकं स्वतन्त्रमस्ति। तत्र च देवतानामुपासनं विधीयते। उपासिता देवता उपासकान् तदभीष्टफलैर्योजयन्ति। उपासनानामुपास्यविषयेऽत्यन्तानुरागपूर्णचिन्तनरूपतेत्यत्र न विवादावसरः। उपास्यश्च महनीयः स्वरूपगुणविभूतिभिः श्रेष्ठ एव भवति नान्य इत्यत्रापि न विरोधगन्धः। महनीयविषये प्रीतिर्भक्तिरिति प्रसिद्धमेव। एवञ्चोपासनं भक्तिरूपतामेवैति[2]। उपास्योपासकभावः सेव्यसेवकभावाभिन्न एव। सेवा-भक्त्युपासनादिशब्दानामविशेषेण तत्र तत्र प्रयोगदर्शनात्। तस्मादुपासनाकाण्डं

१. द्रष्टव्या—वेदान्तदेशिककृता शतदूषणी ऐकशास्त्र्यसमर्थनवादः।

२. द्रष्टव्यम्-श्रीभाष्यम्-अ १, अधि.१

पूर्णरूपेण भक्तिपरकमिति। एवञ्च वेदे भक्तिर्नास्तीति कथनस्य क्वावसरः ? स्वयमेव विभावयन्तु निपुणाः।

अन्यच्च केचन संहिताब्राह्मणोपनिषत्स्वपि सर्ववेदप्रत्ययन्यायेन भक्तेरेव मोक्षसाधनत्वमिति विवेचयन्ति।

उपनिषदि प्रोक्ता मोक्षार्थिका दहरभूमादिद्वात्रिंशद्ब्रह्मविद्या सर्वापि भगवदुपासनारूपा एव। उपनिषदः प्रायो विद्यानिरूपणे तन्माहात्म्यवर्णने च व्ययीभवन्ति। तस्मादुपनिषदि मुख्यतया सेव्यसेवकभावसापेक्षा भगवदुपासनैव वर्णितेति सिद्धौ, ज्ञानकाण्डत्वेन प्रसिद्धोपनिषदामपि भक्तिपरत्वमेवान्ततोऽवसीयते। "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति श्रुतिः[१] "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"। इत्युक्तदर्शनस्थाने स्मृतिं स्थापयन्ती, स्मृतिदर्शनयोरभेदम्, स्मृतेरेव सर्वबन्धनिवारकत्वञ्च व्यञ्जयति। छान्दोग्योपनिषदि "ब्रह्मसंस्थोऽमृतत्वमेति" इत्युक्तम्। तदेवादाय च शाण्डिल्यभक्तिसूत्रेण "तत्संस्थस्यामृतत्वोपदेशात्" इति सूत्रितम्। तत्र संस्थाशब्देन च भक्तिर्गृहीता। सम्यक् स्थितिरेव संस्थेत्युच्यते समीचीना निष्ठेति यावत्। श्रद्धास्पदे विषय एव निष्ठा भवितुमर्हति। श्रद्धया प्रेमपूर्वकमनुचिन्तनमेव भक्तिः। एवं ब्रह्मणि भक्तियुक्तस्य मुक्तिरित्युक्तं भवति छन्दोगानां प्रकृतमन्त्रे।

कठोपनिषदि भक्तिभावना स्पष्टरूपेणोपलभ्यते। तत्राऽऽत्मप्राप्तेरुपायान् दर्शयन्ती श्रुतिः प्रतिपादयति यत् "अयमात्मा न वेदाध्ययनेन, न वा मेधया, न वा श्रवणेनापि प्राप्यः, अपि तु सः स्वानुकम्पया भगवान् यं साधकं स्वयमेव स्वीकरोति, तेनैव साधकेन प्राप्यः, तदर्थमेव आत्मा स्वां तनुं समर्पयति[२]" इति। सारांशोऽयमयमात्मा परमात्मनैव लभ्य इति। अत्र मन्त्रेऽनुग्रहरूपाया भक्तेः स्वरूपमुक्तं वर्तते। अपि च लौकिकालौकिकसुखविषयकभावनारहितः साधकः जगन्नियन्तुः प्रसादेनानुग्रहेण वा स्वात्मनो वैशिष्ट्यं पश्यति, दुःखादिरहितश्च भवतीत्यर्थोऽपि तत्रैव "अणोरणीयान् महतो महीयान्" इत्यादिमन्त्रे प्रतिपादितः। भक्तिमार्गे प्रसादस्य महत्त्वमधिकं विद्यते। तत्र भगवतोऽनुग्रहेणैव भक्तस्य मनोरथः सिध्यति। "पोषणं तदनुग्रहः[३]–" इत्यत्र भागवते तत्प्रसादः पोषणशब्दपर्यायत्वेन निगदितः। अत एव तदाश्रितं श्रीवल्लभाचार्यमतं पुष्टिमतमित्याख्यातम्।

---

१. छान्दोग्योपनिषदि—६।२६

२. नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम्॥ क. उ. १।२।२४

३. स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः।
मन्वन्तराणि सद्धर्म ऊतयः कर्मवासना॥ भागवते २।१०।४

श्वेताश्वेतरोपनिषदि तु ज्ञान-तपस्यादिकं विनाऽपि केवलेनैव भगवदनुग्रहेण सिद्धिं प्राप्नुवन्ति साधका इत्युक्तम्[1]। अस्यामुपनिषदि भक्तेः सर्वातिशायिमहत्त्वं वर्णितम्। अन्यमन्त्रे च तत्रैवोक्तम् "यथा साधकस्य भक्तस्य भगवति पराभक्तिरावश्यकी तथैव गुरावपि सा भक्तिः कर्त्तव्या"[2] इति। उभयत्र भक्तौ सत्यामेव वेदोक्तार्थप्रकाशो भवतीति। श्रीरामानुजाचार्यादिवैष्णवसम्प्रदाये भक्तावसमर्थानां कृते तद्भेदभूतप्रपत्तेर्विधेयता वर्णिता। भगवत एवोपायत्वमुपेयत्वञ्चाभ्युपगम्यत इति स्वीक्रियते। तत्र शरणागतं भक्तं स्वयमेव भगवान् मृत्युसंसारसागरात् समुद्धरति। अत्रैव "यो ब्रह्माणं विदधाति पूर्वं—" इत्यादिमन्त्रे "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति कथनेन शरणागतेर्मोक्षसाधनत्वमुद्घोष्यते।

एवं च सच्चिदानन्दस्य परमानन्दस्वरूपस्य भगवतोऽहैतुक्यानुकम्पया एव भक्ताः संसारसमुद्रात् पारं यान्तीति सिद्धम्। इत्थञ्च सिध्यति कर्मज्ञानयोरिव भक्तेरपि उद्गमभूमिर्वैदिकसंहितैवेति। वेदस्य त्रिपथगाया इव कर्म-ज्ञान-भक्तिरूपं धारात्रयं प्रवहति। वस्तुतः सर्वेषां पुरुषार्थसाधकानां जन्मस्थली वेद एव विद्यत इति नास्ति विचिकित्सालेशोऽपि[3]।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं यत् भक्तितत्त्वं न केवलं संहितासु एव प्राप्यते, अपि तु ब्राह्मणभागेष्वऽपि प्राप्यते।

## आगमेषु भक्तितत्त्वम्

भारतीय-वाङ्मये आगमानामन्यूनं महत्त्वं वर्तते। भक्तिमार्गे पाञ्चरात्रप्रभृत्यागमानां विशिष्टं स्थानं विद्यते। सर्वेऽपि वैष्णवा आगमापरनामधेयपाञ्चरात्रादिसंहितानां परमप्रामाण्यमङ्गीकुर्वन्ति। आगमेषु भक्तेर्भेदा विस्तरेण वर्णिताः। तत्र पाञ्चरात्रसंहितायां ज्ञान-योग-क्रिया-चर्याणां भेदेन चत्वारः पादा विद्यन्ते। तत्र ज्ञानपादे ब्रह्म-जीव-जगत्सम्बन्धिदार्शनिकसिद्धान्ताः, योगपादे यौगिकसिद्धान्ताः, क्रियापादे मूर्तिमन्दिरादीनां निर्माणविधिः, चर्यापादे मूर्तिस्थापनं पूजाविधिश्च प्रतिपादितः। किन्तु तत्र क्रियापादचर्यापादावेव संहितायाः प्रधानविषयौ। यावद्यावधि-वैष्णवसम्प्रदाये महता प्रयासेन गृहीतौ स्तः। वल्लभसम्प्रदाये राधावल्लभसम्प्रदाये वा पूजायां चर्यापादस्य प्राधान्यं वर्तते। तत्र केचन विद्वांसः पाश्चात्यशिक्षाविष्टबुद्धयस्तु बहुव्ययसाध्यमूर्त्तिनिर्माणे विलासपूर्णपूजनप्रकारे च पाञ्चरात्रोक्ते यवनकालिकवैभवविलासस्य प्रभावोऽस्तीति मन्यन्ते। तत्तु समीचीनं नास्ति, यतो हि चर्यापादस्य वैदिकसंहितायामेव विशदवर्णनं विद्यते। अग्रे च सैव वैदिकी धारा पाञ्चरात्रादिरूपेण प्रवहतिस्म।

---

१. श्वेताश्वेतरोपनिषदि—६।२३

२. श्वेताश्वेतरोपनिषदि—६।१८

३. द्रष्टव्यम्—कल्याणपत्रिकायां भक्त्यङ्के पृ. ४७,४८, ५२

एवमेव जयाख्यसंहितायामपि प्रकारान्तरेण मूर्तिपूजनस्य स्वरूपं समुपलभ्यते। जयाख्यसंहितायाः समाध्युपायः, मन्त्रोपायश्च द्वौ भेदौ, तत्र मन्त्रोपायः समाध्युपायतः श्रेष्ठः, यतो हि स विष्णोः साक्षात् शक्तिस्वरूपमेव। तस्य प्रादुर्भावः सर्वप्रथमं नादरूपेण जायते, यः केवलं महायोगिभिरेवानुभूयते। ततः परं स विन्दुरूपेण भवति। नादविन्दुभ्यां विष्णोर्नामरूपेऽभिव्यज्येते। तौ च निर्गुणोपासनायामतिशयेन समाद्रियेते। सगुणोपासनायां तु नादस्यैव मन्त्ररूपेण समादरः प्रसंगादिदमुक्तम्। पाञ्चरात्रागमतोऽपि प्रपत्तिरूपा भक्तिधारा प्रवहितेति। प्रपत्तिरूपाभक्तिस्तु पाञ्चरात्रे विशदतया वर्णिता[1]। प्रपत्तिशास्त्रस्य मर्मज्ञौ औपगायनकौशिकौ विद्येते इति प्रतिपादितं जयाख्यसंहितायाम्[2]।

अहिर्बुध्न्यसंहितायां षड्विधा शरणागतिः प्रतिपादिता, सैव विशिष्टाद्वैतमते प्रपत्तिरूपेण श्रीवल्लभाचार्यमते च पुष्टिरूपेण प्रतिपादिता[3]। इदमेव माधुर्योपासकानां मधुरभक्तेः पूर्वरूपम्। तत्र प्रभोः शक्तिर्भगवतोऽभिन्नरूपेण स्वीकृता। सा च श्रीलक्ष्मी-कमला-रति-शिवा-नारायणी-विष्णुशक्त्यादिनानारूपेण संज्ञिता। पाञ्चरात्रान्तर्गतज्ञानामृतसंहितायां भगवत्सेवारूपेण स्मरणम्, कीर्त्तनम्, प्रणतिः, पादवन्दनम्, अर्चनम्, समर्पणादिषड्विधयः प्रतिपादिताः। पाञ्चरात्रसंहितायां भक्तिद्वारा ज्ञानकर्मणः समन्वयो विहितोऽस्ति। यद्यपि तत्र ज्ञानकर्मणोरुपरि विचारः कृतस्तथापि मुख्योद्देश्यं तु तत्र भक्तेर्माहात्म्यप्रतिपादनमेवास्ति। अत एवाहिर्बुध्न्यादिसंहिता विशिष्टाद्वैतमते वेदवदेव समाद्रियते।

वैखानसागमेऽपि नामान्तरेण भक्तिः प्रतिपादितैव। तत्र मरीचिमतानुसारेण जपाग्निहोत्रार्चनध्यानादिरूपेण भक्तिश्चतुर्धा वर्णिता। यद्यपि तत्र प्राधान्यं वैदिककर्मकाण्डस्यैव दृश्यते तथापि वैदिकमर्यादायुक्ता भक्तिरपि निष्पादितेति नात्र सन्देहावसरः[4]। एवमेवाभिसहितायां मूर्तामूर्तरूपेण द्विप्रकारिकोपासना निरूपिता। अग्नौ आहुतिप्रदानेन भगवदुपासनममूर्त्तम्, विग्रहादिसेवनं मूर्त्तोपासनमिति। इमां पूजापद्धतिं केचन द्राविडपद्धतिम्, अपरे भागवतसम्प्रदायपद्धतिमिति मन्यन्ते।

## भक्तिविषये पाश्चात्यानामभिमतम्

पाश्चात्याः केचन भक्तिमिमां निगमागमेतिहासपुराणप्रथितां भारते प्राचीनकाले नासीदित्याक्षिपन्ति। तेषां मते भक्तिः ईसाईधर्मतो गृहीता। तेषां मते क्राइष्टतः पश्चात्

---

१. यतीन्द्रमतदीपिकायाम्

२. जयाख्यसंहितायाम्—१।१०६

३. अहिर्बुध्न्यसंहितायाम् ३७।२८, २९, भा० सं० १।१७, १८

४. द्रष्टव्यम्—डा० मुंशीराम शर्मा विरचिते—भक्तिका विकास, पृ. २५

श्रीकृष्णः प्रादुरभूत्। सामान्यतः स एव भारतीयभक्तिरसधाराया आधारः, क्राइष्ट-शब्द एव कालान्तरे कृष्ण इति रूपं लेभे। शर्मण्यदेशीयेन विदुषा वेबरमतानुसारेण "कालविपर्ययेन" क्राइष्टशब्द एव फ्रेञ्च भाषायां "क्रीष्ट"रूपेण, ततः संस्कृतभाषायां कृष्णशब्दरूपेण परिवर्त्तितः। तमिळभाषायां कृष्णशब्दोऽधुनापि "किट्ट" इति तथा बंगभाषायां "कृष्टो" इति समुच्चार्यते। इत्थञ्च ईसामहोदयात् पश्चात् कृष्णस्य भक्ति-तत्त्वस्य च प्रादुर्भावो बभूव इति प्रतिपादितम्।

नेदं सामीचीन्यमावहति, यतो हि क्राइष्ट-कृष्णशब्दयोः साम्यात् ईसाईधर्मात् समुद्भूता भक्तिः भारतीयवाङ्मये गृहीता इति प्रवादो नोचितः। क्राइष्टतः पूर्वं कृष्णः प्रादुर्भूतः, न तु तत्पश्चात्। यतो हि ईसातः पूर्वं चतुर्थशताब्द्यां लिखिते पालि-साहित्ये "निदेश"ग्रन्थे वासुदेवस्य बलदेवस्य च वर्णनं लभ्यते। ईसातः पूर्वमतीव-प्राक्तने प्रायः ईसातः पूर्वमष्टमशताब्द्यां पाणिनीयसूत्रेऽपि वासुदेवः, अर्जुनश्च वर्णितौ। चन्द्रगुप्तस्य (ईसातः पूर्वम् ३२५) राजसभायां स्थितराजदूतेन मेगास्थनीजेन स्वयात्रा-वर्णनप्रसंगे "हरक्यूल" इत्यस्य पूजा वर्णिता। एवं च ज्ञायते ईसातः पूर्वमेव भक्ति-र्भारते प्रादुर्भूतेति।

डा० शीलमहोदयो लिखति नारायणस्यैकेश्वरत्वं यत् महाभारते उक्तं तत् ईसाई-धर्मात् मिश्रप्रभृतिदेशेषु भ्रमणशीलैरुदारबुद्धिभिः साधकैः संगृहीतम्। तैः साधकैः बुद्ध इव ईसामहोदयोऽपि परमात्मरूपेण नारायणस्यावतारेषु परिगणित इति[1]। वेबरमहो-दयस्यापीयमेव सम्मतिः[2]। लेशनमहोदयो "भारतीय-वैष्णवैः स्वमातृभूमेः पश्चिमोत्तर-प्रदेशात् सम्भवतः "पार्थियादेशात्" (यत्र टामसमहोदयेन ईसाईधार्मिकसन्देशः प्रचारितः) ईसाईसिद्धान्तो भक्तिः (एकेश्वरवादः) गृहीत[3]" "इति भणन् भक्तिः ईसाईधर्मतः, भारते समागता इति वदति।

किन्तु प्रोक्ता कल्पना समीचीना नास्ति, यतो हि विश्वस्य प्राचीनतमे वैदिकवाङ्मये भक्तिर्विलोक्यते। अत एव नायं सिद्धान्तः ईसाईधर्मतो गृहीतः, अपि तु यदा सम्पूर्णे विश्वस्मिन् वेदस्य प्रचार आसीत् तदा एव ईसामहोदयेन वेदादेव सिद्धान्तोऽयं गृहीत इत्यनुमातुं सुशकम्। एवञ्च प्रतीयते भारतीयवाङ्मये न कोऽपि विषयोऽस्ति यो भारतीय-धार्मिकविचाराद् सर्वथा भिन्नो भवेदिति। वस्तुतो भक्तितत्त्वं वैदिकवाङ्म-

---

१. वैष्णविज्म एण्ड क्रियश्चियनिटी–पृ० ३०

२. इण्डियन एण्टीक्वेरी १८७४ "कृष्णजन्माष्टमी पूर्व के प्रारम्भ के विषय में अन्वेषण"।

३. डा० राधाकृष्णन् लिखिते भारतीयदर्शने।

मया देव ईसाईधर्मे गृहीतमित्येव साधु। वैदेशिकोऽपि गार्वनामा कश्चन विद्वान् प्राचीनभारतीयजनजीवने भक्तिसिद्धान्तः पूर्णतया प्राप्यत इत्याह[1]। भक्तिः ईसाईधर्मात् संगृहीता इति विषये तु अद्यावधिः किमपि प्रबलं प्रमाणं न प्राप्तम्। भक्तिशब्देन या धार्मिकता बोध्यते सा केवलम् ईसाईधर्मे एव प्राप्यते इति तु कथनं समीचीनं नास्ति। किन्तु भारते भक्तिविषयकं विपुलं वाङ्मयं शिलालेखश्च विद्यते, येन वक्तुं पारयामहे भक्तिः भारतस्यैव निधिरिति। एतत्तु बार्थमहोदयेनापि स्वीकृतम्।

ऋग्वेदादारभ्य आधुनिककालपर्यन्तं सर्वदैव अविच्छिन्नतया भारतीयधार्मिकवाङ्मये भक्तितत्त्वसम्बन्धितविचारधारा प्रचलिता। प्राचीनभारतीयजीवनदर्शनस्य दैवी शक्तेरन्वेषणं महत्त्वपूर्णमङ्गमासीत्। वैदिकवाङ्मयविलोकनेन परिज्ञायते "तदानीं भारतीयजनजीवने देवस्नेहस्य भक्तितत्त्वस्य च प्रचार आसीत्" इति[2]।

ईसाईधर्मस्तु भारते ईशवीयद्वितीय-तृतीयशताब्द्यां प्रविष्टः। ततः पूर्वं तस्यास्तित्वमपि भारते नासीत्। न केवलं भारत एव, अपि तु ईसामहोदयस्य जन्मतः प्राक् तस्य धर्मस्य संसारेऽपि अस्तित्वं नासीत्। किन्तु भारते वेदादिशास्त्रेषु भक्तितत्त्वस्य न केवलं वर्णनमेवास्तीति, अपितु ईसामहोदयात् प्राक्कालादेव भक्तितत्त्वस्य प्राचारोऽप्यासीत्। अत्र बहूनि प्रमाणानि सन्ति। भक्तिवादस्य प्रधानदेववासुदेवस्य नाम पाणिनीयव्याकरणे प्राप्यते।[3] यदि पाणिनेः पूर्वं वासुदेवधर्मो (एकेश्वरवादः) न स्वीक्रियेत, तथापि ईसापूर्वं सप्तमशताब्द्यां समुत्पन्नस्य पाणिनेः काले तु अवश्यमेव सः धर्मः प्रचलित आसीदिति मन्तव्यमिति भाण्डारकरमहोदयोऽप्याह[4]। पाणिनीयव्याकरणे साक्षादेव भक्तेरभिधानमपि समुपलभ्यते[5]। बौद्धधर्मग्रन्थेष्वपि भक्तिसम्प्रदायस्य समुल्लेखो[6] वर्तते। सेनार्टमहोदयः "प्राचीनभारतीयधर्माद् बौद्धधर्मो भक्तिं गृहीतवानित्याह। बौद्धधर्मस्य थेरगाथाग्रन्थे "भक्तिमान्" "इति शब्दो विलोक्यते, यो प्राचीनभारतीयधर्मतो गृहीतो भवेदित्यनुमीयते, यतो हि यदि बुद्धात् पूर्वकालादेव कोऽपि धर्मो न प्रचलितो भवेत्, यत्र योगसिद्धान्तः. वैष्णवधर्मसम्बद्धोपाख्यानम्, विष्णुभक्तिः कृष्णभक्तिर्वा, तद्विषयकपूजा वा, समवेतरूपेण न सम्भवेत्तर्हि भारते बौद्धधर्मस्य प्रादुर्भावोऽपि न संभवेत्। अत एव ज्ञायते बौद्धधर्मात् पूर्वत एव भारते भक्तिः प्रादुर्भूतेति[7]। बार्थमहोदयस्तु नारायणस्य

१. फिलासफी ऑफ एशियेण्ट इण्डिया पृ ८४ गार्व।
२. डा० राधाकृष्णन् लिखिते भारतीयदर्शने—पृ. ४६०
३. अष्टाध्याय्याम्—४।३।९८
४. बाम्बे गजेटियर खण्ड १, भाग २, पृ. १४१-सर आर०जी० भण्डारकर
५. अष्टाध्याय्याम्—पृ. ४।३।९५
६. थेरगाथायाम्—पृ. ३७०
७. इण्डियन इण्टरप्रेटर, पृ. १७७, १९१०

देवकीपुत्रश्रीकृष्णस्य वा पूजाविधायिका भागवत-सात्वत-पाञ्चरात्रादिसम्प्रदायाः जैनधर्मस्य प्रादुर्भावात् पूर्वत एव ( ८०० ई० पू० ) भक्तिसम्प्रदायस्य प्रचारे संलग्नाः सन्तीति लिखति ।[1] एवमेवान्येऽपि वैदेशिकविद्वांसः पतञ्जलिमतानुसारं वासुदेवस्योपास्यत्वं सिद्ध्यतीति प्राहुः[2] ।

भागवतधर्मस्य भक्तिसम्प्रदायस्य वा प्रादुर्भावः ईसाईधर्मात् प्रागेवाभूदित्यस्मिन् विषये बहूनि प्रमाणानि सन्ति पुरातत्त्वसम्बन्धीनि, तथा हि—ईसातो द्वितीयशताब्दि-पूर्वकालिकबेसनगरीयशिलालेखानुसारेण ज्ञायते यद् भागवतधर्मानुयायिहेलियाडोरा-द्वारा वासुदेवस्य पूजार्थं स्थापिते ध्वजदण्डे गरुडस्य मूर्तिरासीदिति । एवमेव घोसुण्ड-स्थानात् प्राप्ते शिलालेखेऽपि भागवत-संकर्षण-वासुदेवादीनां पूजा वर्णिता विद्यते । अपि च ईसापूर्वद्वितीयशताब्द्याः "नानघाटे" प्राप्तशिलालेखेऽपि संकर्षणवासुदेवादीनां पूजाविधेः ( भक्तेः ) वर्णनं प्राप्तम् । इत्थञ्च भक्तिसम्प्रदायः ईसाईप्रभृतिवैदेशिकप्रभावैः सर्वथा विनिर्मुक्तः स्वतन्त्रश्चास्तीति तात्कालिकभारतीयजनजीवनस्य स्वाभाविकी विचारधारा भक्तिमार्गे आसीदिति च परिज्ञायते ।

भक्तिमार्गस्य वैदेशिकत्वं सिसाधयिषूणां केषाञ्चन वैदेशिकविदुषां मतमेतादृशमस्ति—पाश्चात्त्यधर्मेषु यद्यपि यहूदिधर्मः कर्मप्रधानस्तथापि ईसाईधर्मस्तु भक्तिप्रधान एव । तत्र भगवद्भक्तिः प्राधान्येन वर्णिता । ईसाईधर्मे तद्धर्मावलम्बिनाम् आध्यात्मिकविवाहो बहुचर्चितोऽस्ति । रिचार्ड आफ सेण्टविक्टरमहोदयेनातिमार्मिकदृष्ट्या माधुर्यभावो वर्णितः । सेण्टबर्नार्डमहोदयेन प्रेमपूर्णभक्तिमार्गः स्वीकृतः, तन्मते ईसा ( प्रभुः ) न केवलं पिता एव, अपि तु पतिरपि स वर्तते । सेण्टटेरेमहोदयः स्ववर्णिते आध्यात्मिकविवाह-प्रसगे स्वयमेव परमात्मनः पत्नीरूपेण स्वीकृतवान् । तस्य समालिङ्गनेन जीवात्मा परमा-त्मनि विलीयते । प्रोक्तं नानाविधं भगवद्विषयकं मधुरभाव विलोक्य भारतीयोपासनायां यद् भक्तितत्त्वं दृश्यते, तस्य स्रोतः प्रोक्ता ईसाईधर्मविषयकभावनैव । एवञ्च ईसाईधर्मादेव भारते भक्तितत्त्वं प्रवहितमिति च स्पष्टं वक्तुं शक्यत इति[3] ।

किन्तु मतमेतन्न निर्दुष्टम्, यतो हि ईसाईधर्मप्रादुर्भावात् पूर्वमेव भारतवसुन्धरायां वैदिकवाङ्मये न केवलं तादृशी एव मधुरभावना विद्यते, अपितु ततः परमपि अतिशय-मधुरभावेन परमात्मना सह जीवस्य नानासम्बन्धो निरूपितः । तत्र परमात्मैव जीवस्य माता, पिता, पितामहः, जननी, ततः परं पतिरपि अस्तीति निरूपितमेव[4] । अपि च

---

१. इण्डियन एण्टिक्वेरी, पृ. २४८, १८९४

२. जर्नल ऑफ रायल एशियाटिक सोसाइटि १९१०, पृ. १६८

३. पुराणविमर्शे पृ. ४३०  ४. अथर्ववेदे—६।५।३०

"एकाकी न रमते", "आत्मानं द्वेधा व्यभजत्, पतिश्च पत्नी चाभवत्"[1] इत्यादिना भारतीयोपासना न केनापि बाह्यप्रभावेण प्रभाविता, न वा मनागपि संस्पृष्टा, अपि तु सा वैदिकसंहितात एव समुत्पन्ना इति निर्विवादमेवेति नात्र विचिकित्सालेशोऽपि विदुषां सम्भवति।

## भक्तिविषये प्राच्यानां विदुषामभिमतम्

पूर्वं तु पाश्चात्त्यानां मतमालोचितम्, इदानीं प्राच्यानां विदुषामपि भक्तेरभारतीयत्वं साधयतां मतमालोच्यते—डा० सम्पूर्णानन्दः "समस्तवैदिकवाङ्मये भक्तिशब्दो न प्राप्यते भक्ताचार्यप्रयुक्तार्थे, अत एव भक्तितत्त्वं वैदिकवाङ्मये न विद्यते" इत्याह। डा० ताराचन्द्रोऽपि "श्रीरामानुजाचार्य-निम्बार्काचार्य-रामानन्दाचार्य-बल्लभाचार्यप्रभृतीनां दक्षिणदेशीयाऽऽलवारभक्तानां वीरशैवसम्प्रदायस्य च प्रादुर्भावः इस्लामधर्मप्रभावात् संभूतः। ते सर्वे सम्प्रदायाः इस्लामधर्मात् समुत्पन्नाः प्रभाविताश्च, यतो हि श्रीविष्णुस्वामि-निम्बार्क-मध्वप्रभृत्याचार्याणां सिद्धान्तः नज्जाम-अशअरी-गजारीप्रभृतीस्लामदार्शनिकसिद्धान्तसदृश एव विद्यते। प्रोक्तैर्भक्तिप्रतिष्ठापकैः प्रचारिते मार्गे एकेश्वरवादः, विरहाकुलभक्तिभावना, प्रपत्तिः, गुरुभक्तिश्च महता संरम्भेण प्रतिष्ठापिताः। ते सर्वे भावा इस्लामधर्मे प्राधान्येन दृश्यन्ते। अत एव भक्तिः इस्लामधर्मात् समुत्पन्ना प्रभाविता च वर्तते" इत्युल्लिलेख। डा० हूमायूँ कबीरस्तु शंकराचार्येणाद्वैतसिद्धान्तः इस्लामधर्मादेव गृहीतो दृश्यत इत्यपि जगाद।

प्रोक्तविचारसरणिः समीचीना नास्ति, यतो हि भक्तिविचारधारा विशदरूपेण समस्तवैदिकवाङ्मये समुपलभ्यते। अतो भक्तिभावना पूर्णतया भारतीयभावनैव विद्यते न तु वैदेशिकी। श्रीसम्पूर्णानन्दस्य कथनमपि समुचितं नास्ति, यतो हि वैदिकवाङ्मयेऽपि भक्ताचार्यप्रयुक्तार्थेषु भक्तिशब्दो विलोक्यत इति प्रतिपादयिष्यते भक्तिरसस्य वैदिकत्वमिति प्रकरणे। योगदर्शने प्रयुक्तमीश्वरप्रणिधानमेव वैदिकवाङ्मये भक्तिशब्दार्थत्वेन प्रयुक्तम्। एवञ्च भक्ताचार्यप्रयुक्तार्थे भक्तिशब्दो वैदिकवाङ्मये नोपलभ्यत इति यत् श्रीसम्पूर्णानन्दीयमतं तदुचितं न प्रतिभाति, यतो हि वैदिकवाङ्मयेऽपि भक्ताचार्यप्रयुक्तार्थे भक्तिशब्दः समुपलभ्यते। इत्थञ्च ऋग्वेदेऽथर्ववेदे छान्दोग्योपनिषदि[2] श्वेताश्वतरोपनिषदि च भक्तिशब्दो भगवत्प्रीत्यर्थे दृश्यते। अत एव भक्तिरियं बाहुल्येन वैदिकवाङ्मये प्राप्यत इत्यत्र न विचिकित्सालेशोऽपि।

डा० ताराचन्द्र-द्वारा समुपस्थापिता युक्तयोऽपि समीचीना न सन्ति, यतो हि इस्लामधर्मात् पूर्वमेव वैदिकवाङ्मये गुरोर्माहात्म्यं भगवत्प्राप्त्यर्थं भक्तस्य विरहाकुलभावना

---

१. वेदोपनिषदि—　　२. श्वेताश्वतरोपनिषदि—११।५३-५४

प्रपत्तिश्चेति पदे पदे समुपलभ्यन्ते। श्रीमद्भगवद्गीतायां भक्तेर्माहात्म्यं प्रतिपादयता श्रीकृष्णेन "भक्त्या मामभिजानाति" इत्युक्तम्। विरहाकुलभावना तु निर्हेतुकभक्तिरूपेण विष्णुपुराणेऽपि प्रतिपादिता। श्रीरामानुजाचार्याद् पूर्वमपि विशिष्टाद्वैतप्रतिपादके बोधायनसूत्रे प्रपत्तिरूपभक्तिः प्रतिपादिता। एवञ्च इस्लामधर्मात् प्राचीनतमे विशिष्टाद्वैतमते प्रपत्तेरतीव महत्त्वं प्रतिपादितं दार्शनिकैः। इत्थञ्चपरिज्ञायते डा० ताराचन्द्रमतमपि समीचीनं नास्तीति।

## रामायणे भक्तितत्त्वम्

संस्कृतमहाकाव्यस्याऽऽदिकविना वाल्मीकिना विरचितं "रामायणम्" आदिमहाकाव्यत्वेन परिज्ञायते, यतो हि वैदिकवाङ्मयात् परं सर्वप्रथमं तदेव महाकाव्यं काव्यगुणोपेतं रचितं महाकविना। तत्रैव लौकिकच्छन्दसा सर्वप्रथमं प्रयोगो दृश्यते। तदेव लौकिमहाकाव्यानामुपजीव्यम्, आदर्शभूतञ्च। वैदिकसंस्कृतेर्निधिः वैष्णवसम्प्रदाये वेदवत्समादृतञ्च वर्तते[1]। तत्र महाकविना मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य चरितं लोकानुकरणीयतया चित्रितम्। तत्र श्रीरामः साक्षात्परमात्मरूपेण प्रतिपादितः[2]। अपि च तत्र श्रीरामः पूर्णब्रह्मपरमात्माऽपि सन् मातृ-पितृ-गुरु-मित्र-भार्या-भ्रातृ-सेवकैः सह मानवोचितमर्यादया व्यवहरति। मनागपि मर्यादां न मर्दयामास। एवं च सर्वैः सह यथोचिताया मर्यादायाः परिपालनादेव सः मर्यादापुरुषोत्तमरूपेण परिज्ञायतेऽधुनापि लोके। तस्याचरणमनुकरणीयमेव सर्वैः, अत एव "रामादिवत् प्रवर्तितव्यं न रावणादिवत्" इति प्रसिद्धिरुपगता। वैष्णवाचार्या रामायणं प्राधान्येन रामभक्तिप्रतिपादकं शास्त्रमिति प्रतिपादयन्ति। तत्र—

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम[3]॥

इत्यादिना संसारबन्धनविमुक्तये परमोपायभूतायाः शरणागतेः भक्त्याः वा स्वरूपं प्रतिपादितम्। श्लोकोऽयं वैष्णवसम्प्रदायेषु मोक्षस्य साधनभूततायाः भक्तेर्मन्त्ररूपेण स्वीकृतो वर्तते।

---

१. यद्यपि आदिकविना रचितानि वाल्मीकिरामायणम्, आध्यात्मरामायणम्, आनन्दरामायणमित्यादीनि बहूनि रामायणानि श्रूयन्ते लोके, तथापि आदिमहाकाव्यत्वेन मुख्यरामायणत्वेन च वाल्मीकिरामायणमेव परिज्ञायते, अत एवान्यरामायणापेक्षया वाल्मीकिमहर्षेनाम्ना प्रथितं श्रीमद्वाल्मीकीयरामायणमेव श्रीमन्मुनिवरवाल्मीकिकर्तृकत्वेन रामायणपदेन विशेषतो व्यपदिश्यते।

२. वाल्मीकिरामायणे युद्धकाण्डे ११६।१३, २७-२८, उत्तरकाण्डे ११०।१२

३. वाल्मीकिरामायणे युद्धकाण्डे १८।३३

एवं रामायणान्तरेऽपि भक्तिरुद्गीता । तथा चाध्यात्मरामायणे काकभुशुण्डिना गरुडं प्रति प्रतिपादितं ये नराः सम्यक्प्रकारेण हरिं भजन्ति ते दुस्तरं संसारसमुद्रमनायासेन पारं यान्तीति[1] । एवमेव भगवान् सुतीक्ष्णं प्रति प्रतिपादयति 'लोके ये मम मन्त्रोपासकाः, मम शरणं प्राप्ताः, लौकिकविषयं प्रति निरपेक्षाः सन्ति, तेभ्योऽहं प्रतिदिनं दर्शनं ददामीति[2] । एवमेव लक्ष्मणं प्रति भगवतापि प्रतिपादितं मम भक्तियुक्ता भक्ता न केवलं ज्ञानं विज्ञानं वैराग्यमेव प्राप्नुवन्ति, अपि तु मुक्तिमपि अनायासेन प्राप्नुवन्ति । अपि च भक्त्या भक्तैर्मम स्वरूपज्ञानुभूयते, येन ते भवबन्धनात् विमुच्यन्त[3] इति । एवमेव रावणं प्रति प्रतिपादितं हनुमता यत् भगवद्भक्त्या आत्मज्ञानं भवति ततः परमात्मतत्त्वमनुभूयत[4] इति । अत एव प्रकृतेः परः पुराणपुरुषो रमापतिः सर्वव्यापकः शरणागतप्रियः श्रीराम एव सर्वतोभावेन भजनीय[5] इति । एवमेव ब्रह्मस्तुतौ प्रतिपादितं यत् ये भक्ताः सर्वतोभावेन पुरुषोत्तमं श्रीरामं भजन्ति त इहलोके परलोके चाप्तकामा भवन्तीति[6] । भक्तिहीनेन कृतं कर्म सम्यक् फलं नोत्पादयतीति चाध्यात्मरामायणेऽन्यत्र प्रतिपादितमिति रामायणेषु भक्तिरेव मुख्यतया वर्णितेति सिद्धम् ।

## महाभारते भक्तितत्त्वम्

भारतस्य निधिर्वेदः, वेदस्य चोपबृंहणमितिहासपुराणाभ्यामभूत् । उक्तं च "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्" इति। तत्रेतिहासपदेन रामायणमहाभारतावभिप्रेतौ।

---

१. विनिश्चितं वदामि ते न अन्यथा वचांसि मे ।
हरिं नरा भजन्ति येऽतिदुस्तरं तरन्ति ते ।। अ० रामा०, अर० २।३६

२. मन्मन्त्रोपासका लोके मामेव शरणं गताः ।
निरपेक्षा नान्यगतास्तेषां दृश्योऽहमन्वहम् ।। अ० रामा० अर० २।३७

३. अतो मद्भक्तियुक्तस्य ज्ञानं विज्ञानमेव च । अ० रामा० अर० ४।२१
वैराग्यं च भवेच्छीघ्रं ततो मुक्तिमवाप्नुयात् ।।

४. भक्तौ संजातमात्रायां मत्तत्त्वानुभवस्तदा ।
ममानुभवसिद्धस्य मुक्तिस्तत्रैव जन्मनि ।। अ० रामा० अर० १०।२६

५. विष्णोर्हि भक्तिः सुविशोधनं धियस्ततो भवेज्ज्ञानमतीव निर्मलम् ।
विशुद्धतत्त्वानुभवो भवेत्ततः सम्यग् विदित्वा परमं पदं व्रजेत् ।।
अतो भजस्वाद्य हरिं रमापतिं रामं पुराणं प्रकृतेः परं विभुम् ।
विसृज्य मौर्ख्यं हृदि शत्रुभावनां भजस्व रामं शरणागतप्रियम् ।।
—वा० रा०, सु० ४।२२, २३

६. ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति तथा कामानिह लोके परत्र च ।। वा० रा०, सु० ११७।३१

अस्मिन् महाभारते सम्पूर्णभारतीयजनजीवनस्य रूपं प्रतिबिम्बितमस्ति। निखिलभारतीय-जनजीवने व्यासप्रणीतस्य लक्षसहस्रात्मकस्य महाभारतस्य प्रभावोऽतीव परिलक्ष्यते। महाभारतमिदं न केवलं भारतीयसंस्कृतेरेव रत्नभाण्डागारं विद्यते, अपि तु समस्त-लौकिकपारलौकिकज्ञानविज्ञानयोर्निधिर्वर्तते। महाभारतं निखिलविषयस्य महाकोश इति प्राच्यपाश्चात्त्यसमस्तविद्वांस ऐककण्ठ्येन स्वीकुर्वन्ति।

महाभारते विषयान्तरेण सह भगवद्भक्तिरपि प्राधान्येन प्रतिपादिता, भक्ति-सिद्धान्तस्य प्रतिपादकं मुख्यं शास्त्रं पाञ्चरात्रम्। तस्य पाञ्चरात्रस्यापि मूलं महाभारतमिति श्रीलोकमान्यतिलकमहोदयेन स्वसम्पादितगीताभूमिकायां लिखितम्। अत्र प्रमाणम्-पनिषद्रूपा भक्तितत्त्वप्रतिपादिका श्रीमद्भगवद्गीता एव विद्यते। यत्र प्राधान्येन भगवद्भक्तिरेव निरूपिता बादरायणेन। महाभारतेऽनुशासनपर्वणि निरूपितं 'ये भक्ता अनन्यभक्त्या सर्वलोकमहेश्वरम्, अनादिनिधनम्, लोकाध्यक्षम्, परमपुरुषोत्तमं सततं भजन्ति, ते दैहिक-दैविक-भौतिकरूपत्रिविधदुःखेभ्यो विमुच्यन्ते[1]। ये भक्ताः जगतः कर्त्तारं हर्त्तारं भर्तारञ्च भगवन्तं भजन्ति ते संसारसमुद्रे न पतन्तीति[2]।'

महाभारतांशभूतश्रीमद्भगवद्गीतायां प्राधान्येन भगवद्भक्तिरेव प्रतिपादिता। गीतायां दानाध्ययनयज्ञतपःस्वाध्यायादीनामपेक्षया निखिलब्रह्माण्डनायको भक्तिप्रियः परमात्मा केवलं भक्त्यैव शीघ्रं प्राप्यते[3], ये भक्ताः सम्पूर्णेन्द्रियसमूहं लौकिकविषयेभ्यः परावर्त्य चिदुन्मुखीभूय मनोवागगोचरं परमात्मानं भजन्ति त एव तं परमात्मानं प्राप्नुव-न्तीति प्रतिपादनेन भक्तेर्मोक्षोपायत्वं स्पष्टमुपपादितम्। तस्मात् गीता भक्तिशास्त्रमित्यत्र न सन्देहगन्धः। एवञ्च सति महाभारतस्य भक्तिप्रतिपादकत्वं स्वतः सिद्धमिति।

## पुराणेषु भक्तितत्त्वम्

संस्कृतवाङ्मये पुराणानामन्यूनं महत्त्वमस्ति। यतो हि पूरयति वेदार्थमिति व्युत्पत्त्या वेदार्थपरिपूरणमेव पुराणानां चरमं लक्ष्यमिति प्रोच्यते। अत एव पुराणं

---

१. तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्॥ महा०, अनु० १४९।५-६

२. विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्॥
—महाभारतेऽनुशासनपर्वणि १४९।१४२

३. श्रीमद्भगवद्गीतायाम्—८।२२।

वेदस्य व्याख्यानमेव। वैदिकवाङ्मये ये कथाप्रसङ्गाः सिद्धान्ता गूढतत्त्वानि वा संक्षेपेण संसूचितानि तान्येव पुराणेषु सरलरीत्या विस्तरेण च प्रतिपाद्यन्ते। यथा हि-वैदिकवाङ्मये काव्यरसो भक्तिरसो वा बीजरूपेण नामान्तरेण वा वर्तते, तस्यैव पल्लवनं पुराणेषु कृतम्।

पुराणेषु भक्तिर्बहुविधा निरूपिता। तत्र पद्मपुराणे लौकिकवैदिकाऽऽध्यात्मिकभेदेन प्रथमं सा त्रिविधा निगदिता। पुनश्च लौकिकभक्तिर्मनोवाक्कायसंभवत्वेन त्रिविधा भवति। तत्र ध्यानधारणाभ्यां वेदार्थानुस्मरणेन, ब्रह्मप्रीतिकरी भक्तिः मानसीभक्तिरिति कथ्यते। अग्निश्राद्धादिचिन्तनैर्मन्त्रवेदनमस्कारैर्जाप्यैः स्तुतिभिश्च भगवत्प्रीतिर्वाचिकीभक्तिः, आत्मेन्द्रियनिरोधादिभिश्चान्द्रायणादिव्रतोपवासनियमैश्च कृता ब्रह्मप्रीतिः कायिकी भक्तिराख्याता। एते सर्वेऽपि भक्तिभेदा लौकिकभक्तिशब्देनाभिहिताः। वेदाध्ययनादिभिः ऋग्यजुःसामभिर्जाप्यैर्हविर्होमक्रियाभिश्च निष्पादिता भक्तिर्वैदिकभक्तिरिति कथ्यते। सांख्ययोगभेदेनाऽऽध्यात्मिकभक्तिस्तु द्विधा, पुनश्च सा सात्त्विक-राजस-तामसभेदेन त्रिविधा भवति[1]। एवमेव स्कन्दपुराणेऽपि प्रतिपादिता सा[2]। ब्रह्मवैवर्तपुराणे सामान्यतो नवभेदात्मिकैव भक्तिः कथिता[3]। गौतमीयतन्त्रेऽष्टविधा भक्तिः प्रतिपादिता[4]। गरुडपुराणे च सा भक्तिरष्टविधैव प्रोक्ता[5], तत्र भक्तौ सर्वेषां समानरूपेणाधिकारोऽस्ति, भक्तिमान् मनुष्य एव सर्वश्रेष्ठः सर्वोत्तमश्च भवतीत्यपि प्रतिपादितमस्ति[6]।

विष्णुभक्तिवत् पुराणेषु शिवभक्तिरपि बाहुल्येन प्राप्यते। शिवभक्तिप्रतिपादनादेव वायुपुराणमपि शैवपुराणत्वेनैव निगद्यते[7]। लिङ्गपुराणे वर्णितं यद् भगवतः शिवस्य भक्त्यैव संसारे बद्धा जीवा विमुच्यन्त इति। शिववचनानुसारेण तयैव भक्त्या बन्धनविनिर्मुक्तैर्जीवैः शिवः प्राप्यत इति च[8]। शैवमते सा भक्तिर्भगवत्सेवारूपिणी कथ्यते[9]। सा च भक्तिः कायिक-वाचिक-मानसिकभेदेन त्रिधा[10]। कायिक-वाचिक-

---

१. पद्मपुराणे—५।१५।१६४–१९१। २. स्कन्दपुराणे प्र० ख० १ ७।२–१६

३. ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे ६३।१६–२० तथा श्रीकृष्णजन्मखण्डे १।३३-३४

४. देवतायां च कृष्णः प्रसीदति। गौतमीयतन्त्रे

५. भक्तिरष्टविधा स च पण्डितः॥ गरुडपुराणे

६. द्रष्टव्यम्–'पुराणों में भक्ति' कल्याण–भक्ति अङ्क, पृ० ५३

७. शिवभक्तिसमायोगात् शैव तच्चापराख्यया॥ स्कन्दपुराणे रेवाखण्डे १।३३

८ भक्तिगम्यस्त्वहम्। सौरपुराणे ११।२३

९. लिङ्गपुराणे २।९।१९–२०

१०. लिङ्गपुराणे २।९।२२ तथा अवन्तीक्षेत्रमाहात्म्ये २।७।५।

मानसिकोपायैर्भक्तिः साध्या चेति। शिवपुराणे च[१] भक्तिः सेवारूपैव विद्यते। शैवयोगोऽपि भक्त्यैव प्राप्यते[२]। भक्त्यैव संसारबन्धनं विनश्यति[३]। शिवपुराणे सा भक्तिः क्वचित् सगुणनिर्गुणभेदेन[४] क्वचित् वैधी स्वाभाविकीभेदेन, क्वचित् नैष्ठिक्यनैष्ठिकीभेदेन[५], क्वचिच्च साङ्गनिरङ्गभेदेन च प्रविभक्ता[६] मङ्गलमयशिवस्योपासना सर्वेषां कृते श्रेयस्करी विद्यत इति च प्रतिपादितम्[७]।

## भक्तितत्त्वम्

श्रद्धा-विश्वास-प्रेमपरिप्लावितभक्तहृदयस्य मधुरमनोराग एव भक्तिः। यया भक्तभगवतोः, उपास्योपासकयोर्वा पारस्परिकतादात्म्यसम्बन्धस्य निर्धारणं भवति। सा भक्तस्य विमलमानसान्निःसृतस्य दिव्यप्रेमप्रवाहस्य भावधारा एव, यया लौकिकविषयानन्दः स्वसमस्तकालुष्यं परिक्षाल्यालौकिकब्रह्मानन्दे परिणमति। भक्तानां सैव भक्तिर्लौकिकालौकिकसमस्तसन्तापनाशकस्य भक्तिरसस्य जननी वर्तते। भक्तितत्त्वविचारप्रसङ्गे प्रथममुपास्यतत्त्वमुपासकतत्त्वमुपासनातत्त्वञ्चेति त्रीणि तत्त्वानि पार्थक्येन विचारणीयानि, यतो हि प्रोक्ततत्त्वैरेव भक्तभगवतोः पारस्परिकः सम्बन्धो निर्धार्यते।

यथा मानवजीवनेन सम्बद्धया क्षुधया, तस्याः क्षुधायाः परितृप्तिकारकाणां पदार्थानां सत्ता सिध्यति, तथैव मनुष्यस्य चित्ते विद्यमाना यस्य कस्याप्युपासनाभावना प्रमाणयति यल्लोके कोऽप्युपास्योऽप्यस्तीति। स एवोपास्यश्चराचराखिलब्रह्माण्डं सृजति रक्षति विनाशयति च। तस्यैवेङ्गितेन वायुः प्रवहति, सूर्यो भाति, चन्द्रः प्रकाशते। स एव महान्, व्यापकः, अखिलब्रह्माण्डनायकः, ब्रह्म, परमात्मा वा विद्यते। एवञ्च तस्येच्छयैव निखिलब्रह्माण्डस्य समस्तक्रियाकलापाः सम्पद्यन्ते। स एव सम्पूर्णविश्वनायक उपास्यो वर्तते। कारणं तु ध्येयमिति सिद्धान्तात्। तस्यैवानुग्रहेणोपासकस्य जीवस्य संसारसागरान्मोक्षो भवति, नान्यथा, 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः। तस्योपास्यतत्त्वस्य ज्ञानाय धार्मिकमनोवृत्तिर्दार्शनिकमनोवृत्तिश्चेति मार्गद्वयं प्रतिपादितं शास्त्रेषु। तत्र धार्मिकमनोवृत्त्या उपास्यस्य ऐश्वर्यमयं माधुर्यमयञ्च रूपमनुभूयते। दार्शनिकमनोवृत्त्या

---

१. शिवपुराणे ७।२।७।

२. सौरपुराणे १२।१।

३. शिवपुराणे ४।४१।२।

४. शिवपुराणे २।२।२३।

५. शिवपुराणे २।४।४१।

६. शिवपुराणे ७।२।३४।

७. द्रष्टव्यम्—'शैवी भक्तिः पौराणिक सन्दर्भ में' डा० रामशंकरभट्टाचार्य कृत निबन्ध ('आज' २१–२–१९७१)।

च परमात्मतत्त्वस्य जीवात्मतत्त्वस्य च पारस्परिकसम्बन्धस्य तात्त्विकं परिज्ञानं जायते। आत्मपरमात्मनोः, जीवब्रह्मणोश्च पारस्परिकतात्त्विकसम्बन्ध एव सम्पूर्णभक्तिवाङ्मयस्य (साहित्यस्य) निधिरस्ति[1]।

उपासकस्य स्वभावानुसारेणोपास्यस्य ब्रह्मणो ज्ञानाश्रितो भावाश्रितश्चेति रूपद्वयं भवति। तस्य ज्ञानाश्रितं रूपं निर्गुणम्, निराकारम्, अव्ययम्, अनिर्वचनीयञ्च विद्यते। उपासकस्य भावाश्रित उपास्यः, उपासकस्य स्नेहेन (भक्त्या) मधुरभावबन्धने आबद्ध्यते। उपासकस्य स्वभावानुसारेणोपास्यः स्वामिसखिकान्तादिविभिन्नरूपेषु व्यक्तो भवति। व्यक्तरूपानुसारेण स्वभावनया भक्तो भगवतो नाम रूपञ्च परिकल्पयति। यथोक्तं रामतापनीयोपनिषदि "उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना"[2]। ततो ब्रह्म व्यक्तं, सगुणं साकारं वा कथ्यते। एवं चोपासनायाः परमप्रयोजनं तु भगवत्सान्निध्यप्राप्तिरेवास्ति। ज्ञानमार्गेण ब्रह्मतत्त्वचिन्तनं भवति, उपासनया तु परमप्रियत्वस्य, निकटतमसान्निध्यस्य च प्राप्तिर्जायते। प्रेमपात्रता च साधकस्तदैव लभते यदा सः साधको भावुको भवति। भावुकत्वं भक्त्यैव लभ्यते। अत एव प्रतिपादितं यत् परमात्मा न काष्ठे, न पाषाणे, न वा मृत्तिकायामेव तिष्ठति, किन्तु स तु केवलं साधकस्य भाव एव विराजते, अत एव तस्य प्राप्त्युपायः केवलं भाव एवे ( भक्तिरेव ) ति[3]। अपि च हरिभक्तिं (भावसाधनां) विना कर्म, विवेकादि, ज्ञानम्, मोक्षश्च कथमपि न सिध्यति। अत एव भावसाधनैव[4] सर्वस्य मुख्याधारो वर्तते।

अयमाशयः—भक्तिस्तु उपास्योपासकयोर्भावात्मकसम्बन्धविशेषो वर्तते। स चोपासनया एव स्थाप्यते। अत एव 'उप आसनम्' अर्थादुपास्यस्य समीपमुपवेशनमेवोपासनम्। तेन तस्य नैकट्येन प्राप्तिरेवोपासनायास्तात्पर्यमिति गम्यते। उपास्यं प्रत्युपासकस्यानुरागोऽयं लौकिकानुरागसदृशो मलिनो न विद्यते, अपि तु प्रतिक्षणं प्रवर्द्धमानः परमनिर्मलोऽस्ति। तादृशीं प्रेमोपासनां विना जप-तपो-ज्ञानादिकं तथैव वृथा वर्तते यथा वरं विना विवाहोद्यमः। प्रेमोपासनयैव निर्गुणं निराकारञ्च ब्रह्म सगुणसाकारतया भक्तभावानुसारेण नृत्यति क्रीडति चेति। भक्तभगवतोर्मध्ये भक्तिजन्यो (उपासनाजन्यः) भावात्मकसम्बन्ध एवामोघसम्बन्धसूत्रं विद्यते। भक्त्या एव भक्तेषु भगवान् सद्यो द्रवति।

---

१. देवेन्द्रनाथशर्मारचित-साहित्यिकनिबन्धावल्याम्, पृ० ११३

२. रामतापनीयोपनिषदि ५

३. न देवो विद्यते काष्ठे न पाषाणे न मृण्मये।
देवा हि विद्यन्ते भावे तस्माद् भावो हि कारणम् ॥

४. हरिभक्तिं विना कर्म न स्याद् धीशुद्धिकारणम्।
न वा सिध्येत् विवेकादि न ज्ञानं नापि मुक्तता ॥

सम्पूर्णभक्तिशास्त्रस्य मूलं भक्तिरेव विद्यते। तस्या अनुग्रहः, प्रेमा, श्रद्धाश्चेति रूपत्रयं निर्धारितं भक्तिशास्त्रेषु। तत्र विवेचनमित्थं भवितुमर्हति–पुत्रशिष्यादीन् प्रति स्नेहोऽनुग्रह इति, भार्यादिकं प्रति स्नेहः प्रेमेति, गुरुजनदेवादिकं प्रति स्नेहो श्रद्धेति। एवञ्च स्नेह एव सांसारिकसमस्तबन्धनानां मूलाधारो वर्तते। यत्र परमात्मा आश्रियते, यत्र साधकस्य मनो नियुज्यते, यत्र च तस्य भगवतः प्राप्तिसाधनं वर्तते, स एव भक्तियोगः साधकैर्निगद्यते। स एव भक्तानां कृते परमानन्दस्वरूपस्य परमेश्वरस्य सच्चिदानन्दस्य प्राप्त्यर्थं स्वाभाविको राजपथो विद्यते। स च भक्तियोगः परमोत्कृष्टप्रेम्णः पराकाष्ठा वर्तते। तत्रैव साधको रसस्वरूपे परब्रह्मणि सर्वतोभावेन विलीयते।

भगवत्प्राप्तेश्चतुर्षु मार्गेषु ज्ञान-कर्म-योग-भक्तिरूपेषु भक्तिरेव परमसुलभा सर्वश्रेष्ठा च प्रतिपादिता नारदभक्तिसूत्रे। भागवते विश्वकल्याणस्य मूलद्वारं भक्तिरेवेति घोषितम्[1]। अपि च कर्मैवबन्धनस्य कारणम्, भक्तिस्तु बन्धनस्य सर्वथा विमोचिका विद्यते। तां विना योगसाधनाऽपि वृथैव, तां विना च विशुद्धज्ञानमपि निरर्थकमेवेति, यतो हि भक्तियुक्तज्ञानी एव भगवन्तं प्राप्नोति। भक्तिं विना तु जप-तपःसंयमव्रत-ज्ञान-ध्यानादिकं सर्वं निरर्थकमेवेति निरूपितं निर्गुणोपासकैरद्वैतपथावलम्बिभिः श्रीमधुसूदनस्वामिप्रभृतिभिरपि, किमन्यैः सगुणोपासकैः रूपगोस्वामिप्रभृतिभिः। कृष्णदासकविराजमते तु 'कर्मज्ञानयोगादयश्च सर्वे भक्तिमुखापेक्षिण एव सन्ति, पर्यवसाने तु तेषां सर्वेषां भक्तावेवान्तर्भावो भवति[2]।' साधकशिरोमणिगोस्वामितुलसीदासमतेऽपि जप-तपःसंयम-योग-ज्ञान-कर्म-धर्मादीनां सर्वेषां सुपक्वं सुन्दरफलं भक्तिरेव विद्यते[3]। अतो भक्तिः स्वतन्त्रा एव। सा एव साक्षान्मुक्तिप्रदायिनी वर्तते। ज्ञान-कर्म-योगापेक्षया तत्र भगवद्वशीकरणशक्तिरधिका भवति। केवलं तयैव भगवान् भक्तपराधीनो जायते।[4]

एवञ्च भक्तिरेव केवलं मायाबन्धनस्य विमोचिका, भक्तेर्दर्शनमात्रेणैव माया जीवात्मानं विमुञ्चति, ततश्च पलायते[5]। भक्तेराविर्भावस्य साधनानि तु विषयत्यागः, कुसङ्गत्यागः, सत्सङ्गः, अखण्डभजनम्, हरिगुणकीर्त्तनादि, भगवत्कृपा, गुरुसेवा, निष्कामता, समदर्शिता, सदाचरणम्, नामस्मरणम्, स्वस्थशरीरम्, निश्चलचित्तवृत्तिः, पूर्वजन्मनः शुभसंस्कारादीनि च सन्ति। साधकस्य चित्तं यदा कामनारहितम्, विकाररहितम्, सांसारिकविषयान् प्रत्यासक्तिरहितं जायते तदा तस्य विमले मानसे

१. भागवते ७।६।९
२. चैतन्यचरितामृते मध्य० परि० २२, पृ० २७६
३. रामचरितमानसे अरण्यकाण्डे ४५
४. चैतन्यचरितामृते मध्य० परि० १७, पृ० ८२
५. रामचरितमानसे उत्तरकाण्डे ११६

भक्तिः प्रादुर्भवति, यया सांसारिकविषयवासनावासिताः कामादिविकाराश्च स्वयमेव नश्यन्ति[1]।

## भक्त्युपासनशब्दयोरैकार्थ्यम्

शब्दशास्त्रदृष्ट्या भजनं रसनं भक्तिः, भज्यतेऽनया भक्तिः, भजन्त्यनयेति भक्तिर्वेति रीत्या भावे करणे वा 'भज् सेवायाम्' इति धातोः क्तिन् प्रत्यये सति भक्तिशब्दो निष्पद्यते, भगवत्प्रीत्यनुकूलो व्यापारो भक्तिरिति भक्तिशास्त्रे भक्तैः स्वीक्रियते। यद्यपि शास्त्रेषु भक्तिशब्दः सेवायाम्, आराधनायाम्, उपासनायाम्, तदेकताने, चित्त-वृत्तिभेदे, विभागे, गौणीवृत्तौ, उपचारे, अवयवे, श्रद्धायाम्, रचनायामन्येषु च बहुष्वर्थेषु प्रयुज्यते, किन्तु भक्तिशास्त्रे सर्वत्र सामान्यतो भगवत्प्रीत्यनुकूल-व्यापारेष्वेव प्रयुज्यतेऽयं भक्तिशब्दः[2]।

एवमेव उपासनाशब्दस्तु[3] उपोपसर्गपूर्वकाद् 'आस् उपवेशने' इति धातोर्भावे 'ण्यासश्रन्थो युच्[4]' इति सूत्रेण युचि, टापि सति सिद्ध्यति। वरिवस्या, शुश्रूषा, परिचर्या, आराधना, सेवा, भक्तिश्चेत्यादयस्तस्योपासनाशब्दस्यापरपर्यायाः सन्ति। भक्ति-शास्त्रानुसारी उपासनाशब्दार्थस्तु विधिपूर्वकमुपास्यविषयिका तैलधारावदविच्छिन्नरूपेण

---

१. नारदभक्तिसूत्रे ७।

२, वाचस्पत्यम् षष्ठभागे पृ० ४६१८, शब्दकल्पद्रुमे, पृ० ४६३, भाग ३ सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहे पृ० १४६।

३. उपसर्गभाष्यादिग्रन्थानुसारेण उप उपसर्गस्य सामीप्यम्, सामर्थ्यम्, व्याप्तिः, आचार्यकृतिः, दोषः, दानम्, क्रिया, वीप्सा, आरम्भः, पूजा, पठन-मित्यादयो बहवोऽर्थाः प्रतिपाद्यन्ते, यथा—

उपः सामीप्य-सामर्थ्य-व्याप्त्याचार्यकृतौ भृतौ।
दोषदानक्रियावीप्सारम्भाध्ययनपूजने॥
उपासन्नेऽधिके हीने सादृश्यप्रतियत्नयोः।
उद्योगव्याप्तिपूजासु शक्तावारम्भदानयोः॥ हेमचन्द्र-मेदिनी-अभिधानचिन्तामणि—उपसर्गभाष्य उपसर्गसंग्रहे १६

उपः सामर्थ्यदाक्षिण्यदोषाख्यानात्ययेषु च।
आचार्यकरणे दाने व्याप्तावारम्भपूजयोः॥
तद्योगेऽपि च वीप्सायां भरणार्थोपमार्थयोः।
उपो हीनेऽधिके प्रोक्तोऽप्यासन्नेऽप्युपकीर्तितः॥ विश्वप्रकाशकोशे—ऽव्ययप्रकरणे पृ० १८९।

४. अष्टाध्याय्याम् ३।३।१०७।

दीर्घकालिकचित्तैकाग्र्यपूर्विकाऽतिशयिता प्रीतिरेव[1]। अमरकोशे[2] पूजा, भक्तिः, नमस्यापचितिः, सपर्याऽऽर्हणा, नमस्क्रिया, ध्यानानुष्ठानमुपासनादयश्च शब्दाः परस्परं समानार्थकत्वेन प्रतिपादिताः। एवञ्च भक्त्युपासनशब्दयोः स्वरूपभेदेऽपि तयोरर्थभेदो नास्तीति सिद्ध्यति।

दार्शनिकग्रन्थेष्वपि उपासनं संराधनं भक्तिराराधना सेवा चेति शब्दाश्चैकार्थबोधकत्वेनोक्ताः। अद्वैतिनां मतेऽप्यनेनोपासनेन मुक्तिर्लभ्यते। श्रीबादरायण-श्रीब्रह्मनन्दि-श्रीभर्तृप्रपञ्च-श्रीशङ्कराचार्य-श्रीमण्डनमिश्रप्रभृत्याचार्याणां वाक्येषु एतद् द्रष्टुं शक्यते। एषु केचन उपासनाशब्देन केचन संराधनशब्देन केचन चाऽऽराधन-सेवा-भक्तिशब्दैश्चोपासनामभिदधते। एतेषु एतावान्भेदो यद् ब्रह्मनन्दिभर्तृप्रपञ्च-मण्डनमिश्रा ब्रह्मसाक्षात्कारे ज्ञानभक्त्योः समानमेव साधनत्वमङ्गीकुर्वन्ति। श्रीशङ्कराचार्यसुरेश्वराचार्यप्रभृतयस्तु सत्त्वशुद्ध्यर्थमेवोपासनामङ्गीकुर्वन्ति। एते परम्परया भक्तेर्मोक्षसाधनत्वं मन्यन्ते।

'अपि संराधने प्रत्यक्षानुमानाभ्याम्' ब्र० सू० ३।२।२४ इत्यस्य शाङ्करभाष्यस्य अमलानन्दविरचितकल्पतरुटीकायामुक्तं यत् वाचस्पतिमिश्रोऽपि ब्रह्मसाक्षात्कारार्थमुपासनाऽऽद्रियत इति[3]। मण्डनमिश्रकृतौ ब्रह्मसिद्धौ प्रथमे काण्डे शंखपाणिः श्रीमण्डनमिश्रोक्तो ब्रह्मसाक्षात्कारसाधनरूपोऽभ्यास उपासनैवेत्युक्तवान्। तत्राभ्यासस्य उपासनापरपर्यायस्योपयोगमाह[4]—"प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेकयुक्तिविषयकबुद्ध्याऽग्रे नयनमभिधीयते[5]। प्रसंख्यानशब्देन उपासना गृह्यते उपासना च भक्तिरिति।

श्रीरामानन्दाचार्येण श्रीशङ्कराचार्यप्रोक्तोपासनालक्षणमेव वैष्णवमताब्जभास्करे भक्तेर्लक्षणत्वेनोक्तम्[6]। कुलार्णवतन्त्रे उपास्यस्य समीपं गत्वा मनसा वाचा कर्मणा च तस्य सर्वतोभावेन सेवनमेवोपासनेति कथितम्[7]। मुण्डकोपनिषदि 'धनुर्गृहीत्वौपनिषदं

---

१. डा० एम० जार्ज निबन्धितः 'उपासना के प्रेरकतत्त्व' नामको निबन्धो द्रष्टव्यः। शोधपत्रिकायां वर्ष २१, अङ्क २, अप्रिल–जून १९७०

२. अमरकोशे २।७।३४।

३. अपि च संराधने सूत्राच्छास्त्रार्थप्रमजा प्रमा।
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः स्वयम्॥

४. ब्र० सि० शं० पा० व्या० पृ० ९६–९७

५. नैष्कर्मसिद्धौ ३।९०

६. वैष्णवमताब्जभास्करे पृ० ३५

७. कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।
समीपसेवा विधिना उपास्तिरिति कथ्यते॥ कुलार्णवतन्त्रे १७।९७

महास्त्रं शरं ह्युपासानिशितं संधीयत[1]' इत्यत्र उपासाशब्द उपासनार्थे प्रयुक्तः, तस्य चार्थः सामान्यतः सर्वेषामाचार्याणां मते नैरन्तर्येण स्वेष्ट-ध्यानमेवास्ति । एवञ्च तत्तत्-कोशानुसारेण उपासनाशब्दस्य बहुविधाः परिभाषाः प्राप्यन्ते[2] ।

'उपासितो यत् पुरुषः पुराणः[3]' इत्यत्र पूर्णभक्तिरूपार्थे, 'उपासते कामलवाय तेषाम्[4]' इत्यत्र पूजा-भक्तिरूपार्थे, 'उपासते योगरथेन धीराः[5]' इत्यत्र ध्यानार्थे, "राज्यमुपासितव्यम्[6]' इत्यत्र सेवार्थे चोपासनाशब्दः प्रयुक्तः । ऋग्वेदे[7], अथर्ववेदे[8], तैत्तिरीयसंहितायाम्[9], मैत्रेयसंहितायाम्[10], रघुवंशे[11], मनुस्मृतौ[12], कुमारसंभवादिषु[13] च पूजा-सेवोपस्थित्यादिष्वर्थेषूपासनाशब्दः प्रयुक्तो विलोक्यते । नीतिशतक[14]-पञ्चतन्त्र[15]-चतुर्वर्गसंग्रह[16]-सुभाषितभाण्डागारादिषु[17] च सहवासार्थेऽपि प्रयुक्तः । 'साग्निः सोपासतो व्रजेत्[18]' इत्यत्र प्रयुक्तोपासनाशब्दार्थस्तु तस्य टीकाकारै र्विज्ञाने-श्वरामरादित्यविश्वरूपाचार्यवीरमिश्रदेवबोधसुरेश्वराचार्यादिभिर्गृह्याग्निरुक्तः । आपस्तम्बधर्मसूत्रे[19] सेवार्थे, मनुस्मृतौ[20] भोजनार्थे शब्दोऽयं प्रयुक्तः । 'उपासनानि समानि' इति गौतमधर्मसूत्रे[21] प्रयुक्तोपासनाशब्दार्थस्तु प्रणाम इत्युक्तं तद्भाष्यकारेण[22] । मृच्छकटिके[23] संगीताभ्यासार्थे, श्रीमद्भगवद्गीतायां

---

१. मुण्डकोपनिषदि ३।३

२. चिन्तनापरपर्यायः मननात्मकः मानसव्यापारः ।।
वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रतन्त्रं मानसं प्रवाहरूपम् ।
निकृष्टेषूत्कृष्टबुद्धिः ।। ध्यानं क्रिया वा ।

३. भागवते १।५।६
४. भागवते ३।२१।१४
५. भागवते ८।५।२६
६. भागवते १०।७३।१४
७. ऋग्वेदे २।२७।७।, १०।१५४।१
८. अथर्ववेदे ६।४२।२
९. तैत्तिरीयसंहितायाम् १।६।१०
१०. मैत्रेयीसंहितायाम् २।१।१
११. रघुवंशे १०।६२
१२. मनुस्मृतौ ७।३७
१३. कुमारसंभवे ।२।३८
१४. नीतिशतके १।३३
१५. पञ्चतन्त्रे १।१८०
१६. चतुर्वर्गसंग्रहे ४।१५
१७. सुभाषितभाण्डागारे ३।१३।१००
१८. याज्ञवल्क्यस्मृतौ ३।४५
१९. आपस्तम्बधर्मसूत्रे १।५।१५।१
२०. मनुस्मृतौ ३।१०४
२१. गौतमधर्मसूत्रे ५।३६
इति मस्करिभाष्ये पृ० १०४
२२. तस्यैव सूत्रस्य 'उपासनं नमस्कारादि'
२३. अनेन चिरसंगीतोपासनेन ग्रीष्मसमये—मृच्छकटिके १।६

सेवाभक्त्यर्थे[1], नैषधकाव्ये[2] प्रणामार्थे, भट्टिकाव्ये[3] मनुस्मृतौ च ध्यानार्थेऽप्युपासना-शब्दः प्रयुक्तो वर्तते। अत एव 'स्यादुपासनमासने शुश्रूषायां शराभ्यासेऽप्युपधाने च गेन्दुके। व्रते विशेषे प्रणये' इति कोशवचनं च शब्दमिममनेकार्थं प्रतिपादयति। एवं हेमचन्द्र-पुरुषोत्तम-महेश्वर-मेदिनीकार-धरणीधरादिकोशकारा अप्युपासनाशब्दं नानार्थकं वर्णयन्ति।

योगवाशिष्ठे[4] ब्रह्मसूत्रे च श्रीशङ्कराचार्य-रामानुजाचार्यादिभाष्यानुसारेण[5] भगवद्-ध्यानार्थं एवोपासनाशब्दो दृश्यते। श्रीभाष्यानुसारेण ब्रह्मसूत्रे ३।२।२४ प्रयुक्तं संराधनं तु भक्तिरूपोपनासमेव विद्यते[6]। महारामायणानुसारेण स्वोपास्यविषयकं ध्यानं लयो जपः पाठः पूजा तत्कथाश्रवणमित्यादय उपासनाशब्देन कथ्यन्ते[7]। एवमन्यत्रभगवच्चिन्तन-रूपोपासनया भगवतः साक्षात्कारो जायत इत्युच्यते।

उपरितनवर्णनानुसारं यद्यपि उपासनाशब्दो बहुष्वर्थेषु प्रयुक्तः तथापि भक्तिशास्त्रा-नुसारमुपासनाभक्त्योरुपासकभक्तयोश्चैक्यमेवेति सिद्ध्यति। वेदमन्त्रेषु[8] भक्ति-रुपासनाशब्देनैव प्रतिपादिता। योगदर्शने चेश्वरप्रणिधानशब्देन यदुक्तं तद् भक्तिरेवेति गृह्यत इति श्रीसम्पूर्णानन्देनोक्तम्[9]।

## भक्तेरधिकारिप्रयोजने

भक्तेरधिकारिप्रयोजने विविच्येते। भगवत्सेवनरूपाया भक्तेः कोऽधिकरीति प्रश्ने सर्वेऽप्यधिकारिण इति स्पष्टमुद्घोषयितुं शक्यम्। भगवताऽपि "स्त्रियो वैश्यास्तथा

---

१. श्रीमद्भागवद् गीतायाम् १३।७
२. नैषधमहाकाव्ये १।३४
३. भट्टिमहाकाव्ये ५।१०७, ७।८७
४. योग बाशिष्ठे ५।४२।२५
५. ब्रह्मसूत्रे ३।२।२४, १।२।२६ तथा १।३।३३
६. ब्रह्मसूत्रे ३।२।२४ इति सूत्रस्य 'भक्तिरूपापन्नमेवोपासनं संराधनम्। श्रीभाष्ये
७. गुरुमन्त्रानुसारेण लयं ध्यानं जपस्तथा।
पाठं तीर्थं च संस्कारमिष्टं सर्वपरात्परम्॥
इष्टपूजां प्रकुर्याद् वै तत्कथां शृणुयात् पठेत्।
तदंशव्यापकं विश्वं कथ्यते साप्युपासना॥ महारामायणे
८. पैङ्गलोपनिषदि ४।२१।२२, सरस्वतीरहस्योपनिषदि २।३१,
चाणक्यनीति १३।१३, ललितोपाख्याने ब्रह्माण्डपुराणे ४३।५०
९. वेदान्ताङ्के कल्याणपत्रिकायां श्रीसम्पूर्णानन्दमहोदयस्य भक्तिशीर्षको लेखः

शूद्रास्तेऽपि यान्ति परां गतिम्[१]" इत्यादिकमुपदिशता भक्तौ सर्वेषामधिकारः स्वीकृतः। भागवते च "सर्वदेशीयसर्वविधमानवस्य शुद्धिहेतुत्वं भक्तेः प्रतिपादितम्। तत्र पुल्कस-यवनादीनामपि भगवत्सम्बन्धात् शुद्धिर्भवतीति वर्णितम्[२]। नैतावदेव यन्मानवानामेव तत्राधिकारः, अपितु तिर्यञ्चोऽपि भगवन्तमाश्रयन्तः श्रूयन्ते। गजस्योत्कृष्टां भक्तिं को वा पुराणज्ञो न जानीयात्। भगवन्नामग्रहणमपि भक्तिभेदेषु नवस्वन्यतमम्। श्रीभागवते भगवन्नामग्रहणेन सर्वेषां पापानां प्रायश्चित्तता निरूपिता[३]।

भक्तिरपि साध्यसाधनभेदेन द्वैविध्यं भजते। तत्र साध्यभक्तिशरणागतौ तु सर्वाधिकारः सर्वसम्मतः। यत्रतु भक्तिशब्देन सन्मध्वादिका ब्रह्मविद्या गृह्यन्ते तत्र खलु शास्त्रकाराणां दृष्टिरन्यविधा दृश्यते। वैदिकब्रह्मविद्यारूपभक्तौ तु त्रैवर्णिकानामपतितानामेवाधिकारं व्यवस्थापयन्ति शास्त्रकाराः। यत्र खलु पुराणेषु भक्तौ सर्वेषामधिकारो वर्णितस्तत्र भक्तिशब्दो नामसंकीर्तनादिपरो मन्तव्यः, यैः खलु शास्त्रकारैस्तदधिकारस्य त्रैवर्णिकमात्रवृत्तित्वं व्यवस्थापितम्, तन्मते भक्तिशब्द औपनिषद्ब्रह्मविद्यापरो मन्तव्यः। स्त्रीशूद्राणां वेदेऽनधिकारः किन्तु भक्तौ सर्वेषामधिकारो वर्तत इति प्रायः सर्वाण्यपि पुराणानि स्वीकुर्बन्त्येव। तस्मात् स्तुतिनमस्कारादिरूपभक्तिषु सर्वेषामधिकारं केऽपि न विरुन्धन्ति। वेदान्तदेशिकास्तु "महनीयविषये प्रीतिर्भक्तिः। स्तुतिनमस्कारादिषु तत्सम्बन्धात् भक्तिशब्द उपचारतः[४]" इत्यभिधाय स्तुत्याद्यर्थे भक्तिशब्दस्य लाक्षणिकत्वमाहुः। एवञ्च वेदान्तदेशिकादयोऽपि स्तुतिनमस्कारकीर्त्तनादौ सर्वेषामधिकारं स्वीकुर्वन्त्येवेति न कश्चन विरोधः। अतो भगवन्नामश्रवणकीर्तनभगवद्विग्रहवन्दनादिरूपभक्तौ निर्विशेषेण सर्वेषामधिकार इति सिद्धम्।

भगवद्भक्तेर्मुख्यं प्रयोजनं तु भगवद्दिव्यचरणारविन्दप्राप्तिरेव। अत्रेयान् विशेषो यदा भक्तिशब्दो नामसंकीर्त्तनादिपरस्तदा भक्तेः (नामकीर्त्तनादेः) प्रयोजनं भगवति प्रीत्युत्पादनम्। तत्रापि यदि स्तुतिपरो भक्तिशब्दस्तदा आत्मनस्तुष्टिः, क्षमायाचनम्,

---

१. मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥ श्रीमद्भगवद्गीतायाम्।
—९।३२

२. किरातहूणान्ध्रपुलिन्दपुल्कसा, आभीरकङ्का यवनाः खसादयः।
येऽन्ये च पापा यदुपाश्रयाश्रयाः, शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः॥
भागवते २।४।१८

३. सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामग्रहणं विष्णोर्यतस्तत् विषया मतिः॥ भागवते

४. न्यायसिद्धाञ्जने जीवपरिच्छे पृ. ३०८, प्रकाशन वा. सं. वि. वि. १९९६

स्वाभीष्टप्रार्थनादिकञ्च तत्फलं ज्ञेयम्। प्रीत्युत्पत्त्यनन्तरभावित्वात् स्तुतीनाम्। सर्वाण्यपि कार्याणि भगवत्प्रीत्युत्पादकतां प्राप्तान्येव वस्तुतः सफलतां यान्तीति भागवते निगदितम्। भगवद्विषयकप्रीतिरूपमुख्यभक्तेः सम्बन्धीनि (तत्कार्यकारणभूतानि) सर्वाण्यपि कर्माणि भगवत्सेवनरूपत्वात् भक्तिशब्दप्रतिपाद्यान्येव। तेषां फलन्तु पुरुषार्थरूपभगवद्विषयक-प्रेमोत्पत्तिरेव। तादृशप्रीतिस्तु भगवदखण्डानुभवः, तत्सायुज्यादिप्राप्तिश्चेति।

वस्तुतस्तु भगवन्मात्रविषयिणी परमानन्दस्वरूपा भगवदखण्डानुभवप्राणा प्रीति-रूपा भक्तिः स्वयमेव साध्यभूता कर्मज्ञानश्रवणकीर्त्तनादिभिः साधनैरभिलष्यमाणा मुक्ते-रपि गरीयसी। भक्तास्तामेवावाप्तुं भगवन्तं स्तुवन्ति। तथाहि—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु॥" इत्यादौ।
"मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्"।
"सार्ष्टि-सामीप्य-सालोक्य-सारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"॥

इत्यादिना भगवद्भक्तेर्निरवधिकफलत्वं प्रतिपादितमिति, तदेव परमप्रयोजनम्, नैव कमपि स्वकीयं प्रयोजनमभिलषति साधकः।

प्रसंगात् भक्तिशास्त्रस्यानुबन्धचतुष्टयमप्यत्र निरूप्यते। "प्रयोजनमनुद्दिश्य मदोऽपि न प्रवर्त्तते" इति न्यायेन कस्मिन्नपि शास्त्रे कर्मणि वा निष्प्रयोजनं न कस्यापि प्रवृत्तिर्भवति, किन्तु "इदं मदिष्टसाधनम्, इदं मत्कृतिसाध्यम्, इदं बलवदनिष्टाननु-बन्धि" चेति ज्ञात्वैव तत्र कोऽपि प्रवर्तते। मीमांसककुमारिलभट्टः प्रतिपादयति—"शास्त्रे कर्मणि वा तत्प्रयोजनज्ञानं विना कस्यापि प्रवृत्तिर्न भवति। अत एव शास्त्रारम्भ एव तस्य शास्त्रस्य (भक्तिशास्त्रस्य) प्रयोजनम्, अधिकारी, विषयः, सम्बन्धश्च निरूपणीयानि। एतान्येव यस्य कस्यापि शास्त्रस्यानुबन्धचतुष्टयत्वेनोच्यन्त इति[1]। अनुबन्धत्वन्नाम "प्रवृत्तिप्रयोजकज्ञानविषयत्व" मिति[2]। इत्थञ्चात्र भक्तिरस-शास्त्रे जनमनसां निमज्जनाय भक्तिशास्त्रस्यानुबन्धचतुष्टयं प्रतिपाद्यते—

"निष्प्रयोजनं न मन्दोऽपि प्रवर्त्तते" इति न्यायात् भक्तिप्रतिपादकशास्त्राध्ययन-प्रवृत्तौ तत्प्रयोजनादिज्ञानमपेक्षते। भक्तिशास्त्राधिकारी तु भगवदनुरागी ज्ञान-

१. सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित्।
यावत्प्रयोजनं नोक्तं तावत् तत्केन गृह्यते॥
ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनम्॥ श्लोकवार्तिके १२।१७-१८

२. अनुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि। वेदान्तसारे पृ० ३

कर्मादिभक्तिसाधनयुतो गुरुवाक्यादौ विश्वासशाली सज्जनः साधकः। विषयश्च भक्तिशास्त्रस्य भगवान् भक्तो भक्तिशास्त्रञ्चेति मुख्यतया तत्त्वत्रयम्। प्रतिपाद्य-विषय-प्रतिपादकशास्त्रयोर्बोध्यबोधकभावः सम्बन्धः। प्रयोजनञ्च भगवति प्रीत्युत्पादन-पूर्वकभगवत्सायुज्यादिप्राप्तिरित्येतद्भक्तिशास्त्रस्यानुबन्धचतुष्टयी भवितुमर्हति।

## आचार्यभेदेन भक्तेः स्वरूपभेदाः

भक्तिसंप्रदायेषु भक्तिस्वरूपविषये मतानि भिद्यन्ते। क्वचिदंशे साम्येऽपि आंशिको भेदः परिदृश्यत एव। तथाहि- भक्तिशास्त्रानुशीलनेन यथा पतिव्रतानारी अनन्यगतेन स्वान्तःकरणेन पतिं भजते तथैव भक्तः स्नेहेन यां भगवत्सेवां ( भगवत्प्रीत्यनुकूलव्यापारं ) करोति सा भक्तिरिति[1]। एवञ्च प्रगाढस्नेहपूर्विका या भगवत्सेवा साधकैरनुष्ठीयते[2] सैव भक्तिर्निगद्यत इत्यायाति।

भक्तेः शास्त्रीयं विवेचनं प्रथमतः शाण्डिल्यभक्तिसूत्रे, नारदभक्तिसूत्रे च समुपलभ्यते, तत्रादौ शाण्डिल्यमतेऽखिलब्रह्माण्डनायके परमात्मनि भगवति सर्वोत्कृष्टानुरक्तिरेव भक्तिरिति[3]। सैव भगवत्प्राप्त्यर्थं सर्वोत्तमोपायभूता सर्वजनसुलभा च। तत्राऽऽबालवृद्धानां स्त्रीशूद्रादीनाञ्च सर्वेषां निर्विघ्नमधिकारो वर्तते[4]। यया स्वल्पया भक्त्याऽपि जन्म-जन्मान्तरीयदुष्कृतानि स्वयमेवानायासेन विनश्यन्ति[5]। नारदीयसूत्रानुसारेण शाण्डिल्यमते 'स्वात्मरत्यनुकूलविषये स्नेहाधिक्यमेव भक्तिर्गीयते[6]। एवञ्च शाण्डिल्यमते भगवद्रति-रूपाभक्ती रसस्वरूपैव विद्यते। इत्थं चाऽऽचार्यशाण्डिल्यः कथयति यत् सर्वात्मना [7]तैलधारावदविच्छिन्ना परमेश्वरे या प्रेमपरिष्वक्ता निष्कामा चित्तवृत्तिः सैव भक्तिर्निगद्यत इति।

---

१. भज्धातोस्तु सेवार्थः प्रेमक्तिन् प्रत्ययस्य च।
स्नेहेन भगवत्सेवा भक्तिरित्युच्यते बुधैः॥
पतिव्रता यथा नारी सेवते स्वपतिं यथा।
अनन्यभावेन हरिं मुमुक्षुः सर्वदा भजेत्॥ सत्सङ्गजीवने

२. गाढस्नेहेन या सेवा सा भक्तिरिति गीयते॥ वासुदेवमाहात्म्ये

३. सा परानुरक्तिरीश्वरे- शाण्डिल्यभक्तिसूत्रे २।

४. आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्। शां० भ० सूत्रे २२

५. लघ्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात्। शां० भ० सूत्रे ७८

६. आत्मरत्यविरोधेनेति शाण्डिल्यः॥ ना० भ० सूत्रे १८

७. सर्वात्मना निमित्तैव स्नेहधारानुकारिणी।
वृत्तिः प्रेमपरिष्वक्ता भक्तिर्माहात्म्यबोधजा॥ शाण्डिल्यसंहितायाम्

नारदभक्तिसूत्राध्ययनेन तत्र व्यासगर्गाचार्ययोर्भक्तिविषयकमभिमतमप्युपलभ्यते। नारदस्तु परमेश्वरं प्रति परमानुराग एव भक्तिमभिमनुते[१]। भक्तिरमृतस्वरूपा विद्यते। भगवति सर्वतोभावेन स्वात्मसमर्पणम्, तद्विरहे सति परमव्याकुलत्वमेव भक्तिरिति नारदाभिप्रायः[२]। तन्मते तस्याश्च साधनं विषयसंसर्गस्य त्यागः, अखण्डभजनम्, समाजेऽपि भगवद्गुणस्य श्रवणम्, कीर्तनम्, मुख्यतया भक्तमहापुरुषाणां भगवतश्च कृपाप्राप्तिश्चेति[३]। अपि च तन्मते गौणी भक्तिः सत्वरजस्तमोभेदेन भक्तस्याऽऽर्त-जिज्ञास्वर्थार्थिभेदेन वा त्रिविधा, प्रेमाभक्तिश्च एका सत्यपि एकादशधा भवति[४]। सा च परमप्रेमस्वरूपानिर्वचनीयैव, अपि च मूकस्य सितास्वादवत् वर्णनातीतैव। एवञ्च सा प्रेमाभक्तिः कतिपयैर्विरलसाधकैरेव प्राप्यते। सा च कर्मज्ञानयोगादिभ्यःश्रेष्ठतमा स्वयं फलरूपा च वर्तते[५]। नारदीयभक्तिसूत्रानुसारेण व्यासमते आचार्यादिषु स्नेह एव भक्तिः, गार्ग्यमते भगवत्कथादिष्वनन्यानुराग एव भक्तिरिति कथ्यते[६]। एवञ्च परिज्ञायते नारदशाण्डिल्ययोर्मते भक्तिस्वरूपविषये नास्ति विशेषभेदः, यतो ह्युभयोर्मतस्य भगवति परमानुराग एव भक्तिरिति सारम्। अपि चात्मरतेर्विषयः परमेश्वर एव, स एव सर्वैः सेवनीयः।

नारदपाञ्चरात्रे भीष्मप्रह्लादादिमतानुसारेण लौकिकविषयेभ्यः पराङ्मुखीभूय भगवन्तं प्रत्यनन्यभावेन प्रीतिपूर्विका ममतैव भक्तिः प्रतिपादिता[७]। अपि च सर्वविधकामनारहितं सर्वथाभगवत्परायणं प्रसन्नचेतसा भगवत्प्रीत्यनुकूलसेवनमेव भक्तिरिति[८]। बृहन्नारदीये प्रतिपादितं यद् भगवद्भक्तियुक्तश्चाण्डालोऽपि ब्राह्मणेभ्यः श्रेष्ठः, किन्तु भक्तिविहीना ब्राह्मणा अपि चाण्डालतुल्या भवन्ति[९]।

---

१. सा त्वस्मिन् परमप्रेमरूपा। नारदभक्तिसूत्रे—२।

२. तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलता।
—नारदभक्तिसूत्रे १९।

३. नारदभक्तिसूत्रे ३५-३८

४. नारदभक्तिसूत्रे ५६-८२

५. नारदभक्तिसूत्रे ५१-५५

६. नारदभक्तिसूत्रे १६-१७

७. अनन्यममता विष्णौ ममता प्रेमसंज्ञिता।
भक्तिरुच्यते भीष्मप्रह्लादोद्धवनारदैः॥ ना० पा०

८. सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्।
हृषीकेण हृषीकेश सेवनं भक्तिरुच्यते॥ नारदपाञ्चरात्रे

९. चाण्डालोऽपि मुनिश्रेष्ठ! विष्णुभक्तो द्विजाधिकः।
विष्णुभक्तिविहीनश्च द्विजोऽपि श्वपचाऽधिकः॥
—बृहन्नारदपाञ्चरात्रे १२।३९

सा च भक्तिर्ज्ञानादिभ्यः श्रेष्ठा, यतो हि मुक्तिरनायासेन ज्ञानेन प्राप्तुं शक्यते, यज्ञादिना च स्वर्गादिभोगः सुलभतया प्राप्यते, परन्तु भक्तिस्तु सहस्राधिक-साधनैरपि भगवदनुग्रहं विना दुर्लभैव विद्यते[1]। वैष्णवभक्तिप्रतिपादकशास्त्रे साधनभक्तिरूपायाः भगवतः शरणागतेः (भक्तेः) षड्लक्षणानि प्रतिपादितानि, तानीमानि भगवद्भावनानुकूलकर्तव्यानां पालनम्, तत्प्रतिकूलाचरणत्यागो भगवति परमविश्वासः, एकान्ते भगवत्प्रार्थना, आत्मनिवेदनम्, कार्पण्यञ्चेति[2]। श्रीसम्प्रदाया नुसारेण प्रपत्तिरेव भक्तिः, सैव शरणागतिरित्यपि कथ्यते। तस्याः स्वरूपमहि-र्बुधन्यसंहितायां प्रतिपादितं यत् 'परमात्मन्'! अहमपराधानामालयोऽस्मि, अशरणो गतिहीनश्चास्मि, त्वमेव मम उपायभूतोऽसि। त्वदन्यो न मम कोऽपि रक्षको वर्तत इति[3]। इयं भावनैव विशिष्टाद्वैतमते शरणागतिरिति कथ्यते। तया एव मुक्तिः प्राप्यते।

सामान्यतो भारतीयदर्शनेषु विदुषां दार्शनिकानाञ्च मौलिकग्रन्थापेक्षया भाष्यग्रन्था एव बाहुल्येन प्राप्यन्ते। भक्तिविकासेऽपि ता एव परम्परा दृष्टिगोचरीभवन्ति। अत एव सम्पूर्णवेदान्तदर्शनं प्रस्थानत्रयीभाष्यरूपेणैव विकसितमभूत्। तत्तत् दार्शनिकैः तस्य विवेचनं स्व-स्वमतानुसारेण कर्मज्ञान-भक्तिपरकतया कृतम्। भक्तिः स्वयं मनो-भावत्वेन कैश्चित्तु स्वतन्त्ररूपेण महता प्रयासेन सविस्तरं निरूपिता।

कैवल्यविद्यामननप्रवीणः परपक्षस्य सयुक्तिके खण्डने स्वपक्षस्य महता संरम्भेण संस्थापने च परमदक्षः श्रीशङ्काराचार्यः केवलाद्वैती विशुद्धज्ञानमार्गी आसीत्। तन्मते केवलं ब्रह्मैव सत्यमन्यत् सर्वं मिथ्या वर्तते। परमार्थतो दृश्यमानं सर्वं वस्तु ब्रह्म एव, नास्ति तस्माद् भिन्नं किञ्चिदन्यद् जगति। तद्ब्रह्मणः प्राप्तिश्च केवलं ज्ञानेनैव भवतीति सत्यपि ज्ञानस्य रहस्यात्मकानुभूत्याः पूर्वं व्यावहारिकजगति तेनापि महत्त्वपूर्णरूपेण महदादरेण च भक्तिः प्रतिष्ठापिता स्वीकृता च। तन्मते मोक्षसाधनेषु मार्गेषु-भक्तिरेव प्रधानसाधनं वर्तते[4]। एवञ्च मोक्षप्राप्तिसाधनेषु भक्तिरेव सर्वोत्तमं साधन मुपपादितम्। ब्रह्मसूत्रस्य शाङ्करभाष्ये च महत्फलप्राप्तये (मोक्षाय) ब्रह्मण उपा-सना (भक्तिः) कर्त्तव्येति प्रतिपादितम्[5]। तन्निर्मिते प्रबोधसुधाकरे यथा मलिनं वस्त्रं क्षारीयजलं (फेनिलं) विना शुभ्रं न भवति तथैव मलिनान्तःकरणमपि भक्तिं विना न

१. ज्ञानतः सुलभा मुक्तिः स्वर्गोर्यज्ञादिपुण्यतः।
सेयं साधनसहस्रैर्हरिभक्तिः सुदुर्लभा॥ नारदपाञ्चरात्रे

२. अ० बु० सं० उत्तरार्द्धे ३७।२८, भारद्वाजसंहितायाम् १।१७–१८।

३. अ० बु० सं० उत्तरार्द्धे ३७।३०।

४. मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी॥
—विवेकचूडामणौ–२

५. महते हि फलाय ब्रह्मोपासनमिष्यते। शाङ्करभाष्ये ब्रह्मसूत्रस्य १।१।१०।

शुद्ध्यति[1]। यस्यानुग्रहेण शुकसनकादयः संसारबन्धनात् विमुक्ता जाताः, एवं भूतस्तस्यानुग्रहो भक्तिरेव, सैव मुक्तेरद्वितीयसाधनमिति प्रतिपादितम्[2]। ८वञ्चाद्वैतवेदान्तसिद्धान्त प्रचारे बद्धपरिकरस्य श्रीशङ्कराचार्यस्य मते निजस्वरूपस्यानुसन्धानमेव भक्तिः, अपिच निजाऽऽत्मतत्त्वस्यान्वेषणमनुचिन्तनञ्च भक्तिरिति प्रतिपादितम्[3]। एवञ्च तन्मते यथा 'अङ्कोलवृक्षो मूलवृक्षेण, सूचिका चुम्बुकेन, पतिव्रता स्वपतिना, लतावृक्षेण, नदीः सागरेण च मिलति तथैव यदा चित्तवृत्तयो भगवच्चरणारविन्देषु गत्वा तत्र नैरन्तर्येण तिष्ठन्ति सैवावस्था भक्तिशब्दवाच्या भवति[4]। प्रबोधसुधाकरे तेन प्रथमं स्थूलसूक्ष्मभेदेन भक्तिर्द्विविधा निरूपिता। तत्र यः सर्वप्राणिषु भगवन्तं सर्वप्राणिनञ्च भगवति पश्यति, सः सर्वश्रेष्ठभक्तः, तस्य सा दशा चोत्तमाभक्तिदशा[5]। एवमेव भगवत्पादेन श्रीमच्छङ्कराचार्येण श्रीमद्भगवद्गीताभाष्येऽपि प्रतिपादितं 'यदनवच्छिन्नतैलधारावच्चित्तवृत्तिप्रवाहेणोपास्याकाराकारितवृत्तिरेवोपासनमिति (भक्तिरिति)[6]। एवञ्च परिज्ञायते केवलाद्वैतसमर्थकानां भगवत्पादानां मतेऽपि भक्तेर्महत्त्वं वर्तत एव। प्रोक्तभक्तिमहिम्ना ज्ञायते, यत्तन्मतेऽपि भक्तिं विना न किमपि साधयितुं शक्यत इति।

विशिष्टाद्वैतप्रतिष्ठापकेन श्रीरामानुजाचार्येण 'पाण्डुतनययुद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास' इत्युद्घोषयता विशिष्टाद्वैतसिद्धान्तानुसारं ज्ञानकर्मद्वारा विहितोपासनस्यैव

१. शुद्ध्यति हि नान्तरात्मा कृष्णपदाम्भोजभक्तिमृते।
वसनमिव क्षारोदैर्भक्त्या प्रक्षाल्यते चेतः॥ प्रबोधसुधाकरे
२. यस्य प्रसादेन विमुक्तासङ्गाः शुकादयः संसृतिबन्धमुक्ताः।
तस्य प्रसादो बहुजन्मलभ्यो भक्त्येकगम्यो भवमुक्तिहेतुः॥ सर्ववेदान्तसि०सं०
३. स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते॥ ३२
स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः॥ ३३ विवेकचूडामणौ
४. अङ्कोलं निजबीजसंततिरयस्कान्तोपलं सूचिका,
साध्वी नैजविभुं लताक्षितिरुहं सिन्धुः सरिद्वल्लभम्।
प्राप्नोतीह यथा तथा पशुपतेः पादारविन्दद्वयम्,
चेतो वृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते॥ शिवानन्दलहर्याम्
५. स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुद्दिष्टा।
प्रारम्भे स्थूला स्यात् सूक्ष्मा तस्याः सकाशाच्च॥
जन्तुषु भगवद्भावं भगवति भूतानि पश्यति क्रमशः।
एतादृशी दशा चेतः सैव हरिदासवर्यः स्यात्॥ प्रबोधसुधाकरे
६. श्रीमद्भगवद्गीतायाः १२।३ शाङ्करभाष्ये।

भक्तित्वं स्वीकृतं स्वगीताभाष्ये[1]। तत्र तेन प्रतिपादितं यत् परमप्रीतिपूर्वकं तैलधारावदनवच्छिन्नवृत्त्या स्वेष्टस्य परमात्मनश्चिन्तनमेव भक्तिरिति[2]। ब्रह्मसूत्रस्य भाष्येऽपि तेन निरूपितं यत् परमनिश्चयात्मकतया स्वेष्टस्याहर्निशमनुचिन्तनमेव भक्तिरिति, तस्यैवापरपर्याय उपासनेति कथ्यते[3]। एवञ्च विशिष्टाद्वैतमते उपासनादिशब्दवाच्यो ज्ञानविशेष एव भक्तिः; तयैव मुक्तिः प्राप्यते[4]। सम्प्रदायेऽस्मिन् श्रुतिशतविहिता परमानुरागात्मिका धीरेव भक्तिः, सैव मोक्षस्य साधनम्, तत्प्राप्तौ सत्यां वर्णकर्माद्यभिमानरहितः सन् साधको भगवदितरवाञ्छाविनिर्मुक्तो जायते। सैव शास्त्रेषु ज्ञानध्यानादिशब्दैरपि प्रतिपाद्यते[5]। इत्थञ्च श्रीरामानुजप्रतिपादितविशिष्टाद्वैतमतेऽपि भज् सेवायामिति धातोर्निष्पन्नो भक्तिशब्दः प्रीतिरूपापन्नं ज्ञानमभिधत्ते[6]।

विशिष्टाद्वैतिश्रीरामानन्दाचार्यैरप्यनन्यभावेन परमात्मनि तैलधारावदनवच्छिन्नानुरक्तिरेव भक्तित्वेनाभिहिता, सा च सर्वोपाधिविनिर्मुक्तरूपैव, तस्याश्च विवेकादिसप्तभूमिकाः, यमाद्यष्टावयवाश्च भवन्ति, सैव मुक्तिप्रदायिनी च वर्तत[7] इत्यङ्गीकृतम्। श्रीमध्वाचार्यमते "मुक्तिर्नैजसुखानुभूति" रित्युच्यते। तत्रापि तादृशमोक्षार्थं विष्णोरनन्यभक्तिरेव विहिता।

श्रीवल्लभाचार्यमते पुत्रवनिताद्यपेक्षया माहात्म्यज्ञानपूर्विका भगवति प्रगाढप्रीतिरेव भक्तिरस्ति। तयैव मुक्तिः प्राप्यते नान्यथेति स्वीक्रियते[8]। स्वगीताभाष्येऽपि श्रीवल्लभाचार्यैः प्रतिपादितं "ज्ञानं बिना भक्तिः, भक्तिं विना च परमात्मा नोपलभ्यत" इति।

---

१. श्रीमद्भगवद्गीताया ७ अध्यायस्यावतरणिकायाम्।

२. स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधैः ॥
श्रीमद्भगवद्गीताया ७ अध्यायस्यावतरणिकायाम्।

३. ब्रह्मसूत्रे १।१।१ श्रीभाष्ये

४ न्यायसिद्धाञ्जने—पृष्ठे २३८, वेदार्थसंग्रहे, सर्वसिद्धान्तसंग्रहे पृष्ठे २३७

५. तत्त्वमुक्ताकलापे, जीवसरे २९

६. श्रीरामानुजभाष्ये पृष्ठे ३६, गरुडपुराणे २१९।३

७. सर्वोपाधिर्विनिर्मुक्तमनेकभेदकं भक्तिः समुक्ता परमात्मसेवनम्।
अनन्यभावेन नियम्यमानसं महर्षिमुख्यैर्भगवत्परत्वतः ॥
सा तैलधारावदनष्टसंस्मृतिप्रतानरूपेशपरानुरक्तिका।
भक्तिविवेकादिसप्तभूमिजा यमादिकाष्टावयवा मता बुधैः ॥
—वैष्णवमताब्जभास्करे पृ० ६५

८. माहात्म्यज्ञानपूर्वस्तु— — —चान्यथा ॥ तत्त्वदीपे १।४५

एवञ्च निश्चीयते तन्मते ज्ञानपूर्विका भक्तिरेव भगवत्प्राप्तिसाधनमिति[१]। सर्वाण्यपि कर्माणि भक्त्यर्थमेव क्रियन्ते साधकैः, यतो हि सैव भक्तिर्मोक्षसाधिका, अत एव मुक्तानां कृतेऽपि सा नित्यानन्दस्वरूपिणी भवति[२]। तन्मते भक्तिमार्गः पुष्टिमार्ग इति कथ्यते। भक्तिश्च भगवदनुग्रहैकलभ्या[३], "धातुः प्रसादान्महिमात्मनः, "यमेवैषवृणुते तेन लभ्यः[४]" इति श्रुतिवचनाच्चेति वल्लभीया वदन्ति।

श्रीनिम्बार्काचार्यो दैन्यादिगुणगणसमन्वितां प्रेमाभक्तिं मोक्षासाधनत्वेनाङ्गीकरोति। तन्मते साधनभक्तिः, साध्यभक्तिश्चेति भक्तिर्द्विविधा भवति। साध्यभक्तिरेवोत्तमा भक्तिः। सैव परमपुरुषार्थमोक्षस्य साधिका भवति[५]। तन्मते भक्तानामिच्छानुसारेण प्रकटितस्य भगवतश्चरणारविन्दातिरिक्ता जीवस्य न कापि गतिरस्ति, जीवस्य मोक्षो भगवता एव विधीयत[६] इति च स्वीक्रियते।

निघण्टुकारस्तु भगवत्सेवामेव भक्तिमभिमनुते। भक्त्युपासनादिशब्दानां तु क्वचिदेकार्थवाचकत्वमात्रं, न तु घटकलशादिवत्पर्यायत्वमिति च तन्मतम्[७]। श्रीचैतन्यमते भक्ता जन्मजन्मान्तरेऽपि सुतसुन्दरीधनजनादिकं विहाय भगवन्तं निर्हैतुकीं भक्तिमेव सदा याचन्ते, न तु किञ्चिदन्यत्[८]। श्रीरूपगोस्वामिमते ज्ञानकर्माद्यनवच्छिन्नं सम्पूर्णवाञ्छाशून्यमनन्यभावेन परमप्रीतिपूर्वकं भगवतः सततमनुचिन्तनमेव सर्वोत्तमा भक्तिः, तयैव सम्पूर्णक्लेशोऽनायासेन विनश्यति, तद्वतां मोक्षोऽपि तृणायते,

---

१. विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्॥ गीताभाष्ये

२. भक्त्यर्थान्यखिलान्येव भक्तिमोक्षाय केवलम्।
मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी॥ गीतातात्पर्ये

३. पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद् विलक्षणः॥
--ब्रह्मसूत्रे ४।४।९ अणुभाष्ये

४. कठोपनिषदि–१।२।२०, १।२।२३

५. कृपास्य दैन्यादियुजि प्रजायते, यया भवेत् प्रेमविशेषलक्षणा॥
भक्तिर्ह्यनन्याधिपते महात्मनः, सा चोत्तमा साधनरूपिकापरा॥
—वेदान्तकामधेनौ

६. नान्या गतिः कृष्णपदारविन्दात्, संदृश्यते ब्रह्मशिवादिवन्दितात्।
भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यशासनात्॥ तत्रैव

७. सेवा भक्तिरुपास्ति, उपासनादिशब्दानां चैकार्थवृत्तित्वं न तु घटकुम्भयोरिव पर्यायत्वम्—निघण्टौ

८. न धनं न जनं न सुन्दरीं कवितां वा जगदीश कामये।
मम जन्मनि जन्मनीश्वरे भवताद् भक्तिरहैतुकी त्वयि॥ चैतन्यशिक्षाष्टके

परमानन्दस्वरूपः परमात्मा च तयैव प्राप्यते[1], 'भक्त्या मामभिजानाती"त्युक्तत्वादित्युच्यते। मुक्तिरपि साधकानां कृते पिशाचिनीरूपैवास्ति, यावत्सा मनसि तिष्ठेत्, तावद् भक्तिः कथमपि साधकानां चेतसि समुदेतुं न शक्नोतीति[2] निन्दन्ति। श्रीरूपगोस्वामिनैव भक्तिरसामृतसिन्धौ प्रथमतः सावयवो भक्तिरसो निरूपितः। भक्तिरसस्य प्रचारे सैद्धान्तिकनिरूपणे च वृन्दावनवास्तव्यश्रीरूपगोस्वामिप्रभृतिगोस्वाम्युपाभिधानां महान् श्रमो वर्तते। तैरेव प्रवाहिता भक्तिभागीरथीरद्यापि विविधैस्तरङ्गभङ्गैर्जनमनांसि तरङ्गयति।

बोपदेवमतानुसारमुपायपूर्वकं लिङ्गनिर्देशं विनैव परमात्मनि मनसः स्थिरीकरणमेव भक्तिः[3], सैव भक्तिर्विष्णोस्तद्भक्तस्य वा चरित्रस्य श्रवणादिसाधनेन समुद्भूतः समास्वाद्यो रसविशेषः[4]। सा च भक्तिस्तन्मतेऽष्टादशविधा निरूपिता[5]।

श्रीमधुसूदनस्वामिमते "भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्त्तनादिसाधनमभिधीयते, 'भजनमन्तःकरणस्य भगवदाकारताविधानं भक्तिरिति भावव्युत्पत्त्या च भक्तिशब्देन फलमभिधीयते[6]" इत्यादिना भक्तिः साधनरूपा साध्यरूपा च वर्तत इत्यायाति। भक्तिस्वरूपं प्रतिपादितञ्च तेन यद् श्रवणादिनवविधभक्त्या द्रवीभूतस्य चित्तस्य सम्पूर्णवृत्तयः समूहालम्बनात्मकतया धारावाहिकरूपेण परमात्मनि यदा तिष्ठन्ति तदा ता एव भक्तिरूपेणावबुद्ध्यन्ते[7]। अथवा भगवदाकाराकारिता भगवद्धर्माद् द्रवीभूता निर्विकल्पकचित्तवृत्तिरेव भक्तिरिति[8]। तन्मते धर्मार्थकाममोक्षचतुष्टयस्य तु सुखसाधकत्वेन पुरुषार्थत्वमभिधीयते, किन्तु भक्तिस्तु स्वयमेव सुखस्वरूपा, अतः पुरुषार्थचतुष्टयापेक्षया सैव सर्वोत्कृष्टं सुखं परमपुरुषार्थश्च वर्तते। समाधिसुखमिव भक्तिसुखमपि स्वतन्त्रः पुरुषार्थो वर्तते।

---

१. भक्तिरसामृतसिन्धौ–१।१।११

२. भक्तिरसामृतसिन्धौ–१।२।११

३. मुक्ताफले पृष्ठे ८३

४. मुक्ताफले हेमाद्रिकृतकैवल्यटीकायां पृष्ठे १६७

५. मुक्ताफले पञ्चमाध्याये।

६. भक्तिरसायने टीकायां पृष्ठे ८

७. द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥　　भक्तिरसायने १।३

८. भक्तिरसायने टीकायां पृष्ठे ११। दामोदरशास्त्रिद्वारा वि० सं० १६८४ प्रकाशिते

परमानन्दरूपत्वेन भक्तियोगः परमपुरुषार्थ एव[1]। अनन्तब्रह्मानन्दोऽपि भक्तिसुखस्य स्वल्पमप्यंशं नाधिरोहति। मतमेतन्मधुसूदनसरस्वतीमहोदयानामिति।

विष्णुपुराणस्य टीकाकर्तुः श्रीनारायणतीर्थस्य मते भगवत्प्रीत्यनुकूलो व्यापार एव भक्तिः, पराकाष्ठां गता प्रीतिरेव भक्तिर्निगद्यते[2]। तन्मते प्रीतिभक्त्योरभेद एवास्ति।

भक्तिमीमांसासूत्रानुसारेण मनसो विशिष्टाऽऽनन्द एव भक्तिरिति[3]। श्रीमज्जयतीर्थमतानुसारेण निरवधिकानन्तानवद्यकल्याणवतो ज्ञानेन समुत्पन्नोऽनेकविघ्नबाधासाहित्येऽप्यत्यधिकदृढोऽप्रतिबद्धसततप्रेमप्रवाह एव भक्तिरिति निरूपितम्[4]। सैव मोक्षस्य साधिका, तयैव परमपुरुषः समधिगम्यते, यतो हि तयैव परमात्मा वशीक्रियते साधकैः[5]। एवञ्च भगवद्प्राप्तिसाधनमेव भक्तिरिति। तच्च साधनं पतञ्जलिमुनिनेश्वरप्रणिधानापरपर्यायो भक्तिरिति प्रतिपादितम्। तन्मते ईश्वरप्रणिधानेन ( भक्त्या ) परमेश्वरः प्राप्यते[6]। उपदेशसाहस्रिकारमते तु आत्मतत्त्वार्थबोध एव भक्तिरिति प्रतिपादितम्[7]।

श्रीकबीरमतानुयायिश्रीनारायणगोस्वामिमते परमसुखप्राप्तिसाधनं भक्तिरेव[8]। दार्शनिकश्रीहरिशरणगोस्वामिमते निष्कामभक्त्यैव कलौ मोक्षः प्राप्यते[9], नान्यथेति[10]।

**साधनभेदेन भक्तेः स्वरूपम्**

उपास्यस्यैश्वर्यमाधुर्यगुणभेदेन साधनभक्तेर्वैधी रागानुगा चेति द्वौ भेदौ भवतः। तत्र यदा शास्त्रमर्यादाभयेन श्रवणकीर्त्तनादिरूपाभक्तिः क्रियते तदा सा वैधी भक्तिः

---

१. भक्तिरसायने टीकायां पृष्ठे ६

२. प्रीतिभक्त्योरभेद एव गम्यते, प्रीतिरेव रतिः, पराकाष्ठां गता प्रेमेत्युच्यते ॥ विष्णुपुराणे नारायणतीर्थकृतटीकायाम्

३. भक्तिर्मनस उल्लासविशेषः। भक्तिमीमांसासूत्रे १।१।२

४. भक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वस्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहः। श्रीमन्नाथसुधायाम्

५. भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति, भक्तिरेवैनं गमयति, भक्तिवशः पुरुषः, भक्तिरेव भूयसी —माहरश्रुतौ

६. ईश्वरप्रणिधानाद् वा — पातञ्जलयोगदर्शने १।२३

७. आत्मतत्त्वार्थबोधस्तु भक्तिरित्यभिधीयते। उपदेशसाहस्र्याम्

८ भक्तिरत्नावल्यां-पृष्ठे ३१

९. भक्तिपुष्पाञ्जलौ श्लोके १ पृष्ठे ५

१०. "कबीरपंथ के भगताही शाखा" नामको निबन्धः, प्रज्ञा अङ्क १५ भा० २ मार्च १९७०।

कथ्यते, तस्यां भक्तौ सेव्यसेवकभावस्य, विधिनिषेधस्य, षोडशोपचाराणां, श्रवणादीनां, वैदिकक्रियाकलापस्य, वर्णाश्रमस्य परेषामप्येवंविधानां भावानां प्राधान्यं भवति। तत्र शरणागतिः, गुरुसेवा, श्रवणम्, कीर्त्तनम्, स्मरणम्, पादसेवनम्, अर्चनम्, वन्दनम्, दास्यम्, सख्यम्, आत्मनिवेदनमित्येकादशसोपानानि। रूपगोस्वामि-कृष्णदासकविराजमते तु तस्याश्चतुष्षष्टिभेदाः परिकल्पिताः[1]। यद्यपि वैधीभक्ति-र्नोत्कृष्टा, तथापि तत एव भगवन्तं प्रति निष्ठा स्नेहश्च भक्तचेतसि प्रादुर्भवतः। अत उपादेयैव सा विद्यते[2]।

यदा निजेच्छया व्रजवासिगोपीजनसदृशसेवाप्राप्तिलोभेन या श्रवणादिरूपा-भक्तिः क्रियते तदा सा रागानुगाभक्तिरुच्यते। भगवतो रूप-गुणलीलामाधुर्यादि-विषयकवार्तां श्रुत्वा यदि मनसि तदवाप्तिस्पृहा जागर्ति, प्रियतमं भगवन्तं प्रति नैसर्गिकरागश्च समुदेति, तदा सा रागानुगाभक्तिरिति कथ्यते। अपि च यथा लौकिकविषयान् प्रति विषयिपुरुषाणां स्वाभावतो विषयसंसर्गस्य वाञ्छा जायते यथा च "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्[3]" इति कालिदासो-क्तरीत्या रूपसौन्दर्यं प्रति नेत्रयोः, मधुरस्वरं प्रति कर्णयोश्च प्रवृत्तिर्दृश्यते तथैव यदि भगवन्तं प्रति भक्तानां चेतस्याकर्षणं तृष्णा वा समुत्पद्येत तदा सा रागानुगाभक्तिः प्रोच्यते[4]।

सा च रागानुगाभक्तिः कामानुग-सम्बन्धानुगभेदेन द्वैविध्यं भजते[5]। तत्र कामा-नुगाभक्तिः संभोगेच्छामयी-तत्तद्भावेच्छामयी चेति द्विविधा भवति। केलिसम्बन्धि-वाञ्छायुक्ताभक्तिः संभोगेच्छामयी, यथा यूथेश्वरीव्रजदेवीनाम्। माधुर्यप्राप्तिविषयक-वासनामयीभक्तिस्तत्तद्भावेच्छामयीभक्तिः कथ्यते। भक्तिप्रभेदेऽस्मिन् साधका उपास्यं व्रजवासिवन्मातृ-पितृ-सखि-पुत्रादिरूपेण भजन्ते। अस्यामुपासनायां शास्त्रा-पेक्षया व्रजवासिभावानामेव प्राधान्यं भवति[6]। अपि च तत्र साधकाः साधकरूपेण

---

१. चैतन्यचरितामृते मध्यपरि २२ पृष्ठे २८५, भक्तिरसामृतसिन्धौ १।२।२४-४२

२. चैतन्यचरिते म० परि० २२, पृ० २८१। ३. शाकुन्तले ५।६

४. तत्र विषयिणः स्वभाविको विषयसंसर्गेच्छामयः प्रेमारागः यथा चक्षुरादीनां सौन्दर्यादौ तादृश एव भक्तस्य श्रीभगवत्यपि राग इत्युच्यते॥
जीवगोस्वामिकृत —'भक्तिसन्दर्भे'

५. भक्तिरसामृतसिन्धौ १।२।८२

६. व्रजलीलापरिकरस्था शृङ्गारादिभावमाधुर्ये श्रुते इदं ममापि इति लोभोत्पत्ति-
काले शास्त्रयुक्त्यपेक्षा न स्यात्।
तत्तद्भावादिमाधुर्ये श्रुतेर्धीर्यदपेक्षते।
नात्र शास्त्रं न युक्तिश्च तल्लोभोत्पत्तिलक्षणम्॥ विश्वनाथचक्रवर्तिनः

उपास्यदेवस्य श्रवणकीर्त्तनादिकं तथा सिद्धरूपेण च स्वात्मनि भगवद्भावं कुर्वन्तः सर्वदा व्रजादिधामसु निवसन्तः श्रीकृष्णं तद्भक्तजनं तज्जनं वाऽहर्निशं ध्यायन्ति। सनत्कुमारतन्त्रानुसारेण तु सखिभावावाप्तिरेव रागानुगाभक्तिः कथ्यते। अतस्तत्प्राप्तये व्रजवासिसखीनां मध्ये स्वात्मानं रूपयौवनसम्पन्नां व्रजयुवतिरूपां सततं चिन्तयेत्[1]। एवं च भक्तिप्रभेदेऽस्मिन् भावयोगेन स्वेष्टदेवेन सह साधकस्य तादात्म्यं सम्भवति। तदेव भक्तिरसस्य प्रतिपाद्यमस्ति। रागानुगायां क्रमशः शान्तभावो दास्ये, दास्यभावः सख्ये, सख्यभावश्च वात्सल्ये परिणमते। पुनः प्रेमा-परा-प्रौढाभेदेन सा त्रिविधा। तत्र प्रेमाभक्तौ प्रेमाधारं प्रति स्नेहः समुद्भवति, परायामात्म विस्मरणशीलता, रतिस्थैर्यम्, प्रौढायां प्रियतमस्य परमात्मनः साक्षात्कारो भवति।

## रागात्मिका भक्तिः

परिपक्वावस्थाप्राप्तरागानुगाभक्तेरनन्तरं भक्तचेतसि रागात्मिका भक्तिरुदेति। सा च भक्तिरसमयी रागात्मिकाभक्तिः स्वाभाविकरूपेणाऽऽन्तरिकभावस्य प्रवाहरूपा, हृदयद्रवस्य साधनभूता च विद्यते। तत्र भगवन्तं प्रति भक्तस्य चेतसि, भक्तान् प्रति भगवतश्चेतसि स्वाभाविकाऽनन्यासक्तिर्भवति। अत एव सा परमगुह्या परमगोपनीया च कथ्यते[2]। भक्तिरसमयीरागात्मिकभक्तेः समुदये सत्येव प्रियारूपजीवात्मनः प्रियतमरूपपरमात्मनश्च चिद्विलासस्य, पुण्यविहारस्य च परात्परतमरूपेण दर्शनं भवति। तदेवोपनिषत्सु आत्मरतिः, आत्मक्रीडा, आत्ममिथुनम्, आत्मरमणम्, आत्मारामस्य स्थितिरित्युच्यते। तत्र सर्वं नारायणाय स्वेष्टाय समर्पितं भवति, आत्मनिवेदनस्य पूर्णता च जायते। इत्थञ्च स्वेष्टवस्तुनि प्रगाढतृष्णैव तस्याः स्वरूपलक्षणम्, उपास्ये परमाविष्टतैव तस्यास्तटस्थलक्षणं निष्पादितम्[3]।

सा च रागात्मिका भक्तिः कामरूपा-सम्बन्धरूपेति भेदेन द्विविधा भवति। भक्तिशास्त्रानुसारेण कामो नाम भगवदर्थमैकान्तिकवासनैवाभिधीयते[4]। तत्र कामरूपभक्तौ साधका मधुरभावभावितगोपाङ्गना इव केवलं श्रीकृष्णसौख्यार्थमुद्यमशीला

---

१. आत्मानं चिन्तयेत्तत्र तासां मध्ये मनोरमाम्।
रूपयौवनसम्पन्नां किशोरीं प्रमदाकृतिम्॥ — सनत्कुमारतन्त्रे

२. हनुमत्संहितायाम् ७।५

३. यस्य पूर्वोक्तरागविशेषे रुचिरेव जातास्ति न तु रागविशेष एव स्वयं तस्य तादृशरागसुधाकराभाससमुल्लसितहृदयस्फटिकमणेः शास्त्रादिषु तासु सादृश्या रागात्मिकाया भक्तेः परिपाटीष्वपि रुचिर्जायते। जीवगोस्वामिकृत-भक्तिसन्दर्भे।

४. प्रेमैव गोपरमाणां काम इत्यगमत्प्रथाम्॥ गौतमीयतन्त्रे

भवन्ति। सम्बन्धरूपायां तु स्वेष्ट-पारिवारिकसम्बन्धविशेषाभिमानेनैव भगवत्सेवा भवति। प्रोक्तविवेचनस्य तात्पर्यमिदम्-भगवत्साधनायाः परमप्रयोजनं तु प्रेमतत्त्वमेवास्ति, तदेव परमपुरुषार्थः प्रेममहाधनमिति च ( प्रेमापुमर्थो महान् ) कथ्यते। एवं परमात्मविषयकभक्तिरूपमेव तत्त्वं तत्त्वतः प्रेमशब्दवाच्यं भवति। तदेव स्वविभावादिभिर्भक्तिरसरूपेण परिणतः सन् समस्तरसेषु 'रसराट्' इति कथ्यते। स एव रसराजो भक्तिः समस्तरसानां माधुर्यसौन्दर्यादिकमात्मन्यभिधत्ते। तस्य भक्तिरसस्याऽऽनन्दातिरेकेण भक्ता आत्मसंपृक्तपरसंपृक्तादिभावनाभिः सर्वथा विनिर्मुक्ताः सन्तश्चिदानन्दमया जायन्ते।

## साध्यभेदेन भक्तेः स्वरूपम्

'भजनमन्तःकरणस्य भगवदाकारतारूपं भक्तिरिति' भावव्युत्पत्त्या भक्तिशब्देन साध्यभक्तिरभिधीयते। 'भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्त्तनादिसाधनभक्तिरभिधीयते। पूर्वोक्तरीत्या साध्यसाधनभेदेन भक्तिर्द्विविधा निरूपिता भक्तिरसायने। तत्र निरतिशयपुमर्थत्वात् साध्यभक्तिरेव (फलभक्तिः) भक्तैः काम्या। सैव भक्तिचन्द्रिकानुसारेण स्थायिभावतया भक्तिरसरूपा[1]। तत्र साधनभक्तिरेव वैधीभक्तिर्नवविधभक्तिर्वा, साध्यभक्तिस्तु रागानुगाभक्तिः प्रेमलक्षणाभक्तिर्वा कथ्यते। भागवतादिनिरूपिता नवधाभक्तिर्मुख्यतया वैधीभक्तिरेव, या भक्तानां मते कठिना भक्तिरिति प्रोच्यते। सैव प्रेमलक्षणभक्त्या साकं दशविधतामवाप्य मध्यमभक्तिरूपेणाभ्युद्भाविता। केवला प्रेमलक्षणाभक्तिस्तु निष्कामरूपैव, तत्र प्रेम्णो रागस्य वा प्राधान्यम्, तस्योदाहरणन्तु गोपीजनानां प्रेमैव विद्यते। तत्रोपास्यं प्रति माहात्म्यज्ञानस्य, व्याकुलभावस्य, सर्वस्वसमर्पणस्योत्कटाभिलाषायाः, तत्सुखसुखित्वस्य दुर्निवाराकांक्षायाश्च प्रामुख्यं भवति। अत एव प्रेमलक्षणभक्तौ जातिवर्ण-लोकाचार-शास्त्राचार-कुलाचार-देशकालादीनां च न कोऽपि भेदो भवतीति प्रतिपादितं प्रेमपत्तननामके ग्रन्थे। अत एव भक्तिरियं सगुणोपासकैर्महताऽऽदरेण स्वीक्रियते। भगवन्तं प्रति प्रगाढस्नेहे सति भक्तसाधको यदा सांसारिकबन्धनात् प्रमुच्यते तदा स दिवानिशं नेत्राभ्यां प्रियतमस्य स्वरूपं पश्यति, कर्णाभ्यां तस्य गुणगानं शृणोति, पश्चात् सः सर्वं विहाय प्रमत्त इव इतस्ततः परिभ्रमति। एवञ्च भक्तः प्रेमाधिक्येन सततं रोमाञ्चितो भवति, दीर्घं प्रश्वसिति, तन्नेत्राभ्यामश्रुधारा प्रवहति। तादृशानां भक्तानां कृते का नवधा भक्तिः? प्रेमलक्षणभक्तेः साधकोऽन्तर्मुखीभूय निरन्तरं स्वसाध्य एव तिष्ठति। सा च भक्तिः परमरहस्यपूर्णा विद्यते। यथा जलं विना मीनः, दुग्धं विना शिशुः, औषधं विना रोगी, स्वातिजल-

---

१. भक्तिचन्द्रिकायाम् पृष्ठे—६२

केणं विना चातकः, चन्द्रं विना चकोरः, स्वमणिं विना सर्पो वा व्याकुलीभवति तथैव साधकः स्नेहाधारं भगवन्तं विना व्याकुलीभवति। यथा च कामिनी कान्तं, निर्धनो धनञ्च वाञ्छति तथैव सर्वं विहाय भक्तः केवलं भगवन्तं काङ्क्षते नान्यत् किञ्चिदितीय-मेवानुभूतिः श्रीतुलसीदासस्य रामचरितमानसे प्रतिभाति।

प्रेमलक्षणभक्तेः साधकस्य स्वरूपं 'बोधसारे' वर्णितमस्ति यत् प्रियतमस्य परमात्मन उपासनाकाले साधकस्य शरीरं रोमाञ्चितं विलक्षणं भवति। भक्त्या च यदा साधकस्य मन आनन्दितं जायते, प्रेमाश्रुभिर्मुखमण्डलम्, वाष्पाकुलवचसा कण्ठो गद्गदायमानो भवति तदोपास्यं विहाय क्षणमपि साधकस्य चेतो नान्यत्र विश्राम्यति। तदानीमेव सायुज्यादिमुक्तिचतुष्टयं साधकस्य दासी भवितुं कामयते[1]। भागवते प्रतिपादितं यत् प्रादुर्भूतप्रेम्णा द्रवीभूतचित्तः साधको गद्गदगिरा कदाचित् प्रलपति, प्रेमवशः कदाचित् रोदिति, कदाचित् हसति, कदाचिदुच्चैः स्वरेण गायति, नृत्यति च प्रेममग्नतया। लब्धप्रेममहाधनस्तादृशः साधको भुवनत्रयं पुनाति सर्वदा[2]।

प्रेमलक्षणभक्तिरेव पराभक्तिः श्रेष्ठाभक्तिः, या उत्तमाभक्तिरपि कथ्यते। पराभक्तौ साधकस्य चेतः स्वोपास्ये दिवानिशं तैलधारावदविच्छिन्नभावेन रमते। तत्र स्नेहस्याविच्छिन्नता भवति। शाण्डिल्यमते भगवति निरतिशयोऽनुराग एव पराभक्तिः। सा च पराभक्तिर्निर्हैतुकी अव्यवहिता च भवति। सैव साध्यभक्तिरित्यपि प्रोच्यते। मार्गेऽस्मिन् साधकः सालोक्यादिमुक्तिचतुष्टयं तृणमिव परिगणयति। सा च भक्तिः साधनायाश्चरमावस्था परमगुह्या च वर्तते। पराभक्तिकाले साध्यसाधकयोश्च शारीरिकभेदे सत्यपि साधनाक्षेत्रे तयोरैकात्म्यमेव भवति। भक्तभगवतोश्च तादात्म्यं साधकैरतिमनोहररूपेण वर्ण्यते। तेषां साधकानां मते यथा जल-तत्तरङ्गयोः, दृग्कनीनिकयोः, शब्दार्थयोश्च भेदोऽपि नास्ति, नास्त्यभेदोऽपि, तत्र तयोर्भेदाभेदौ भवतः, तयोस्तादात्म्यमेव भवति, तथैव पराभक्तिकाले भक्तभगवतोस्तादात्म्यमेव सर्वदा भवति।

यथा समाधिदशायां योगी परब्रह्मणा सह तादात्म्यमनुभवति, तस्येन्द्रियाणि चान्तर्मुखीभूय बाह्यजगतो विमुखायन्ते, स्वस्वकार्येभ्यश्च (विषयेभ्यः) प्रच्यवन्ते तथैव पराभक्तिसाधनायां भक्तानां प्रवृत्तयो बाह्यजगत अन्तर्मुख्यो भवन्ति। इन्द्रियाणि च तेषां पूर्णतो मनोऽनुगामिनि जायन्ते। पराभक्तिकाले भक्त आनन्दितो भूत्वा कदाचित् तारतरस्वरेण भगवद्गुणगणं गायति, कदाचिद् हसति, कदाचित् सहसा तूष्णीमा-

१. रोमाञ्चेन चमत्कृता तनुरियं भक्त्या मनो नन्दितं,
प्रेमाश्रूणि विभूषयन्ति वदनं कण्ठो गिरा गद्गदः।
नास्माकं क्षणमात्रमप्यवसरः कृष्णार्जुन कुर्वतां,
मुक्तेर्द्वारि चतुर्विधापि किमियं दास्याय लीलायते॥ बोधसारे

२. भागवते ११।१४।२४

कलयति। तदानीं तस्य भावनातन्त्री परमात्मनः स्वरेण सह पूर्णतः तादात्म्यमेति। तदा भक्तस्य भावनात्मकजीवने तीव्रसंवेदनशीलता, उत्फुल्लता च समाविष्टा भवति। ततः सर्वं विहाय दिवानिशं परमात्मनमेवानुभवति साधकः। तात्पर्यमिदं तादृशी पराभक्तिरखण्डाकारज्ञानस्याविच्छिन्नप्रवाहेण सह भक्तस्यात्यन्तसूक्ष्माया रसमयीसंवेदनशीलताया भगवत्कृपायाश्चातिरमणीयसंगमस्थली एव विद्यते। तादृशावस्थायामहभावः सर्वथा विलुप्यते, आत्मरूपेण केवलमीश्वरानुभूतिरेवावशिष्यते।

सा पराभक्तिः भक्तानां भावानुसारेणानेकरूपा भवति। कृष्णदासकविराजमते दास्य-सख्य-वात्सल्य शृङ्गारभावानुसारेण चतुर्विधा विभज्यते, सा परा भक्तिः[1]। भाषायां कोमलकान्त-पदावलिनिर्मातुर्भक्तशिरोमणिसूरदासस्य मतानुसारेण यथा जलं बहुरङ्गसंमिश्रणेन विभिन्नरूपं जायते तथैव भक्तानां भावानुसारेण भक्तिः सत्त्व रजस्तमश्शुद्धा चेति भेदेन चतुर्विधा भवति[2]। एवमेव भक्तानां भावभेदेन श्रीमद्भगवद्गीतायमार्त्तिरूपा, जिज्ञासारूपा, अर्थार्थित्वरूपा, ज्ञानरूपा चेति भक्तिश्चतुर्धा प्रतिपादिता[3]। प्रोक्तासु चतुर्विधभक्तिषु शुद्धा भक्तिरेव सर्वोत्तमा, यतो हि तत्साधनायां साधकः सर्वान् कामान् विहाय केवलं सर्वात्मना भगवदनुशीलनमेव करोति[4]।

## उपास्यस्वरूपज्ञानभेदेन भक्तेः स्वरूपम्

भक्तैरुपास्यस्य स्वरूपज्ञानानुसारेण स्वोपास्येन भगवता सह स्वस्वभावानुसारेण नानाविधाः सम्बन्धाः स्थाप्यन्ते, तत्तत्सम्बन्धानुसारेण च भक्तिशास्त्रे शान्तभक्तिः दास्यभक्तिः, सख्यभक्तिः, वात्सल्यभक्तिः, मधुरभक्तिश्चेति भेदाः परिकल्प्यन्ते। तत्र शान्तभक्तौ स्वेष्टस्य ज्ञानं परमब्रह्मत्वपरमात्मत्वादिरूपेण जायते, अत एव तस्यां स्वेष्टेऽचला निष्ठा भवति। दास्यभक्तौ शान्तभक्तिगुणैः सह सेवाभावस्य प्राधान्यं भवति। सख्यभक्तौ शान्तभक्तिगुणदास्यभक्तिगुणाभ्यां सह विश्वासपूर्णमैत्रीभावस्य प्राधान्यं भवति, गौरवसंभ्रमहीनस्य विश्रम्भप्रधानस्य प्राधान्यमिति। वात्सल्यभक्तौ शान्तस्य गुणैः, दास्यस्य सेवाभावैः, सख्यस्य गौरवसंभ्रमहीनैश्च सह ममताया आधिक्यं भवति। मधुरभक्तौ पूर्वोक्तगुणैः सह कान्ताभावस्य प्राधान्यं भवति, तत्र सदेहसेवाभावनया निरतिशयप्रेमप्रगाढभावनया च सर्वेषां पूर्वोक्तभावानां समाहारो भवति। अत एव मधुररसिकाचार्याणां मते सर्वरसेषु भक्तिरसः प्रधानम्, तत्रापि

१. चैतन्यचरितामृते आदिपरिकरे–५

२. सूरसागरे ३।१३

३. श्रीमद्भगवद्गीतायाम् ७।१६

४. चैतन्यचरितामृते मध्यपरिकरे–२६

मुख्यपञ्चभेदेषु मधुररस एव सर्वश्रेष्ठतमो रसः स्वीक्रियते। अतः सर्वरसेषु मधुररस एव रसराडिति कथ्यते।

साधनभक्त्या भक्तानां चेतसि समुद्भूता रतिरेव विभावादिभिः परिपुष्टा सती भक्तिरसरूपेण परिणमते, स च भक्तिरसः शान्त-दास्य-सख्य-वात्सल्य-मधुरादिभेदेन मुख्यतया पञ्चविधः, हास्याद्भुतवीरकरुणरौद्रवीभत्सभयानकादिभेदेन च सप्तविधो वर्तते। भक्तिश्च भक्तिरसज्ञानां मते परमप्रेमस्वरूपा, अमृतस्वरूपा, मानसस्योल्लासविशेषोऽस्ति। तात्पर्यमिदं यत् परमात्मनि परमासक्तिः परमानुरागश्चैवामृतत्वेन रसत्वेन चाभिव्यज्यते। भक्तिरसविषये नारायणतीर्थस्य मतमिदं यत् स्वेष्टचरणारविन्दमकरन्दमन्दाकिनीप्रवाहेऽवगाहमानस्य मनसः समुल्लासविशेष एव रसो रागो भावो वेति कथ्यते। स एवाऽऽत्मानन्दं प्रकटयति। स एव भक्तानां कृते मोक्षादपि प्रियतमो भक्तिरसरूपः फलभक्तिरिति कथ्यते। हरिरूपालम्बनविभावैः, तस्य माहात्म्यगुणादीनां श्रवणकीर्त्तनैर्वृन्दावनादिस्थानरूपैरुद्दीपनविभावैः, अश्रुरोमाञ्चादिभिरनुभावैः, हर्षनिर्वेदादिसञ्चारिभावैश्चाभिव्यक्तो भूत्वा रत्यादिरूपस्थायिभावो रसरूपो जायते, स एव मोक्षमपि न्यक्कुर्वन् फलभक्तिरिति कथ्यते[1]।

सर्वाधिष्ठानरूपात् 'रसो वै सः' इति श्रुत्या रसस्वरूपात् सच्चिदानन्दस्वरूपाच्च समुद्भूता सृष्टिरियं परमानन्दस्वरूपैव विद्यते, अत एव लौकिकानन्देष्वपि रसस्वरूपस्य परमात्मन एव आंशिकतयाभिव्यक्तिर्भवति। रसस्वरूपं तु सत्त्वोद्रेकमखण्डम्, नित्यम्, सनातनञ्च वर्तते। किन्तु विषयाऽऽश्रययोर्मालिन्येन शुद्धरसोऽप्यनायासेन मलिनायते, परन्तु तयोर्नैर्मल्ये सति लौकिकरसेऽपि परमपवित्रता परमदिव्यता च समायाति। अद्वैतपथपथिकस्वामिमधुसूदनमते तु विषयावच्छिन्नचैतन्यमेव द्रवावस्थापन्नान्तःकरणे भावरूपतां प्राप्नोति, पश्चात् स एव रसरूपे परिणमते। लौकिकरसो विषयावच्छिन्नत्वात् परमानन्दस्वरूपो भवितुं नार्हति, किन्तु विषयानवच्छिन्नस्य चिदानन्दघनस्य परमात्मनः स्वत एव स्फुरणात् भक्तिरसस्तु परमानन्दस्वरूपात्मकैवास्ति। अत एव भगवद्विषयिणी रती रसरूपैव, न तु भावरूपा, परमात्मभिन्नदेवविषयकरतिर्भावो भवति। अत एव तन्मते सर्वांशपरिपूर्णभक्तिरसापेक्षयाऽन्ये सर्वे रसा गण्या एव न सन्ति, यथा जाज्वल्यमानसूर्यसमक्षं खद्योतगणाः प्रकाशशून्याः प्रतीयन्ते तथैव भक्तिरससमक्षमन्येषां रसानां स्थितिर्निश्चमत्कृतिर्भवति[2]।

---

१. तथा च श्रीमन्मुरपुरमथनचरणारविन्दमकरन्दमन्दाकिनीमवगाहमानस्य मनसः समुल्लासो रागभावप्रेमशब्दाभिधेयमेव स्वानन्दमाविर्भावयन् कार्यकारणलिङ्गादिभिरभिव्यक्तो रसरूपो रत्यादिस्थायीभावो मोक्षमपि न्यक्कुर्वन् फलभक्तिरिति सिद्धम्। —भक्तिचन्द्रिकायाम्

२. भक्तिरसायने—२।७६

केषाञ्चिन्मते स्वाधिष्ठानप्रत्यक्चैतन्याभिन्नस्य परमात्मनः साक्षात्कारेण यस्य चित्तं सर्वभेदशून्यं भूत्वा, आत्मानन्देनाऽऽप्यायितं जायते, तस्य साधकस्य स्वस्माद्भिन्नस्य भगवतोऽनुभूतिर्न संभवति तत्कथं तस्मिन् साधके भगवद्विषयको रागो रतिर्वा समुद्भवेत् ? उच्यते तत्र प्रोक्तप्रकारस्य परमनिष्कामस्य पूर्णकामस्य साधकस्य चेतसि स्नेहेनाभेदस्याऽऽहार्यज्ञानं भवति, तेनैवाऽऽहार्यज्ञानेन साधके रागो भक्तिर्वा जायते। ततो भक्ताः प्रत्यक्चैतन्याभिन्नं परं ब्रह्म विदित्वाऽतिशयप्रीत्याऽऽहार्यज्ञानद्वारा भेदज्ञानं च परिकल्प्यात्यौत्सुक्येन स्वभावत एव भगवति भक्तिं साधयन्ति[1]। तेषां मते परिमार्थिकमद्वैतज्ञानमेव, भजनोपयोगितया द्वैतं परिकल्प्य भक्तिर्विधीयते भगवति, तादृशी भक्तिर्मुक्तितोऽपि श्रेष्ठा भवति। प्रत्यक्चैतन्याभिन्नब्रह्मविज्ञानात् पूर्वं द्वैतज्ञानेन जीवा बध्यन्ते बन्धने, किन्तु ब्रह्मणो विज्ञानानन्तरं भेदज्ञाने नष्टे सति भक्त्यर्थं भावितं द्वैतमद्वैतादप्युत्तमं भवति[2]। 'नाहं वेदैर्न तपसा' इति गीतोक्तरीत्या यो निखिलात्मा परमात्मा तत्त्वदर्शिभिर्योगिभिरपि न साक्षात् क्रियते, स एव प्रेमस्वरूपः सच्चिदानन्दः 'भक्त्या मामभिजानाति' इत्यादिना प्रेमनिष्ठसाधकैः स्वहृदयप्राङ्गणे सततं सर्वत्र विलोक्यते। अत एव ज्ञायते स परमात्मा केवलमुपासनयैवानायासेन लभ्यत इति।

तात्त्विकदृष्ट्या परब्रह्मनिगुर्णं निराकारमेवास्ति, निर्गुणत्वेन प्राकृतगुणगणा निषिध्यन्ते, दिव्यगुणगणास्तु सन्त्येव। वस्तुतो निर्गुणं निराकारं ब्रह्म स्वाचिन्त्यदिव्यलीलाशक्त्या दिव्यगुणगणान् स्वस्मिन्नाविष्करोत्येव, अतो दिव्यगुणगणयुक्तं परं ब्रह्म सगुणं निर्गुणञ्च कथ्यते, तन्मते प्राकृतगुणगणरहितत्त्वेन ब्रह्म निर्गुणमिति, दिव्यगुणगणयुक्तत्त्वेन तच्च सगुणमपीति। दिव्यगुणगणयुक्तं परं ब्रह्मैव भक्तजनाः स्वरुचिभेदेन भजन्ते। अत एव भक्तिः सामान्यभक्तिः, साधनभक्तिः, भावाश्रितभक्तिः, प्रेमाभक्तिरिति भेदेन चतुर्विधा भवति। किन्तु तासु भक्तिषु ज्ञानकर्माद्यनावृतमनुकूलतापूर्वकं परमात्मनोऽनुशीलनमेव सर्वोत्तमा भक्तिरुच्यते भक्तिशास्त्रप्रतिपादकैः[3]।

नैयायिकानां मते विषयजन्यं सुखं प्रायो दुःखमिश्रितमेव भवति, तच्च वैषयिकसुखं विषमिश्रतं मधुरं मनोहरं पक्वान्नसदृशं दुःखदायकमेव भवति। किन्तु 'एष ह्येवानन्दयति', 'मात्रमुपजीवन्ति', 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादि श्रुतिभिर्लौकिकसुखमपि सुखस्वरूपस्य परमात्मनोंऽश एवेति प्रतिपादितम्। स्वानुकूलविषयेऽन्तःकरणस्य

१. यत् सुभक्तेरतिशयप्रीत्या कैतववर्जनात्
स्वभावस्य स्वरसतो ज्ञात्वापि स्वाद्वयं पदम्।
विभेदभावमाहृत्य सेव्यतेऽत्यन्ततत्परैः॥ त्रिपुरसुन्दरीरहस्ये ज्ञानखण्डे

२. बोधसारे ४६

३ भक्तिरसामृतसिन्धौ १।१।११

प्रवृत्तिः शान्ता निश्चलाऽन्तर्मुखी च जायते। आत्मनो वस्तुतः सर्वथा निश्चला शान्ता सा स्थितिरेव सत्त्वोद्रेकावस्था विद्यते। एवञ्च वैषयिकसुखेऽपि स्वात्मानन्द एवाभिव्यज्यते। किन्तु विषयनिबन्धनत्वेन वृत्तिरोधकत्वेन च क्षणिकत्वात् तत्सुखं वैषयिकं क्षणभङ्गुरञ्चेति कथ्यते। अन्यथा वैषयिकसुखमपि परमसुखरूपस्य परमात्मनोंऽश एव वर्तते। 'रसो वै सः' इति श्रुत्या परमरसात्मकः प्रत्यक्चैतन्याभिन्नपरमात्मा एव प्रतिपाद्यते। यो भक्तिरसस्य परमप्राप्यो वर्तते।

प्रत्यक्चैतन्यभिन्नपरमात्मा निखिलरसानन्दमूर्तिरेवास्ति, स तु नित्यप्रेमस्वरूपः, नित्यरसस्वरूपः, नित्यानन्दस्वरूपश्चेति विद्यते। सूर्यकिरणसदृशः, अग्निस्फुलिङ्गसमो जीवश्च निखिलप्रेमस्वरूपस्य परमानन्दस्वरूपस्य परमात्मनोंऽश एवास्ति। अत एव विशुद्धः प्रेमरसानन्द एव जीवस्यापि स्वभावो वर्तते। एवञ्चाऽऽनन्दात्मकमेव ब्रह्म, तस्मादेव सर्वे जीवा जायन्ते, जीवन्ति, अन्ते च तस्मिन्नेव विलीयन्ते[1]। यथोक्तं ब्रह्मसूत्रे 'जन्माद्यस्य यतः[2]' इति सूत्रभाष्ये श्रीशङ्कराचार्यरामानुजाचार्यादिभिः।

परमात्मनो गुणगणश्रवणजन्यायां द्रवितमानसवृत्तौ प्रविष्टभगवदाकारतैव विभावानुभावसञ्चारिभिः संयोगात् रसरूपतामेति। तत्र परमात्मैवालम्बनविभावैः, तुलसीचन्दनाद्युद्दीपनविभावैः, नेत्रविक्रियाद्यनुभावैः, निर्वेदादिसञ्चारिभावैश्चाभिव्यज्यमानभगवदाकाराकारित एव स्थायिभावो विद्यते। परमानन्दसाक्षात्कारात्मको दुःखासंस्पृष्टः सुखस्वरूपो भक्तियोग एव परमपुरुषार्थोऽस्ति। यथा तापसंयोगेन द्रविते लाक्षारसे हिङ्गुलाद्यनायासेनैव सर्वांशे परिव्याप्नोति, पुनर्लक्षायाः काठिन्ये जाते, ततो द्रवीभूतायामपि तस्यां, ततो हिङ्गुलादि पृथक् कर्त्तुं न शक्यते तथैव भगवद्विषयकेन कामक्रोध-भयस्नेह-हर्षशोकादिना केनापि तापकभावेन लाक्षारससदृशो द्रवीभूतचित्ते सर्वांशतया प्रविष्टः परमानन्दस्वरूपो भगवान् स्थायिभावतया रसरूपत्वमाप्नोति। द्रवावस्थाप्रविष्टभगवदाकारता कथमपि पृथक् कर्त्तुं न शक्यते। किमन्यत्? कर्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः परमात्माऽपि ततः पृथक् भवितुं सर्वथाऽसमर्थ एव भवति[3]।

द्रवितान्तःकरणे विषयावच्छिन्नं चैतन्यमेव प्रवेशानन्तरं स्थायिभावतया रसरूपतामेति। यद्यपि कान्तादिविषयको लौकिकरसोऽपि परमानन्दस्वरूप एव, किन्तु तत्र जाड्यसंयोगेन लौकिकविषयसंसर्गेण च न्यूनता जायते। भक्तौ तु विषयानवच्छिन्नस्य चिदानन्दघनस्य भगवतः स्वतः स्फुरणेन भक्तिरसरूपतया परमानन्दरूपता प्रस्फुटति।

---

१. तैत्तिरीयोपनिषदि—भृगुवल्ल्यां षष्ठानुवाके

२. ब्रह्मसूत्रे १।१।२

३. हृदयाद् यदि निर्यासि पौरुषं गणयामि ते।

भक्तिरसप्रतिपादकानां मते भक्तिरसस्य चरमं लक्ष्यं तु यथा महासमुद्रे समागतानां सर्वासां नदीनां तादात्म्येन विलीनता भवति तथैव जीवात्मपरमात्मनोस्तादात्म्येन मिलनमेव । तयोस्तादात्म्यजन्यसुखमेव भक्तिरससाधनायाः परमं लक्ष्यं साध्यं वास्ति[1] ।

**आचार्याणां मते भक्तेः प्रभेदाः**

उपास्यभेदेन, उपासकभेदेन, सम्प्रदायप्रभृतिभेदेन वाऽनेकप्रकारेण भक्तेः प्रभेदाः प्रपञ्चिताः शास्त्रेषु विद्वद्भिः साधकैश्च, न केनाप्येतेषां सर्वेषां निर्णयः कर्त्तुं शक्यते । तत्रादौ श्रीमद्भगवद्गीतायां गौणीमुख्यभेदेन भक्तिर्द्विधा विभक्ता । तत्र गौणीभेदे आर्त्तभक्तस्याऽऽर्त्तिभक्तिः, जिज्ञासुभक्तस्य जिज्ञासुभक्तिः, अर्थार्थिभक्तस्यार्थार्थिभक्तिर्निवेश्यते, मुख्यभेदे तु ज्ञानिभक्तस्य ज्ञानभक्तिर्गण्यते । ज्ञानभक्तिरेवाहैतुकी भक्तिः कथ्यते[2] । अपि च गीतायां गौणीभक्तिरेव सात्त्विक-राजस-तामसभेदेन त्रिविधा प्रतिपादिता । ततः पर पराभक्तिः, या मुख्याऽहैतुकी वा कथ्यते । सा पराभक्तिर्निर्गुणभक्तिः प्रोच्यते । दैवीमीमांसायां रस ादे वैधी-रागानुगाभेदेन सा द्विविधा वर्णिता, तत्र शास्त्रविधानैः सम्पादिता भक्तिर्वैधीभक्तिः, तद्भिन्ना शान्तिप्रदायिनीभक्ती रागानुगाभक्तिरिति कथ्यते[3] । भक्तिशास्त्रप्रवर्तकानां शाण्डिल्य[4] नारदादीनां[5] मते गौणीमुख्यभेदेन भक्तिर्द्विविधा । अपि च नारदेन सामान्यतयैकादशविधा भक्तिः[6] स्थापिता स्वनिर्मितभक्तिसूत्रे ।

श्रीमद्भागवतमहापुराणे[7] भक्तप्रह्लादेन नवप्रकारा भक्तिः कथिता । एवमेव 'अध्यात्मरामायणे'ऽपि भक्तेर्नवभेदाः प्रपञ्चिताः । श्रीगोस्वामितुलसीदासेनापि लोकविश्रुत 'रामचरितमानसे' नवविधा भक्तिरेव निरूपिता । इत्थञ्च नवभेदात्मिकाया भक्तेः परमात्मनो नवप्रकारात्मका साधका भक्ता वा वर्णिताः सन्ति भक्तिशास्त्रे । तत्र परमात्मनश्चरितश्रवणे परीक्षितः, तस्य गुणगणकीर्त्तने श्रीशुकदेवः, स्मरणे प्रह्लादः, पादसेवने लक्ष्मीः, अर्चने पृथुः, वन्दनेऽक्रूरः, दास्ये हनुमान् , सख्येऽर्जुनः, आत्मनिवेदने च बलिरिति सर्वे भक्ता भगवतः समानरूपेण प्रियाः सन्ति । ते च सर्वे भगवद्भक्तिं विना मोक्षमपि न कामयन्ते । एतत्सर्वं प्रपञ्चितं भक्तिशास्त्रेषु[8] ।

मुक्ताफले बोपदेवेन विहिताऽविहितभेदेन द्विविधा भक्तिः प्रतिपादिता । तत्र "शास्त्रमर्यादां विनैव स्नेहेन भगवति मनोऽभिनिवेशोऽविहिता रागानुगा वा भक्तिः । भगवति रागात्मिका कामानुसृता या परमाविष्टता रागात्मिका भक्तिः व्रजवासिजनेष्वभिव्यक्ता" इत्यभिहितम् । नारायणभट्टमतानुसारेण सेयं भक्तिः कामरूपा सम्बन्धरूपा चेति द्विविधा भवति । तत्र कामरूपा गोपीजनेषु, सम्बन्धरूपा च नन्दादिषु प्रतिफलिता ।

---

१. भक्ति-अङ्के कल्याणे पृ० ३३५
२. श्रीमद्भगवद्गीतायाम् ७।१६
३. दैवीमीमांसादर्शने रसपादे ११, १२
४. शाण्डिल्यभक्तिसूत्रे ७२
५. नारदभक्तिसूत्रे ५४-६६
६. नारदभक्तिसूत्रे ८२
७. भागवते ७।५।२३
८. भक्तिचन्द्रिकायां पृष्ठे १५६

बोपदेवेन भागवतमनुसृत्य स्वीये मुक्ताफले कामजा, द्वेषजा, भयजा, स्नेहजा चेति तस्या-श्चत्वारो भेदाः, तासाञ्च क्रमशो गोपीजनाः, कंसप्रभृतयः,चैद्यादिनृपाः कृष्णसम्बन्धिनश्चेति चत्वारोऽधिकारिणश्च प्रदर्शिताः[1]। वेदप्रतिपादितशास्त्रमर्यादया भगवति मनोऽभिनिवेशः 'विहिता' भक्तिः। श्रवणकीर्तनादिरूपाया नव धा-भक्तिः, सैव सगुणभक्तिरित्यप्यभिधीयते। सा चादौ मिश्रा शुद्धाभेदेन द्विविधा,पुनर्मिश्रा कर्ममिश्रा-कर्मज्ञानमिश्रा ज्ञानमिश्रा चेति त्रिविधा भवति। तत्र कर्ममिश्रा भक्तिः सात्त्विकी-राजसी-तामसीति त्रिविधा। तत्र सात्त्विकी च कर्मक्षयार्था, विष्णुप्रीत्यर्था, विधिसिद्ध्यर्था चेति भेदत्रयवती भक्तिरिति भागवतेऽपि[2] प्रतिपादिता। एवमेव सात्त्विकीभक्तिस्त्रिविधेति 'भक्तिमीमांसा' सूत्रे निरूपितम्[3]। तत्र सात्त्विकीभक्तिर्दास्यभक्तावन्तर्भूता, भगवदाज्ञापरिपालनतया भगवत्प्रीतिमात्रफलकत्वात्। राजसीभक्तिरपि विषयार्था, यशोऽर्था, ऐश्वर्यार्था चेति त्रिविधा भवति[4]। सा च राजसी-भक्तिरर्चनभक्तावन्तर्भूता। एवमेव तामसीभक्तिरपि हिंसार्था, दम्भार्था, मात्सर्यार्था चेति त्रिविधा भवति[5]। सा च तामसी भक्तिर्वन्दनभक्तावन्तर्भूता।

कर्मज्ञानमिश्राभक्तिश्चापि भेदत्रयवती-उत्तमा, मध्यमा, प्राकृता चेति। तत्र चोत्तमा-सर्वभूतसाक्षात्कारे द्रवावस्थाप्रविष्टभगवदाकारताया एव प्रकाशकत्वाद् जतुरङ्गवत् सर्व-भूतेषु भगवद्भावापन्नतैवोत्तमा भक्तिः[6]। तादृशभावान्यथानुपपत्तेः प्राक् पूर्णद्रवावस्था भवति। न्यूनद्रवावस्थायां तु मध्यमाभक्तिः[7]। यस्य चित्ते तु द्रवावस्था नोत्पन्ना न वा परिपुष्टा, किन्तु तदर्थं यो भागवतधर्मान् प्रेम्णाऽनुतिष्ठति सा भक्तिश्चित्तस्य काठिन्या-वस्थाविनाशाय भवति। सैव प्राकृतजनस्य[8]। भागवते समुद्राभिमुखगङ्गाप्रवाहवद-खण्डरूपेण भगवद्गुणश्रवणमात्रेण भगवदुन्मुखतया चेतसः प्रवाहो ज्ञानमिश्राभक्तिः निर्गुणभक्तिर्वेति प्रोच्यते[9]। एवञ्च कर्ममिश्रा गृहस्थानाम्, कर्मज्ञानमिश्रा वानप्रस्थानाम्, ज्ञानमिश्रा च भिक्षूणां विहिता वर्तते। एतत्सर्वं मुक्ताफले श्रीबोपदेवेन सविस्तरं प्रपञ्चितम्।

---

१. भागवते ७।१।३० २. भागवते ३।२९।१०

३. भक्तिमीमांसासूत्रे २।२।२ ४. भागवते ३।२९।९

५. अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा।
संरम्भी भिन्नदृग्भावं मयि कुर्यात् स तामसः॥ भागवते ३।२९।८

६. सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥ भागवते ११।२।४५

७. ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः॥ भागवते ११।२।४६

८. भागवते ११।२।४७ ९. भागवते ३।२९।११

## मुक्ताफले[1] भक्तिभेदानां सारिणी निर्दिश्यते




———

१. मुक्ताफले पञ्चमाऽध्याये पृष्ठे ८३–९३ हेमाद्रिकृतकैवल्यटीकायाम्

## भक्तिरसामृतसिन्धौ[1] भक्तिप्रभेदानां सारिणी




१. भक्तिरसामृतसिन्धौ १।२।४

## भक्तियोगः

परमेश्वरस्य प्राप्त्यर्थं कर्मयोगो ज्ञानयोगो भक्तियोगश्चेति योगत्रयं प्रतिपादितं शास्त्रेषु मुमुक्षूणां कृते। तत्र कर्मयोगः शास्त्रविहितवर्णाश्रमधर्मः, स भक्तिशास्त्रे साधनाभक्तिरिति कथ्यते। तेनान्तःकरणं परिशुध्यति। अतस्तस्यानुष्ठानमन्तःकरणस्य शुद्धिपर्यन्तं करणीयम्, यतो हि तथाविध एव भगवदादेशः[1]। अन्तःकरणस्य शुद्धिः प्रकारद्वयेन भवति। तत्र प्रथमो यस्य हृदयं पाषाणवन्नीरसं वर्तते, तस्य हृदयं धर्मानुष्ठानेन न द्रवति, किन्तु तस्य चित्तद्रुतिर्निर्वेदपूर्वकतत्त्वज्ञानेन जायते। द्वितीयश्च यस्य हृदयं भगवद्वासनावासितं वर्तते, तस्य हृदयं भगवत्कथाश्रवणादिभिर्द्रवति, ततस्तस्मिन् भगवद्धर्मेण सह भक्तिरुदेति। 'अमानित्वमदम्भित्वं'मित्यारभ्य 'एतज्ज्ञानमिति प्रोक्त[2]'मित्यन्तेन प्रोक्तस्य ज्ञानयोगस्य चरमं लक्ष्यं भक्तियोगस्यावाप्तिरेव। भगवद्भक्तियोगोत्पत्तिं विना ज्ञानयोगो निरर्थक एव। भक्त्या एव भगवत्प्राप्तिः। भागवते प्रोक्तं यत् सांख्यमतनिरूपितं पञ्चविंशतितत्त्वानामनुलोमक्रमेण जगदुत्पत्तिविषयकानुचिन्तनं प्रतिलोमक्रमेण च जगल्लयविषयकानुचिन्तनं च भक्तियोगप्राप्तिपर्यन्तमेव कर्त्तव्यम्, यतो हि तत्त्वचिन्तनेन यदा मनसो निर्वेदो भवति, ततस्तत्त्वज्ञानिनोऽज्ञानं स्वयमेव तिरो भवति[3]।

कुत्रचित् ज्ञानयोगस्य साधनं भक्तिरित्यपि प्रोक्तम्, तत्रोच्यते-फलसाधनभेदेन भक्तिर्द्विधा प्रोक्ता। तत्र 'भजनमन्तःकरणस्य भगवदाकारतापादनं भक्तिरिति भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते तथा च 'भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनादिसाधनमभिधीयते[4]'। तत्र साधनभक्तिरेव ज्ञानस्य साधनं, स्वयं पुरुषार्थत्वाभावात्, किन्तु फलभक्तिस्तु निरतिशयपुमर्थत्वाज्ज्ञानस्य साधनं नास्ति, साधनभूतज्ञानादेव सा समुद्भवति। ज्ञानेन भक्तिः, तया च भगवदवाप्तिः। प्रतिपादितञ्च भागवते भक्तस्य कल्याणं न ज्ञानेन, न च वैराग्येण वा भवति, यतो हि कर्मतपोज्ञानवैराग्यधर्मादिभिश्च यः स्वर्गो मोक्षो वा महताऽऽयासेन लभ्यते स तु भक्तैर्भक्त्याऽनायासेन प्राप्यते। ते सर्वं विहाय भगवतो भक्तिमेव याचन्ते नान्यत्, इयमेव साधनपरम्पराश्रया भक्तिः। कुत्रचित् प्राक्तनसंस्कारैः साधनस्य निरपेक्षतायामपि भक्तिरुत्पद्यते। तत्र पूर्वजन्मसञ्चितसाधनमेव हेतुः।

१. भागवते ११।२०।६।
२. श्रीमद्भगवद्गीतायाम् १३।७–११।
३. भागवते ११।२०।२२–२३।
४. भक्तिरसायने पृष्ठे २१ टीकायाम्।

भक्तियोगस्तु 'प्रोक्तेन भक्तियोगेन'[१] इत्यादिरीत्या साधनभक्तिनिष्ठया सकलविषयनिष्ठं प्रेम भगवत्येव समर्पयतः सम्पूर्णविषयविमुखमनसो सौभाग्यवतः पुरुषस्य भगवद्गुण-गरिमाग्रथनरूपग्रन्थश्रवणजनितद्रुतिरूपायां चित्तवृत्तौ सर्वसाधनफलभूतायां गृहीतभग-वदाकारतायां विभावानुभावसञ्चारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यस्थायिभावः परमानन्दसाक्षात्कारात्मको जायते। स एव भक्तियोगः, स एव रसकोविदमते निरतिशयानन्दात्मकः परमपुरुषार्थो वर्तते। स एव रसज्ञैः साधकैः समुपासनीयः।

इत्थं च भगवद्भक्ता[१] भगवद्भक्तियोगेनैवानायासेन[२] सर्वं लभन्ते। एवं च कर्मज्ञानोपासनेषु चतुर्विधमुक्तिसाधनेषु भक्तियोग एव परमोत्कृष्टतमो मुक्तेरुपायः प्रतिपादितः स्वयमेव भगवता श्रीकृष्णेन भागवते—

'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति॥' ११।२०।३३

श्रीमद्भगवद्गीताया द्वितीयषट्कस्य प्रतिपाद्यो भक्तियोगः। एतत्तु द्वैताद्वैतादि-सर्वमतसम्प्रतिपन्नम्। एवं सत्यपि भक्तियोगविषयमधिकृत्य सन्ति विविधावादा वादिनाम्। तत्र भक्तियोगविषयभूतस्य चतुर्भुजत्वादिविशिष्टदेहवतः सगुणस्य कमनीयदिव्यपुरुषः परमात्मनो वास्तविकत्वं विशिष्टाद्वैत-द्वैत-शुद्धाद्वैतादिदर्शनानुयायिनो मन्यन्ते। केवलाद्वैतवादिनस्तु ( शाङ्करानुयायिनस्तु ) व्यावहारिकसत्यत्वमेव तादृशस्य ब्रह्मणः स्वीकुर्वन्ति। पारमार्थिकत्वन्तु केवलैकस्य निर्गुणब्रह्मण एवेति, तन्मते शिव-विष्णु-राम-कृष्णादिमूर्त्तीनां साकाराणां घटादिवदपारमार्थिकत्वमेव। ईश्वरास्तित्व-निरासकमीमांसकास्तु भक्तियोगाऽऽलम्बनस्य परमात्मनः सत्तामेव नाङ्गीकुर्वन्ति। एतन्मते ब्रह्मणो जगत्कारणत्वादिकमपि न स्वीक्रियते। अद्वैतिनस्तु व्यावहारिकतया सत्यत्वेनाभिमतस्य सगुणब्रह्मणो जगत्कारणत्वमातिष्ठन्ते। मिथ्यावस्तुनोऽप्यर्थक्रिया-कारित्वे का शंका व्यावहारिकसत्यनामिति वदन्ति। द्वैतादिमतावलम्बिभिः स्वीकृता मुक्ति-रद्वैतमते गौणीति प्रोच्यते। तत्र मुक्तिसादृश्येन मुक्तित्वोपचारस्वीकारात्। निर्गुणब्रह्मण-भावाख्यायां वास्तविकमुक्तावेव भक्तियोगाऽऽलम्बनस्य सगुणब्रह्मणः सत्ताऽपैति नत्वर्चिरा-दिना सगुणभावापत्ताविति केवलाद्वैतिनो मन्यन्ते। स्वतः प्रामाण्यवादिनो हि सर्वेऽपि वेदान्तिनः। ते यावद् बाधग्रहं प्रवृत्तिप्रयोजकं प्रामाण्यं कुतो नाङ्गीकर्त्तुमर्हन्ति। तस्मादद्वैते बाधदर्शनपर्यन्तं सगुणवाक्यप्रामाण्यादिव्यवहारो न विरुध्यते। अद्वय-

१. भागवते ११।२०।२६।

२. चतुर्विधा तु या मुक्तिर्मदुपासनया भवेत्—मुक्तिकोपनिषदि १।२५।

ब्रह्मतत्त्वस्यापि बाधकं किमपि शास्त्रादिकं प्रमाणं नास्ति येन निर्विशेषमपि ब्रह्म-बाध्यमानत्वेनापारमार्थिकमिति स्यात्। ब्रह्मणो निर्विशेषत्वे परः शतं श्रुतयः प्रमाणता-मुपगच्छन्ति । एवञ्चाद्वैतिनां निर्गुणवादस्यासत्कल्पनामाश्रित्य सगुण एव वेदान्त-पर्यवसानस्वीकरणमयुक्तमित्यद्वैतिनः। इत्थञ्चाद्वैतिनोऽपि व्यावहारिकसत्यस्य भक्तियोग-विषयत्वमङ्गीकुर्वन्ति। तस्मात् तन्मतेऽपि भक्तियोगानस्तित्वे विवाद इति सिद्धम्। द्वैतविशिष्टाद्वैतादिमते गीताद्वितीयषट्कार्थस्य भक्तियोगस्य साक्षात् मुक्तिसाधनत्वं स्वीक्रियते। तमेव भक्तियोगं गौणमुक्तिसाधनत्वेनाद्वैतिनः स्वीकुर्वन्ति। अयमेवैतेषा विशेषः। क्वचिन्मते "परमात्मनो भक्तियोग एव ज्ञानयोगभक्तेरपि ज्ञानविशेषत्वादिति स्वीक्रियते।" अन्यमते तु प्रत्यगात्मविषयो ज्ञानयोगः, भक्तियोगस्तु परमात्मविषय इत्यभिधीयते । एतन्मतद्वयापेक्षया शाङ्कराद्वैतं विलक्षणमेव । तत्र निर्गुणसगुण-वाक्यानां यथाश्रुतमुभयत्र प्रामाण्यमङ्गीकृत्य भक्तिज्ञानयोगयोर्विषयत्वेन परमात्मै-वाङ्गीक्रियते । एवञ्च सति निम्नाङ्किता विचाराः प्रादुर्भवन्ति यद्यथा भक्तियोग-विषयत्वेन स्वीकृतस्य सगुणस्य पारमार्थिकत्वं व्यावहारिकत्वं वा, एवं भक्तियोग-साध्यो ज्ञानयोगो मोक्षसाधनत्वेनाभिमन्यत उत भक्तियोगेनैव शास्त्रसमाप्तिः, तथा जगद् व्यापारवर्जं भोगमात्रसाम्येन ब्रह्मभावरूपस्यैव भक्तियोगसाध्यस्य मोक्षस्य मुख्यतया शास्त्रे प्रतिपादनमुतान्यस्यैवेति ।

सन्निकृष्टमाधिभौतिकं वस्तु द्वारीकृत्याऽऽधिदैविकदविष्ठवस्तुनि मनसो दृढिकारः। प्रत्यक्षानुभवेन परोक्षार्थे प्रत्ययप्रवाहसम्पादनम् , आस्तिकानां दृढविश्वासपूर्वकं सूर्ये, गुरावतारपुरुषे वेश्वरोचितकर्मकरणम् , चेतसा धार्यमाणे विषये चित्तसंयमपूर्वक-बुद्धिस्थैर्योत्पादनमित्यादीनि तत्र तत्र प्रतिपादितानि भक्तिलक्षणानि । एतच्च सर्वमुपनिषदि द्रष्टुं शक्यम्।

संग्रहेणेत्थं वक्तुं शक्यते यदाधिदैविकत्वाद बाह्यप्रत्यक्षेण ज्ञातुमशक्ये परमदवीयसि वस्तुनि सुकरतया ज्ञानोत्पादनायाऽऽधिभौतिके कस्मिंश्चिदर्थे, अहार्यारोपमूलकं प्रतिरूप-मूलकं वा प्रतीकमूलकं प्रत्ययालम्बनं विधाय तद्विषयकप्रत्ययप्रवाहोत्पादनमुपासनमिति। अहार्यारोपो यथा लिपिभिरक्षराणाम्। लिपिविशेषसंकेतेनाकाराद्यक्षराणां बोधोऽहार्या-रोपमूलक इत्यर्थः। अत्र लिपिराकाशगुणभूताक्षराणां प्रतिरूपं प्रतीकं वा भवितुं नार्हति। मसीकृतरेखाविशेषस्य शब्दरूपैरक्षरैः सह सादृश्याद्यभावत्। साकारनिराकारयोः सादृश्यस्य वक्तुमशक्यत्वात्। तस्मादहार्यरोपस्य तदुभयभिन्नत्वं सिद्ध्यति। वेदेऽपि कुशमुयौ ब्रह्मकल्पनमहार्यारोपेणैवेति विज्ञेयम्।

प्रतिरूपेणापि क्वचिदन्यत्र मनसोऽवस्थानं संभवति। यथा चित्रं दृष्ट्वा तद्वतो-ऽनुसन्धानम्। यथा वा शालग्रामशीलायां हरिधीः। एताभ्यां भिन्ना प्रतीकविद्या भवति,

तद्यथाऽङ्गुलिग्रहणेन पितृग्रहणबुद्धिः, चरणसेवया वा गुरुसेवाबुद्धिः। प्रतीकशब्दोऽत्रावयववाची। जगदव्यापकस्यैकस्याव्ययस्य क्वचिदंशे बुद्धि कारणेन जगदीश्वरेऽवयविनि बुद्धिकरणमुपासनम्। इयं खलु प्रतीकोपासना विद्यते।

एवञ्चेश्वरस्योपासनं पूर्वोक्तविधात्रये येन केनापि कर्त्तुं शक्यम्। एकैकयाऽपि विधयोपासनं भवति। क्वचिच्च द्वयोः तिसृणां वा समुच्चयोऽपि भवति। तदिदं त्रिविधमुपासनं चिन्तितम्।

## प्रेमा पुमर्थो महान्

जीवात्मपरमात्मनः साधर्म्यं सम्पादनमेव भक्तिरसस्य साध्यं वर्तते। एवं चोपास्योपासकयोस्तादात्म्यमेव भक्तिरसस्य मुख्यं लक्ष्यमस्ति। तयोस्तादात्म्यरूपभक्तिभावापन्नसाधक एव भक्तिरसरसिकः प्रेमरसरसिको वा। तत्र परमात्मा परमप्रेमस्वरूपो विद्यते। यथा सूर्यादभिन्नस्तस्य प्रकाशस्तथैव परमात्मनोऽभिन्न एव प्रेमा, एवं च प्रेमस्वरूपो हरिः, हरिस्वरूपं प्रेमा वा, तयोस्तादात्म्यज्ञानमेव प्रेमतत्त्वस्य साध्यमिति।

जीवात्मपरमात्मनोर्वास्तविकस्वरूपस्य पारस्परिकसम्बन्धस्य च परिज्ञानाय स्वस्वपक्षसंस्थापनाय च दार्शनिकैः बहवो द्वैताद्वैतादिरूपदार्शनिकपक्षाः संस्थापिताः। यथा जीवात्मपरमात्मनोः, उपास्योपासकयोः, शक्तिशक्तिमतोश्च पारस्परिकसम्बन्धो बहुप्रकारेणावतारितस्तथैव सहृदयसाधकैर्भावुकभक्तैश्च शक्तिशक्तिमतोः रागात्मकसम्बन्धपरिज्ञानाय प्रेमतत्त्वस्य दार्शनिकसिद्धान्तः स्थापितः प्रचारितश्च। वस्तुतस्तु सगुणोपासका निर्गुणोपासका वा, साधनात्मकसाधकाः भावात्मकसाधकाः वा, किं बहुना सर्वेऽपि साधकाः परोक्षापरोक्षरूपेण प्रेमैव परमपुरुषार्थं इति स्वीकुर्वन्ति[1]। यतो हि तेषां मते प्रेमैव सकलचराचरस्य प्राणिमात्रस्य नैसर्गिकः स्वाभाविको व्यापकवृत्तिश्च विद्यते। तस्य प्रेरणया एव लौकिकालौकिकसमस्तव्यापाराः निरन्तरं च प्रचलन्ति। अपि च प्रेम्णो वशीवर्त्ती भगवान् भक्तेच्छया तस्य चित्ते रमते नृत्यति च।

मनुष्याणां सर्वासु चित्तवृत्तिषु प्रेमवृत्तिरेव मुख्या, अत्यन्तव्यापकतया, तलस्पर्शितया, मनोमुग्धकारितया च सैव मानवानां सर्वासां वृत्तीनां नियामिका सञ्चालिका वा विद्यते। मनुष्यस्य ज्ञान-कर्मेच्छावृत्तिषु प्रेमा एव प्रेरकभूतो विद्यते। तत्रापि वाञ्छावृत्त्या सह प्रेम्णः प्रगाढः सम्बन्धो वर्तते। एवञ्चाभिलषितपदार्थे चित्तस्य संलग्नता, सात्त्विकाऽऽनन्दप्राप्त्यर्थं तस्य वाञ्छा, स्वयमेवाऽऽनन्दप्राप्तिः 'सर्वे भवन्तु सुखिनः' इति भावनया परेभ्योऽपि आनन्दप्रदानम्, भगवत्सुखोत्पादनव्यग्रता च भक्तिरसस्य सामग्री विद्यते। एवं च प्रेम्णि चित्तस्य ज्ञानकर्मेच्छादिवृत्तीनां समावेशो वर्तते। वस्तुतो वाञ्छारूपात्मक एव प्रेमा, स एव समये समये भिन्नं भिन्नं स्वरूपं

१. प्रेमा पुमर्थो महान्—विश्वनाथचक्रवर्ती

गृह्णाति । ज्ञानं विना वाञ्छा चक्षुर्हीना, वाञ्छां विना ज्ञानं पङ्गुः, क्रियां विना चोभेऽपि निष्क्रिये एव स्तः, यतो हि वाञ्छा गतिं ददाति, ज्ञानं तस्य समुचितां दिशां निर्दिशति, ततः क्रिया तयोः समन्वयात्मकस्वरूपं प्रेमाणमभिव्यनक्ति । एवं च प्रेमतत्त्वस्य विलक्षणताव्यापकतादिवत्त्वेनैव भगवत्प्रेमपिपासवो भावुकभक्ताः साधकाश्च विविधदार्शनिकमतानां दुरूहतां जटिलतां शुष्कतां च विचार्यैव तद् विहाय प्रशस्तप्रेममार्गमन्वसरन् । तत्रामरप्रेमरसायनं समास्वादयतां भक्तिभावापन्नसाधकानां मते प्रेमा मूकास्वादनवत् केवलमनिर्वचनीयतत्त्वमेवास्ति । स च प्रतिक्षणं वर्धमानः, गुणरहितः, कामनारहितः, अविच्छिन्नः, अतिसूक्ष्मः, स्वानुभवैकगम्यरूपश्च वर्तते । तस्य च श्रेष्ठसाधकः प्रेमैव सर्वत्र पश्यति, तमेव शृणोति, तमेव वर्णयति, चिन्तयति च[१] । नारदेन भक्तिः परमप्रेमस्वरूपतया, अमृतस्वरूपतया च प्रतिपादिता[२] । एवमेव शाण्डिल्येन च परमात्मनि सर्वोत्तमगम्भीरानुराग एव भक्तित्वेन निरूपितः[३] । इत्थञ्चाध्यायेऽस्मिन् भक्तिसूत्रानुसारेण भक्तिरसः सोपष्टम्भं प्रपञ्चितः, भक्तिविषयकानि विविधमतानि च वर्णितानि ।

●

१. नारदभक्तिसूत्रे ५१–५५ ।

२. नारदभक्तिसूत्रे–२–३ ।

३. 'सा परानुरक्तिरीश्वरे'–शाण्डिल्यभक्तिसूत्रे–१

# भक्तिरस-विमर्शः

## मानसशास्त्र( मनोविज्ञान ) दृष्ट्या
## भक्तिरसविवेचनात्मको

## द्वितीयोऽध्यायः

**मनव ए मनुष्याणां कारणं बन्धमोक्षयोः ।।**

असंशयं महाबाहो मनो दुर्निहं चलम् ।
अभ्यासेन तु कौन्तेय! वैराग्येन च गृह्यते ।।

—श्रीमद्भगवद्गीतायाम् ६।३५

भगवन्तं प्रति भक्तानां मनोरागस्य सर्वोत्कृष्टावस्थैव भक्तिरसो विद्यते। स एव भगवन्तं प्रति भक्तानां रागात्मकसम्बन्धस्य सर्वाधिकं कोमलं कमनीयं च स्वरूपं वर्तते। स तु वाङ्मनसोरगोचरं स्वानुभवैकगम्यमनुपमं तत्त्वं वर्तते, तस्य रहस्यस्य ज्ञातारस्तु तदुपासका एव। तत्र साधकाः समस्तलौकिकपदार्थेभ्यः पराङ्मुखीभूय ऐकान्तिकरूपेण परमेश्वरे आत्मानं नियोजयन्ति। ईश्वरोपासनाया मार्गोऽयं यद्यपि स्वाभाविक एव तथापि महाकष्टसाध्यः। यतमाना अपि केचिदेव साधकाः तत्त्वतस्तं भगवन्तं जानन्ति। यदा साधकस्य समस्तलौकिकप्रवृत्तयः परमेश्वरोन्मुखायन्ते तदा एव भक्तिरसावस्था समुदेति। तादृशविशिष्टरसावस्थायामेव मनसः सर्वा आन्तरा बाह्याश्च क्रियाः, सङ्कल्पविकल्परूपा शक्तयश्च स्वयमेव विरमन्ते, ततो भक्तिरसः कार्यकारणसम्बन्धात् पारं याति।

कार्यकारणसम्बन्धयुक्तमनोवैज्ञानिकदृष्ट्या भक्तिरसे लौकिकप्रेमप्रतीकैरलौकिकप्रेमा प्रतीयते। सर्वैश्वर्यसम्पन्नः कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थो भगवान् भक्तिभावनान्तर्गतः सन् प्रेमाधारः प्राणवल्लभश्च जायते। भावुकभक्तगणाश्च तस्य प्रियतमा भूत्वा तस्य मधुरलीलायाः रसास्वादनं कुर्वन्ति। यद्यपि भगवतो मधुरलीलायामपि सर्वाः कामपरकवैषयिकप्रवृत्तयो विद्यन्ते, किन्तु ताः सर्वा विकारशून्या एव भवन्ति। वैषयिकसुखापेक्षयाऽऽध्यात्मिकसुखस्येदमेव वैशिष्ट्यमस्ति। अत एव भक्तिरससाधको लौकिकप्रेमप्रतीकैर्जीवात्मपरमात्मनोश्चातिगोपनीयं रहस्यपूर्णं च भगवतः प्रणयलीलामेवानुभवति। तत्र येन कारणेन निराकारं ब्रह्म साकाररूपेणावतीर्णं भवति तेनैव कारणेनालौकिकनित्यप्रणयलीलारसस्याभिव्यक्त्यर्थं लौकिकप्रेमप्रतीकस्याऽऽवश्यकता सिध्यति। तदर्थमेव भक्तिरसस्य मनोवैज्ञानिकविवेचनस्याऽऽवश्यकता समनुभूयते मानसशास्त्रज्ञैर्भक्तिरसज्ञैः।

## भक्तिरसदृष्ट्या मानसशास्त्रविषये विदुषां विचाराः

भारतीयचिन्तनस्याऽऽधारशीलाऽध्यात्मवादो वर्तते। अत एव समस्तभारतीयचिन्तनविधिषु ऽऽध्यात्मिकतायाः प्रभावो दृश्यते। किन्तु तद्विपरीततया पाश्चात्त्यचिन्तनपद्धतिः प्रायः भौतिकप्रभावेण प्रभाविता दृष्टिगोचरीभवति। तस्य तात्पर्यमिदं नास्ति यत् पाश्चात्त्यदेशेषु भक्तेः सर्वथाऽभावो वर्तते। यतो हि बाइबिलग्रन्थरूपे पाश्चात्त्यधर्मशास्त्रेऽपि ईश्वरानुरागो भगवत्प्राप्तिसुखं च मनोरमतया वर्णितमस्ति। भारतीयकबीरादिसाधकैरिव ईसाईसाधकैरप्याध्यात्मिकसुखाभिव्यक्तेराध्यात्मिकपरिणयस्य च मधुरवर्णनं कृतम्। किन्तु भारतीयभक्तिसाधनायां स्वतन्त्ररूपेण यादृशो भक्तिरसस्य परिपाकोऽभूत्, तादृशोऽन्यत्र दुर्लभ एव। अत एव भारतीय-

पाश्चात्त्यमानसशास्त्रेषु दृष्टिवैषम्यम्। पाश्चात्त्यमानसशास्त्रविद्भिर्भौतिकदृष्टया मानव-मनोरागस्य मीमांसा कृता। भौतिकवादयुगेऽस्मिन् तादृशं भौतिकप्रधानविचारदर्शनमेव सर्वाधिकरूपेण प्रशंसितम्। तथा सत्यपि पाश्चात्त्यदेशेषु विशुद्धभगवदनुग्रहप्राप्त्यर्थं विद्वद्भिराध्यात्मिकमार्गोऽपि समाश्रितः। तेषां मते केवलं भौतिकसाधनैर्मनुष्याः सर्वतोभावेन प्रसन्ना न भवन्ति, अपि तु आध्यात्मिकचिन्तनेनैव मनुष्याः सम्पूर्णरूपेण सन्तुष्टा भवन्ति। अत आध्यात्मिकमार्ग एव श्रेयस्करो विद्यते विनाशशीलसंसारे। पाश्चात्त्यमानसशास्त्रज्ञानां मते मनोविश्लेषणस्य मूलाधारोऽवचेतनमनो वर्तते, यत्र नेपथ्येऽज्ञातदशायामेव मनुष्यस्याऽवरुद्धकामवासनाऽहर्निशं नानाक्रीडां सृजति। किन्तु भारतीयमानसशास्त्रज्ञानां मते सा चित्तस्य निम्नतमावस्था वर्तते, या मानवमनसो मोहाच्छन्नतायाः परिचायिका विद्यते। चित्तस्य सर्वाधिकोत्तमाऽवस्था तु समाधिदशा विद्यते। किन्तु भौतिकयुगेऽस्मिन् सर्वं भौतिकदृष्टया एव विचार्यते पाश्चात्त्यानां मते, तदेव बहुजनैः प्रशंस्यते च इदं निर्धारणीयमस्ति यत् परमेश्वरं प्रति मनुष्यस्य प्रवृत्तिः जन्मजाता वर्तते। कतिपयप्रवृत्तीनां घातप्रतिघातजन्या, कतिपयप्रवृत्ति-सहयोगजन्या वेति। विचार्यते यद् मानवप्रवृत्तिषु तस्याः किं स्थानम्? प्रोक्तविषयेषु पाश्चात्त्यमनोवैज्ञानिकैरपि स्वं स्वं विचाराः प्रदर्शिताः। अत एव भक्तिरसस्य मनोवैज्ञा-निकदृष्टया स्वरूपपरिज्ञानाय पाश्चात्त्यमनोवैज्ञानिकानां तद्विषयकसिद्धान्ता विवेचनीयाः सन्ति।

तत्र सामान्यतः पाश्चात्त्यमानसशास्त्रविकासनिम्नगास्त्रिपथगा इव त्रेधाऽभूत्। तत्रादौ डा० वाटसन्महोदयस्य मते मानवचित्तस्य जीवने न किमपि महत्त्वम्, अपि तु जीवने मानवव्यापारस्यैव प्राधान्यं भवति। अपि च मनुष्यस्य सर्वे व्यापारा यन्त्रवत् स्वयमेव सततं प्रचलन्ति। सांसारिकविषयानामुपभोग एव जीवनस्य परमं लक्ष्यम्, परमात्मा तु कापुरुषैर्भ्रमेणैव स्वीक्रियते[1]। विचारसरणिरियं भक्तिरसस्वरूप-विवेचनदृष्टया सर्वथा निरर्थिकैव। अतो मतमिदं सर्वथा त्याज्यं वर्तते भक्तिरसस्य विवेचनप्रसङ्गे।

डा० सिगमण्ड–फ्रायड–एडलर–युंगप्रभृतीनां मते जीवनस्य सर्ववृत्तीनां मूलं कामवृत्तिरेव, धर्म–कला–परमात्मानुरागादयश्च कामवृत्तेरेव परिष्कृतरूपं वर्तते। इत्थञ्च तेषां मतानुसारेण परमात्मानं प्रति या भक्तिः क्रियते, सा त्ववरुद्धकाम-वासनाया एव परिष्कृतं स्वरूपं वर्तते। नान्यत् किञ्चिदन्यद्।

---

१. इण्ट्रोडक्शन टू सायकोलौजी आफ रीलिजन, पृ १२८।

विलियम मेग्डुगलमहोदयादिमतानुसारेण समाजप्रियमनुष्याणां सर्वव्यापारेषु सहेतुकप्रेरणाया अत्यधिकमहत्त्वमस्ति । अत एव पक्षेऽस्मिन् विद्वद्भिर्मनुष्याणां स्वाभाविकप्रेरणा, भावना, स्थायिवृत्तिश्च प्राधान्येन विवेचिता । यद्यपि तेनापि फ्रायडमतेव प्राधान्येन कामवृत्तिः स्वीकृता किन्तु तद्वत् समस्तप्रेमसम्बन्धेषु कामवृत्तिरेव कार्यकरणत्वं न स्वीकृतम् । तत्र मेग्डुगलमतानुसारं कामस्नेहयोरेकत्वमभिधाय फ्रायडमहोदयेन स्वस्य भ्रान्तत्वमाविष्कृतम् । फ्रायडमते कामस्नेहयोर्न कोऽपि भेदः, अत एव तन्मते समस्तप्रेमसम्बन्धेषु समस्तक्रियाकलापेषु च कामभावनया एव मानवस्य प्रवृत्तिर्भवतीति प्रतिपादितम् । तत्तु नोचितम्[1] । समाजकल्याणार्थं सर्वोत्तमसंस्कृतिरक्षणार्थञ्च कामभावस्य परिष्करणमावश्यकमेव[2] । इत्थं च तस्य मतस्य वैशिष्ट्यमिदमस्ति यत् तेनाऽन्यवृत्तिभिः सह मनुष्यस्य स्वाभाविकभक्तिवृत्तिरपि स्वीकृता, विचारिता च तथा मानवजीवनस्य सत्ता न केवलं मनसेऽचेतनावस्थापर्यन्तमेव परिसीमिता वर्तते, अपि तु सामाजिकदृष्ट्याऽपि तस्या महत्त्वं विवेचितम् । अत एव परमात्मानं प्रति भक्तिरसस्वरूपविवेचनदृष्ट्या तस्य विशेषमहत्त्वं वर्तते । तत् सर्वं संक्षिप्तरूपेणाग्रे विवेचयिष्यामः ।

## मानसशास्त्रदृष्ट्या भक्तेः प्रवृत्तिप्रयोजनम्

मानसशास्त्रदृष्ट्या मानवानां जागतिकविषयोपभोगस्याऽऽकाङ्क्षा सर्वथा स्वाभाविकी वर्तते । सांसारिकविषयेभ्यो मानवमनसो वैमुख्यं त्वतीवदुष्करं विद्यते । मनसो विरक्तये शास्त्रेषु कर्म ज्ञानं-भक्तिश्चेति साधनत्रयं प्रतिपादितं महर्षिभिः । तेषु कर्मज्ञानयोरपेक्षया भक्तिरेव सर्वजनसुलभा, यतो हि, तत्र विषयोपभोगस्य सर्वथा वर्जनं नास्ति, अपि तु तस्य सेवनस्य केवलं परिष्करणमेव भवति । सर्वं वस्तु भगवत्प्रसादरूपेणाऽनासक्तभावेन उपभुज्यते[3] । अपि च तत्र मानसिकवृत्तिः सर्वथा न विनश्यति, अपि तु तस्याः केवलं भगवद्विषये प्रवृत्तिरेव विधीयते । एवं च भक्तिमार्गस्थः साधकश्चित्तं सांसारिकविषयेभ्य, परावर्त्य परमेश्वरे नियोजयति ।

एवमेव पाश्चात्त्या अपि विषयान्तरेभ्य मनो नियम्य तस्य भगवद्रूपे विषये नियोजनमेव भक्तित्वेन मन्यन्ते । तत्र तेषां भक्तिः क्राइष्टं प्रति स्नेहाधिक्यरूपैव भवति । एवमेव भारते निर्गुणोपासकैरपि जीवात्मानं प्रेयसीरूपेण परमात्मानं च प्रियतमरूपेण स्वीकृत्य भक्तिरससाधनायाः स्रोतस्विनी प्रवाहिता । भगवल्लीलारसरसिकैः साधकैः

---

१. इण्ट्रोडक्शन टू सोसल सायकोलौजी, पृष्ठे–३५१ ।

२. इण्ट्रोडक्शन टू सोसल सायकोलौजी, पृष्ठे–३५८ ।

३. 'तेन त्यक्तेन भुञ्जीथा' ईशावास्योपनिषदि–१ ।

रूपान्तरणपद्धतीयं[1] सर्वथा स्पृहणीया विद्यते। सांसारिकविषयाणां रूपान्तरभूते भगवति गाढानुरागो भक्तो लौकिकतुच्छविषयान् विहाय सततं भगवत्प्रेम्णि एव रमते। तात्पर्यमिदं यन्मनोवैज्ञानिकदृष्ट्या साधकः स्वकामभावं स्वोपास्ये नियोजयति। इत्थं च लौकिक-विषयेष्वलौकिके भगवति रूपान्तरितेषु सत्सु भक्तिरसस्याऽऽस्वादनं भवति। भक्ति-रससमुपासकानां दृष्टावन्ये सर्वे रसा तुच्छा एव।

आधुनिकमानसशास्त्रदृष्ट्या निम्नाङ्कितप्रवृत्तीनां परिणामस्वरूपतयैव मानवानां चेतसि भक्तिः समुद्भवति, यथा हि—

(१) कामप्रवृत्तिः। (२) परमानन्दप्राप्तिप्रवृत्तिः। (३) एकत्वस्थापनस्य पूर्णत्वप्राप्तिकरणस्य च प्रवृत्तिः। (४) आदर्शवादस्य प्रवृत्तिः। (५) आत्म-प्रतिष्ठाया आत्मरक्षणस्य च प्रवृत्तिः। (६) असफलदाम्पत्यजीवनस्य अमुककाम-वासनाया प्रवृत्तिः।

प्रोक्तकारणैरेव मनुष्येषु भक्तेः प्रवृत्तिः समुदयतीति मानसशास्त्रज्ञविद्वांसोऽभिमन्यन्ते।

## कामप्रवृत्तिः

आधुनिकमनोवैज्ञानिकमतानुसारेण मनुष्येषु कामवृत्तिर्मौलिकमनोवेगो वर्तते, तस्याः मैथुनेन प्रजननप्रवृत्त्या वा नैसर्गिकसम्बन्धोऽस्ति। तस्याः कामवृत्तेः स्थायिभावो रतिर्विद्यते, तस्या व्यावहारिकरूपं तु प्रेमेत्युच्यते। तच्च प्रेम स्थायिमनोदशा वर्तते, यस्यां वात्सल्यभावस्य, कामभावस्य, आत्मसमर्पणभावस्य, आत्मप्रतिष्ठायाश्च मधुरं संमिश्रणं भवति। कामवृत्तावात्मसमर्पणादिसुकुमारभावानां मधुरसंयोगैरेव प्रेमा स्थाप्यते। अत एव यथा समुद्रे बहवस्तरङ्गा उद्भवन्ति तत्रैव विलीयन्ते च सर्वे, तथैव यत्र सर्वे रसाः भावाश्चोन्मज्जन्ति निमज्जन्ति च तदेव प्रेमेत्यभिधीयते[2]। पात्रभेदेन तस्य प्रेम्णो वात्सल्यभावः, दाम्पत्यभावः, पूज्यभावश्चेति रूपत्रयं भवति। तत्र लघुजनं प्रति यत् स्नेहाकर्षणं तत्तु वात्सल्यभावः, स्त्रीपुरुषयोः पारस्परिकं स्नेहाकर्षणं तु दाम्पत्यभावः, महापुरुषं प्रति यत् स्नेहाकर्षणं तत्तु दैन्यं, आत्मसमर्पणं, पूज्यभावः, श्रद्धाभावो वेति संज्ञायते। परिपक्वावस्थायां स एव

१. रूपान्तरणशब्दोऽस्मिन् प्रबन्धे सांसारिकविषयालम्बनप्रवृत्तेर्भगवदुन्मुखीकरण-रूपार्थे प्रयुक्त इत्येवंविधशब्दस्य सर्वत्र ग्रन्थे प्रोक्तार्थकतैवेति विभावनीयम्। आधुनिकलेखकाद्यनुसरणमेतादृशमाधुनिकतमानामपि बोधनेच्छयेति शास्त्रैक-परायणा सन्तुष्येयुः।

२. सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ।
उन्मज्जन्ति निमज्जन्ति यत्र स प्रेमसंज्ञकः॥

पूज्यभावः भक्तिरूपेण परिणमते। एवं च यदा लौकिकस्नेहोऽलौकिकस्नेहरूपेण विपरिणमते, अपि च जीवोन्मुखः प्रेमा यदा परमेश्वरोन्मुखप्रेम्णि परिणमते तदा साधकचेतसि रागमयी भक्तिः प्रादुर्भवति। दाम्पत्यप्रेम्णि एव प्रेमभावस्य पूर्णं स्फुरणं भवति, कामभावस्य पूर्णं परिष्करणं च जायते। तस्मिन् स्वार्थभावस्य गौणता परार्थभावस्य च प्राधान्यं भवति। तत्रैव मानवमनसि कोमलभावानामुदयो भवति, यस्याश्चरमपरिणतिर्भक्तिरससाधनायां दरीदृश्यते।

## परमानन्दप्राप्तिप्रवृत्तिः

लौकिकप्रेमव्यवहारे मनुष्यो विविधबाधां विषमतां चानुभवति। प्रायोजीवने सुखस्य कतिपया एव क्षणाः प्राप्यन्ते सौभाग्येन, किन्तु जीवने प्रायो ऽसाफल्यस्य, नैराश्यस्य, वियोगवेदनायाश्च साम्राज्यं परिदृश्यते। अत एव मानवजीवने स्थायिपूर्णसौख्यार्थं तादृशः शाश्वतः प्रेमाश्रयोऽन्विष्यते, यो अक्षयः सौन्दर्यसमन्वितः रसानन्दस्वरूपश्च भवेत्। जनजीवनस्य क्षणभङ्गुरत्वेन, लौकिकप्रेमव्यापारस्याऽसाफल्येन खिन्नो विरक्तश्च मानवः तादृशं स्थायिप्रेमविषयं मृगयते, यः शाश्वतः, चिरस्थायी नित्यश्च भवेत्, यत्र च सुखं कथमपि कदापि न क्षीयात्, यत्र च सुखसंयोगानन्तरं वियोगवेदना न दृश्येत, स्थायीपूर्णानन्दस्योपलब्धिश्च भवेत्। यत्र चाऽनन्ताक्षयसौन्दर्यस्य साक्षात्कारो भवेत्, यत्र च सम्पूर्णमनःकामना पूर्येत। पूर्वोक्तभावनयैव प्रेरिताः साधकाः स्वप्रेमाधारेऽनन्तशीलमनन्तशक्तिमनन्तसौन्दर्यञ्च प्रतिष्ठापयन्ति। जागतिकपदार्थस्य नश्वरता तीव्रतया मानवमानसं दुनोति, येन च मानवा अक्षयस्य परमसत्यपदार्थस्यान्वेषणे, तत्प्राप्तये च व्याकुलीभवन्ति। ते पूर्णरूपेण विश्वसन्ति यत् परमसत्यपदार्थस्य प्राप्त्यनन्तरमेव शाश्वताऽऽनन्दस्य प्राप्तिर्भविष्यति। तात्पर्यमिदं यत् शाश्वतसौन्दर्यस्याऽक्षयाऽऽनन्दस्य चान्वेषणाय मानवेषूत्कटाभिलाषा जागर्ति। सांसारिकवैषयिकसुखस्य क्षणभङ्गुरत्वं विलोक्यैव मनुष्याः चिरसत्यपदार्थस्याऽन्वेषणे प्रयतन्ते, कबीरादिभिर्निर्गुणोपासकैरन्योक्तिपद्धत्या दृश्यमानजगतो यथार्थस्वरूपं चित्रितम्। एवमेव सूरदासादिभिः सगुणोपासकैरपि दृश्यमानलोकमतिक्रम्य पारलौकिकसत्यस्य सर्वाधिकाऽऽनन्दप्रदायकस्य मङ्गललोकस्याऽतीवमनोहरं चित्रमुपस्थापितम्।

## एकत्वस्थापनस्य प्रवृत्तिः

मानसशास्त्रज्ञविलड्यूराण्टमतानुसारेण एकत्वस्थापनस्येच्छा पूर्णत्वप्राप्तिवाञ्छावा, या लोके दृश्यते सा तु स्वस्मात् वियुक्तभागस्यान्वेषणार्थैवास्ति। तन्मते एकत्ववाञ्छा पूर्णत्वप्राप्तिवाञ्छा वा प्रेमाभिधानं तत्त्वं वर्तते।[1] स्त्रीपुरुषयोश्च

---

१. द मैंसन्स आफ फिलासफी-चेप्टर ३-विलड्यूराण्ट।

पारस्परिकमाकर्षणे एकत्वस्थापनभावनयैव परिलक्ष्यते। दाम्पत्येप्रम्णि एकत्व-स्थापनं पूर्णत्वप्राप्तिर्वा पूर्णरूपेण दृश्यते। तत्र प्रेमा सम्यक्तया परिस्फुरति, प्रेमोत्कर्ष-दशायां प्रियतमः सर्वत्र स्वप्रियतमामेव पश्यति। तादृशविशेषावस्थाप्राप्तप्रेमैव लौकिकस्नेहस्य क्षुद्रसीमां परिलङ्घ्य समष्टिगतविस्तृतप्रेमभूमिं प्राप्य परमेश्वरोन्मुख-प्रेम्णि परिणमते।[१] दाम्पत्यस्नेह एव एकत्वस्थापनस्य पूर्णत्वप्राप्तिवाञ्छाया वा महानाश्रयो वर्तते, यत्र द्वैतमद्वैते विपरिणमते। सा एव द्वैताद्वैतविलक्षणभावना-ऽन्ततो गत्वा भगवत्स्नेहस्य कारणं भवति। बृहदारण्यकोपनिषदि प्रतिपादितं यथा स्वप्रियायाः गाढालिङ्गनकाले पुरुषो बाह्यमाभ्यन्तरञ्च सर्वं ज्ञानं विस्मरति, तस्मिन् काले सः समस्तसांसारिकविषयान् विस्मृत्य मधुरानन्दमहोदधौ विचरति, तथैव परमप्रियपरमात्मना सहानुरागे सति जीवात्मा सर्वं वस्तु विस्मरति, सः परमात्मनः सायुज्यमुक्तिद्वारा तद्भिन्नं सर्वं विस्मरति। तस्मिन् काले तस्य सम्पूर्णकामना वाञ्छा वा समाप्यते।[२]

तात्पर्यमिदं यज्जीवोन्मुखस्नेहं परमेश्वरोन्मुखस्नेहश्च मानसशास्त्रदृष्ट्या भिन्नवेषा कामवृत्तिर्वर्तते। मनोवैज्ञानिकमतानुसारेण पुरा नारी नरश्च परस्परं सम्पृक्तौ आस्ताम्, दैवदुर्विपाकात् वियुक्तौ च जातौ, पश्चात् विरहवेदनया उभौ सन्तप्तौ बभूवतुः। एकत्वस्थापनस्य लालसेयमुभावेव सर्वदा व्यथयति। एवमेव दैवदुर्विपाका-द्वियुक्तः परमात्मनोंऽशो जीवात्मा अपि परमात्मना सह एकत्वस्थापनस्य विरहे (अभावे) विकलतामनुभवति। पश्चात् सद्गुरुः परमात्मत्वप्राप्ते मार्गं दर्शयति। संयोगे सति जीवस्य सम्पूर्णवियोगजन्यदुःखं संयोगजन्यसुखे परिणमते। इत्थं च नारीनरयोः, आत्मपरमात्मनोश्च मध्ये एकत्वस्थापनस्य प्रवृत्तिः शाश्वतिकी वर्तते। एकत्वस्थापनस्याभिलाषेणैव सम्पूर्णसंसारस्य क्रियाकलापः प्रचलति। सृष्टेर्द्विविधा प्रसूतीनामाकर्षण-प्रत्याकर्षणयोरिदमेव रहस्यं वर्तते। मनोवैज्ञानिकशास्त्रे तु एकत्वस्था-पनस्योत्कटाभिलाषा एव प्रेमा भक्तिर्वेति कथ्यते।

### आदर्शवादस्य प्रवृत्तिः

मनोवैज्ञानिकं तथ्यमिदं यन्मनुष्यैः सततमादर्शवादस्य कल्पना विधीयते तदन्वे-षणस्य प्रवृत्तिश्च क्रियते। सामान्यतो मानवस्वभावस्य यथार्थवादिता आदर्शवादिता

---

१. प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा,
पर्यङ्के सा पथि पथि च सा तद् वियोगातुरस्य।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा,
सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥

२. बृहदारण्यकोपनिषदि—३।२१।

चेति प्रवृत्तिद्वयं दृश्यते। तत्र यथार्थं नाम—जीवनस्य वस्तुतथ्यम्, तदभाव एव आदर्शवादोऽभिधीयते। यथार्थं विना जीवनं जीवनरहितमिव, आदर्शं विना च गतिरहितमिव प्रतिभाति। अतो मानवजीवनस्य सम्यग् विकासाय यथार्थस्याऽऽदर्शस्य च परस्परं सामञ्जस्यं अपरिहार्यं विद्यते। तस्मादेव कारणाद् मानवः सर्वदा आदर्शवादस्याऽऽकाङ्क्षी दृश्यते। जीवने प्राप्तानन्दस्तु अपूर्णोऽस्थायी च भवति। अत एव मनुष्य उत्कृष्टाऽऽनन्दस्य चिरस्थायिसुखस्य च कल्पनां करोति, तत् प्राप्तुं सततं यतते। लौकिकजीवनस्य प्रेमपात्रं विनश्वरं प्रतिक्षणं क्षयी च भवति। यतो हि तस्य यौवनकुसुम जीवनपत्रस्य विनाशात् पूर्वमेव परिम्लायते। अत एव भक्तः तादृशं प्रेमपात्रं मृगयते, यन् निखिलसौन्दर्यरसानन्दमूर्तिः शाश्वतश्च भवेत्, येन समस्तकामना सम्पूर्येत। जीवने प्रायो दुःखमेव परिदृश्यते, यतो हि विषसमविषमसंसारे सुखं शान्तिश्च कुतः? यदि चेत् कदाचित् सौभाग्येन सुखं लभेत्? तदपि क्षणिकमेव भवति।

तादृशावस्थायां सर्वथा मनोवैज्ञानिकतथ्यमिदं यन्मनुष्यैरेतादृशसुखं कल्पितं स्यात्, यत् विपुलं शाश्वतञ्च भवेत्। एतादृशं संयोगः कल्प्येत, यया वियोगजन्यं दुःखं कदापि न भवेत्। तादृशोत्कृष्टजीवनस्य पूर्णसुखस्य चावाप्तये सुकुमारराजकुमार सिद्धार्थमहावीरप्रभृतिमहापुरुषैर्लौकिकसर्वसुखानि परित्यज्य महाभिनिष्क्रमणं कृतम्, येन किमपि रोगशोकादिजन्यं दुःखं न भवेदिति। ते परमतत्त्वस्य साक्षात्काराय सततं व्याकुला आसन्, अत एव ते तादृशसुखस्यान्वेषणे संलग्ना आसन्, यदेकरसं चिरस्थायि, निखिलसौन्दर्यरसानन्दमूर्तिः सनातनं च भवेत्। तात्पर्यमिदं धर्मभावनायाः (भक्तिभावनायाः) मूले मनुष्यस्याऽऽदर्शभावनाऽपि महत्त्वपूर्णप्रेरकतत्त्वरूपेण तिष्ठति। मानवजीवने आदर्शवादस्य व्यापकप्रभावो वर्तते, येन मानवोऽक्षयसौन्दर्यम्, अपरिमितानन्दम्, अमरप्रेमपात्रञ्च प्राप्तुं स्वेच्छयैव सम्पूर्णसौख्यसामग्रीं परित्यज्याकिञ्चनत्वं याचते, तत्रैव च सुखमनुभवति।

## आत्मरक्षणस्य प्रवृत्तिः

यद्यपि मानसशास्त्रविदां मते कामो जीवनस्य सर्वाधिकप्रबलो व्यापकश्च मनोवेगो वर्तते। यतो हि प्राणिमात्रस्य सर्वक्रियाकलापस्य मूले येन केनापि प्रकारेण कामस्यैव प्रभावः परिलक्ष्यते तथापि व्यापकविषयविवेचनदृष्ट्याऽऽत्मरक्षणस्य मूलवृत्तिरेव सर्वोपरि सिध्यति। यतो हि भय-भोजनोपार्जन-पलायनादयो वर्तमानकालिकाऽऽत्मरक्षणार्थमेव भवन्ति। प्रजननस्य (मैथुनस्य) आत्मप्रतिष्ठयाश्च प्रवृत्तयो भविष्यत् कालिकाऽऽत्मरक्षणभावनया भवन्ति। 'पुत्रप्रयोजना दाराः' इत्यादिनापि भविष्यत्कालिकाऽऽत्मरक्षाया भावनैव दारसंग्रहादौ निश्चीयते। भविष्यच्चिन्तको मनुष्य महान् कल्पान्तपर्यन्तं स्वस्मृतिचिह्नं स्थापयितुं वाञ्छति, अत एत पुत्री-पुत्रादीनामभावे

मनुष्यो धर्मशाला-यज्ञस्तूप-मन्दिरादिलोककल्याणकारिधार्मिककृत्यैश्चिरकालपर्यन्तं स्वस्मृतिचिह्नं स्थापयति। तेन च स आत्मप्रतिष्ठामनुभवति। तत्सर्वकार्यमात्मरक्षणस्य भावनयैव करोति। सृष्टिप्रणाल्याः रक्षार्थमेव दाम्पत्यसम्बन्धविधानं विहितं शास्त्रे। तथा सन्तानोत्पादनं पुण्यकार्यतया स्वीकृतम्। मनुना प्रोक्तं यत् 'मनुष्यः पुत्रेण सर्वलोकान् जयति, पौत्रेण चिरकालपर्यन्तं अक्षयसुखमश्नुते, प्रपौत्रेण च सूर्यलोकं लभते, अपि च पुं नाम नरकः, तस्मात् त्रायते रक्षतीति पुत्र इति संज्ञा स्वयमेव प्रजापतिना कृता[1]'। देवर्षि-पित्रादिऋणेभ्यो मुक्त्यर्थमपि सन्तानोत्पादनं पुण्यकर्मतया शास्त्रेषु प्रतिपादिता। यथा हि—मनुष्यो ब्रह्मचर्यधारणद्वारा ऋष्यृणात्, यज्ञेन देवर्णात्, सन्तानोत्पत्तिद्वारा च पितृर्णात् प्रमुच्यते[2]। एवञ्च सन्तानोत्पत्तिरूपकार्येऽपि आत्मरक्षणस्य भावनैव प्राधान्येन वर्तते। मानसतत्त्वशास्त्रज्ञानां मते अपत्यस्नेहवृत्तिस्तु ज्ञानसदाचारयोश्च जननी विद्यते।

तात्पर्यमिदं मङ्गलमय्याः सृष्टेः संरक्षणस्य मूले आत्मरणक्षणस्य भावनैवोत्प्रेरकशक्तिरूपेण विद्यते। भय-भोजनोपार्जन-सङ्घर्षादिप्रवृत्तीनां सम्बन्धो वर्तमानकालिकाऽऽत्मसंरक्षणभावनया, प्रजननवृतीनां सम्बन्धस्तु भविष्यत् कालिकाऽऽत्मरक्षणभावनया वर्तते। भक्तिमूलेऽपि तस्यैव आत्मरक्षणभावस्या स्वविस्तारभावस्य वा प्रेरणया कार्यं भवति। मनुष्या ( प्रेम ), सर्वोत्कृष्टं प्रेमपात्रम्, अनन्तरशील-शक्ति-सौन्दर्यनिधिं परमानन्दसुखकरं, भक्तिरसस्वरूपं परमात्मानं प्राप्य स्थिरानन्दानुभवं वाञ्छति सततं स्वचेतसि। आधुनिकमनोविश्लेषणकर्त्रानुसारेण 'प्रेमा (भक्तिः) अपि आत्मरक्षार्थमेवास्ति। मानसतत्त्वज्ञ ड्यूराण्टमतानुसारेण पूर्णत्वस्यान्वेषणं पूर्विका प्राप्तिरेव प्रेमेत्यभिधीयते। एवञ्च भक्तिभावमूले पूर्णत्वप्राप्तिभावना निगूढा भवतीति मनोविज्ञानमतम्।

केषाञ्चित् मनोविश्लेषणशास्त्रतत्त्वविदां मते मनुष्यो यशसे भगवदनुरागं ( भगवत्भक्तिं ) प्रति प्रवृत्तो भवति। स विश्वसिति यद् भगवद्भक्त्यनन्तरं स संसारे यशस्वी भविष्यति। जना भगवद्भक्तं ज्ञात्वा, मत्वाऽर्चिष्यन्ति, श्रद्धया नामस्मरणं च करिष्यन्ति। एतेन मानवचेतसि आत्मप्रतिष्ठाद्वारा आत्मरक्षणस्य मौलिकभावनैव कार्यं करोतीति सिद्धम्। अत एव मनुष्यस्तदानीं वैषयिकसुखेभ्यः परावृत्त्याऽऽध्यात्मिकसुख-

---

१. पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥ १॥
पुन्नाम्नो नरकात् यस्मात् त्रायते पितरं सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥ २॥ मनुस्मृतौ

२. जायमानो वै ब्राह्मणस्त्रिऋणी जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। बोधायनस्मृतौ

स्यान्वेषणे प्रयतते। तद् विना च सः संसारो दुःखमय इति, जीवनं व्यर्थमिति च मनुते। तदानीं स भगवद्दर्शनाय, परमात्मनोऽनन्तमधुरसंयोगस्याक्षयसुखस्य च प्राप्तये 'सर्वारम्भपरित्यागी' इति रीत्या सहिष्णुश्च जायते।

**अपूर्णवासनायाः प्रवृत्तिः**

आधुनिकमनस्तत्त्वविदां फ्रायड-एलिस-प्रभृतीनां मते मनुष्यस्य सम्पूर्णक्रियाकलापसम्पादिकाऽपूर्णकामवासनैव वर्तते। तेषां मतानुसारेणाऽपूर्णवासनैव विविधकार्येषु मनुष्यान् प्रेरयति। अत एव भक्तिहेतुरप्यवशिष्टकामवासनैव वर्तते। यतो हि प्रेमा धर्मश्च परस्परमन्योन्याश्रितौ स्तः। तौ च मानवजीवनस्य सर्वाधिकशक्तिशालिनौ मनोवेगौ जीवनस्य स्वाभाविकीप्रवृत्तिः समुचितकाले यदि धर्मभावे रूपान्तरिता भवति तर्हि किमाश्चर्यम्, सा तु तस्य सर्वथा स्वाभाविकपरिणतिरेव वर्तते।

**भक्तिविषये पाश्चात्यमानसतत्त्वज्ञानां मतम्**

सामान्यतो भक्तिविषये पाश्चात्यमनोवैज्ञानिकानां मतत्रयं वर्तते। कतिपयविदुषां मते क्षुधा-तृषादिवन् मनुष्याणां भक्तिरपि स्वाभाविकवृत्तिरस्ति। अन्येषां मते भक्तिः कामादिविविधभावमिश्रितरूपा। परेषां मते तु भक्तिः परिवर्त्तितविषयः काम एवेति। किन्तु मतमिदं प्रायः सर्वैः खण्डितमेव।

भक्तिः सर्वथा स्वतन्त्रवृत्तिरिति मन्यमानानां पाश्चात्यमनोवैज्ञानिकानां प्रो० स्टारबक–प्रो० हाकिंग–प्रो० मारिसजस्टो–डा० किंगप्रभृतिमहानुभावानां मतानुसारेण भक्तिः क्षुधा-तृषादिभाववन् मानवहृदयस्य सुस्थिरा स्वाभाविकीवृत्तिरस्ति। सा मानवस्य स्वाभाविकभावो वर्तते, यं मनुष्यः सर्वदानुभवति[1]। अपरेषां मनोवैज्ञानिकनां मते स्वतन्त्ररूपेण भक्तेः स्वीकारः समीचीनो नास्ति, यतो हि सा कामक्रोधस्नेहादिवन् मनुष्यस्य स्वाभाविकीवृत्तिर्नास्ति।

भक्तिर्विविधस्वाभाविकवृत्तीनां संमिश्रणेनोत्पद्यत इति मन्यमानानां ल्यूबा-मेग्डुगल-विलियमजेम्स-थाउलेस-जेम्सपूटप्रभृतिमनोवैज्ञानिकानां मतानुसारेण भयम्, कामः, यूथवृत्तिः, दृढता, प्रार्थना, शरणागतिः, श्रद्धा, आदरश्चेत्यादयो भक्तेरुद्भावकाः सन्ति[2]। डा० मेग्डुगलकथनानुसारेण भक्तौ श्रद्धाभयशरणागति-दयालुता-जिज्ञासा-प्रभृतिभावा मिश्रिताः सन्ति[3]।

---

१. इण्ट्रोडक्शन टू द सायकोलोजी आफ रीलिजन, पृष्ठे १२४ थाउलेस, द स्टडी आफ रीलिजन, पृष्ठे १६१-१६३—मारिस जस्टो।

२. सायकोलाजी एण्ड रीलिजस क्वेस्ट, पृष्ठे ३८-आर० बी० कैटल।

३. इण्ट्रोडक्शन टू सोसल सायकोलाजी चैप्टर १३, पृष्ठे २६० मैग्डुगल।

पूर्वोक्तभावानां मिश्रणरूपत्वेनैव भक्तिः सर्वान् व्याप्नोति। दास्य-सख्य-वात्सल्य-प्रभृतिरूपेण शुद्धप्रेमरसनिधिश्चास्ति। सार्वजनीनतया व्यापकतया च भक्तिः स्थिर-वृत्तिरूपेण स्वीकृता[1]। एवञ्च भक्तिः स्वतन्त्रा स्वाभाविकी वृत्तिर्नास्ति, अपि तु कतिपय-भावानां मिश्रणरूपा वर्तते। अत एव जीवने भक्तेरत्यधिकं महत्त्वं वर्तते। भक्तेरभ्य-न्तरे दास्यादिभावानां वर्तमानत्वेन कस्यामपि दशायां मानवैर्भक्तेरनुभूतिः कर्तुं शक्या। अत एव यद्यपि भक्तिः स्वतन्त्रा स्वाभाविकी वृत्तिश्च नास्ति तथापि जीवने कामादि-स्वाभाविकवृत्तिवदेव तस्या महत्त्वं वर्तते। दुर्भाग्यवशादेवाचेतनशक्तिभ्यः परतरा भक्तिः फ्रायडमहोदयेन न चिन्तिता। मानवस्य जीवने सततमाध्यात्मिकसाहाय्यस्याऽऽवश्यकता समनुभूयते, स च मनुष्येण धार्मिकभावनया भक्त्या च गृह्यते।

भक्तिकामश्चेति नामभेदेऽपि वस्तुतो द्वयोरैक्यमेवेति मन्यमानानां पाश्चात्त्य-मानसतत्त्वज्ञानां मते भक्तिः सामान्यकामप्रेरितप्रेमभावस्य प्रच्छन्नस्वरूपैवास्ति। तन्मते कामिजनैः परिकल्पितप्रियतमातिरिक्तः परमेश्वरो न कोऽप्यन्यः। एवमुत्कृष्टभक्तिः कामभावत्वेन स्वीकुर्वता 'स्विशर'महोदयेन प्रतिपादितं यत् कामवृत्तिर्मनुष्याणां स्वाभाविकवृत्तिषु सर्वाधिकशक्तिशालिनीवृत्तिरस्ति, तयैव जातीयविकासस्य परम्परा प्रसरति, अत एव भक्तौ परमोच्चकामभावः स्वीकार्य एव। प्रमाणं चात्र भक्तेषु प्रच-लिता लिङ्गोपासना, भक्तकवीनां शृङ्गारपूर्णरचना चेति। नैतत्समीचीनं, यतो हि भक्ति-कामयोर्महदन्तरं वर्तते। वस्तुतस्तु उभौ परस्परं सर्वथा भिन्नावसम्बद्धौ च। एवञ्च प्रायः सर्वेषां पाश्चात्त्यमानसशास्त्रिणां मतं समीचीनं न प्रतीयते। ते खलु प्रायशो भक्तिं कामस्य विकसितरूपमेवेति मन्यन्ते। नायं वस्तुस्वभावः।

**भक्ति-कामयोर्भेदः**

भगवन्तं प्रति भक्तस्य कामिनीं प्रति कामिनश्च यद्यपि आसक्तिरेकरूपैव तथापि प्राकृतकामिजनस्यासक्तिः प्रायशो बहिर्मुखी, किन्तु साधकजनस्य साऽन्तर्मुखी भवतीति भेदोऽपि वर्त्तते। साधको यदा स्वसर्वेन्द्रियाणि, संनियम्याऽन्तर्मुखीभूय ध्यानपूर्वकं विश्व-प्रपञ्चं ध्यायति तदा सः सर्वत्र ज्ञानरूपं परमात्मानमेव पश्यति। सामान्यकामदशायां तु व्यक्तिः कमपि लौकिकविषयमेवानुध्यायति, किन्तु भक्तेर्विशिष्टदशायां तु स्वचैतन्येन सह तादात्म्यं प्राप्य शनैः शनैः तदाकाराकारितो भवति साधकः। इत्थञ्च भक्ति-कामयो-रैक्यं नास्ति, अपि तु भिन्नत्वमेव विद्यते।

**भक्तिसाधनायां दाम्पत्यप्रेमप्रयोजनम्**

कामस्य विषयो लौकिकालौकिकभेदेन द्वैविध्यं लभते। लौकिकस्तु विषयः कामि-

१. द सायकोलाजी आफ रीलिजन, पृष्ठे २१, सेलवी।

न्यादिरूपः, अलौकिकविषयस्तु परमात्मा एव। कामशास्त्रप्रणेतृवात्स्यायनमतेऽपि कामो मनसो मूलभावो दाम्पत्यजीवनस्याऽऽनन्दोपलब्धिसाधनञ्चास्ति। तन्मते कामो न केवलमैन्द्रियकसुखमेव। अपि तु स आनन्दानुभूतिरेवास्ति। कामो दाम्पत्यप्रेम्णा स्वसात्त्विकदशायां स्वार्थोपभोगस्य क्षुद्रसीमां परिलङ्घ्य स्वप्रेमपात्रेभ्यः सन्तानादिभ्यश्च योगक्षेमं कर्तुं समीहते, पश्चात् सः परमार्थभावपूरितो जायते। तस्य चरमपरिणतिर्भक्तौ दृष्टिगोचरीभवति। दाम्पत्यप्रेम्णि दम्पती परस्परमभेदमेव वाञ्छतः। एवं च द्वैतेऽद्वैतभावना इयं कालान्तरे ईश्वरप्रेम्णि परिणमते। बृहदारण्यकोपनिषदि च प्रतिपादितं यद् यथा स्वप्रियतमाया गाढालिङ्गने आबद्धपुरुषः प्रियतमातिरिक्तं किमपि न पश्यति तथैव परमात्माऽऽबद्धहृदयो जनस्तदतिरिक्तं किमपि नावलोकयति, आत्मानञ्च विस्मरति।

संसारोऽयं प्रकृतिपुरुषयोर्लीलाभूमिर्वर्तते। अत एव मानवजीवने स्त्रीपुरुषयोः परस्परमाकर्षणमस्ति। तयोः संयोगः सृष्टिविधानस्य कौशलमयं कारणं विद्यते। अत एव तयोर्मध्ये एकस्याप्यभावे जीवनमपूर्णमेव। नूतननिर्माणस्याऽऽधारशीला तु दाम्पत्यप्रेमैव वर्तते। मानवजीवने परस्परं यावन्तः सम्बन्धाः सन्ति तेषूत्कृष्टसम्बन्धो दाम्पत्यरूप एव। तस्य सात्त्विकचरमविकासावस्थैव भक्तिरिति स्वीकृता। स एव मूलाधारः साधकानां भक्तिरससाधनाया इति भक्तिरसज्ञैर्मानसशास्त्रविद्भिः समनुभूयते।

मानवमनोभावेषु दाम्पत्यप्रेमैवाऽऽध्यात्मिकभावस्य सन्निकटे वर्तते। अत एवाऽऽध्यात्मिकप्रेमानुभूतिर्दाम्पत्यप्रेमौपम्येनैव बोधयितुं शक्यते, नान्येन पथा। सर्वत्र सर्वदा भगवत्प्रेमाभिव्यक्त्यर्थं साधकैर्दाम्पत्यभाव एव गृहीतः। तैः परमात्मा प्रियतमरूपेण जीवात्मा च प्रियतमारूपेण चित्रितः, तेन भगवत्स्नेहस्य मार्मिकाऽभिव्यक्तिरभूत्। एवमेव इस्लामधर्मेऽपि सूफीसाधकैः परमात्मजीवात्मनोः पतिपत्नीत्वं परिकल्प्याऽऽध्यात्मिकप्रेम्णो मर्मस्पर्शिचित्रं चित्रितम्। ईसाईसम्प्रदायेषु आध्यात्मिकपरिणयमुखेन भक्तिः स्वीकृता। इत्थं च दाम्पत्यस्नेहे भक्तिरसस्य प्रकटनाय भूयानवसरोऽस्ति। भक्तिसाधनायां दाम्पत्यसम्बन्धस्य प्रयोजनमिदमेव स्वीकृतं साधकैः।

दाम्पत्यभावोऽत्यन्तव्यापक उदारश्चास्ति। विश्वस्य सम्पूर्णकार्यं दाम्पत्यभावनया एव परिचलति। दाम्पत्यभाव एव जगतः सर्गस्थित्योर्मूलकारणमस्ति। दाम्पत्यप्रेम्णो न केवलं प्रजननमेव फलमपि तु तेनान्योऽन्यस्य कृते परस्परमात्मसर्वस्वत्यागादिकमपि साध्यते। तत्र द्वैतभावना सर्वतोभावेन प्रविलीयते। दाम्पत्यभावस्य प्रेमप्रकर्ष एव क्रमशः परिष्कृतिमवाप्य विश्वप्रेम्णि तथाऽन्ततश्च भगवत्प्रेम्णि परिणमते। तस्य व्यक्तं स्वरूपं सगुणोपासकानां ग्रन्थेषु पूर्णतया समुपलभ्यते।

तात्पर्यमिदम्—जीवात्मपरमात्मनोस्तादात्म्यभावस्य लौकिकरूपमेव दाम्पत्यभावो वर्तते। अत एव भारतीयदर्शने भक्तिसम्प्रदाये परमात्मा पुरुषोत्तमरूपेण जीवात्मा च

स्त्रीरूपेण परिकल्पितः। विविधाः प्रजाः सिसृक्षुः परमात्मा निजस्वरूपं स्त्रीपुरुषरूपेण द्वेधा व्यभजत्[1]। निष्कर्षोऽयं यन्नारीपुरुषयोः पारस्परिकाकर्षणं सम्मेलनं चाऽऽत्म-परमात्मनोरेव पारस्परिकाऽऽकर्षणस्य सम्मेलनस्य च लौकिकाभिव्यक्तिर्वर्तते। प्रोक्तभाव-भावितैः कबीरादिसाधकैरुत्कृष्टप्रेमभवोऽभिव्यञ्जितः। आत्मानः परमात्मनः प्रियात्व-मनुसन्धाय लौकिकदाम्पत्यभावोऽलौकिकजीवेश्वरदाम्पत्यस्य प्रतिबिम्बरूपतां भजते। प्रतिपादितं चोपनिषदि—सः परमात्मा एकाकी रतिं न लेभे, अत एवात्मानं पति-पत्नीरूपेण विभक्तवान्। सर्वैरप्युपासकैर्जीवपरमात्मनोर्दाम्पत्यं परिकल्प्य प्रातिस्वरायाः संयोगस्य च रमणीयं वर्णनं विहितम्। सम्बन्धममुमाधारीकृत्य बहूनि बहुधा प्रपञ्चितम्। एवं च दृश्यते दाम्पत्यभावस्याऽऽध्यात्मिकस्वरूपमेव भक्तिरसस्यो-द्गमस्थली वर्तते मनोविज्ञानदृष्ट्या। पूर्वोक्तविवेचनस्य तात्पर्यमिदं यन्मानसशास्त्रदृष्ट्या भक्तिरससाधनायां दाम्पत्यभावस्यातीववैशिष्ट्यं प्रतिभातीति।

इत्थं च यदा भगवद्विषयिणीरतिरूपस्थायिभाव एव निखिलसौन्दर्यरसानन्दस्वरूप-परमात्मरूपाऽऽलम्बनविभावस्य, रोमाञ्चाश्रुपातादिरूपानुभावस्य, हर्षावेगौत्सुक्यादिरूप-सञ्चारिभावस्य संयोगात् भक्तिरसरूपतामाप्नोति तदा भक्तिभावापन्नसहृदयचेतसि अलौकिकाऽऽनन्दानुभूतिर्जायते।

## प्रेम्णः भक्तिरूपतावाप्तिः

क्रमशो विकसत् प्रेमैव गच्छता कालेन भक्तिरूपत्वमुपैति। एवञ्च कामस्यैव चरम-परिणतिर्भक्तिरित्यभिधीयते। अत एव भावुकभक्तैर्ब्रह्म, तन्मायै, परमात्म-जीवात्मानौ च दाम्पत्यसम्बन्धसूत्रे आबद्धतयाऽऽध्यात्मिकपरिणयस्य कल्पना कृता, तथा च तेषां मनसि विश्वमोहकस्यानुपमसौन्दर्यस्य नित्यस्वरूपस्य परमात्मनो दर्शनाभिलाषा सर्वदा तिष्ठति। निखिलब्रह्माण्डे परिव्याप्तं ब्रह्म प्रति सरसरतिभावस्यानुभूतिरेव भक्ति-भावस्य सर्वप्रमुखवैशिष्ट्यं विद्यते। पाश्चात्त्यमनोवैज्ञानिकमैकडूगलमतानुसारेण एकैकस्य मनोवेगस्य येन केनापि प्रकारेण स्वाभाविकवृत्त्या सह घनिष्ठतमः सम्बन्धो भवति। भयस्याऽऽवेगः तदैव याति यदाऽऽत्मरक्षाया नैसर्गिकप्रवृत्त्याः प्रतिबन्धोऽनुभूयते। अत एव भयकाले मनुष्यः स्वरक्षार्थं यन्त्रवद् व्यवहरति। आवेगे तु धीरोऽपि विचित्रतया कार्यं करोति। प्रेमावेगस्य तीव्रता सर्वोपरि भवति। अत एव भक्त्यर्थं प्रेम्णोऽनि-वार्यत्वं मन्यते साधकैः। अत एव नारदमतेऽपि भक्तिः प्रेमस्वरूपा स्नेहरूपात्मिका वा विद्यते। एवं च भक्तौ प्रेम्ण एव प्रमुखतेति सिद्ध्यति। भक्तः किमपि स्वस्य कृते

---

१. द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यास्तु सोऽसृजत् विविधाः प्रजाः॥—ब्रह्मपुराणे

प्रेमविषयादादातुं नेहते। किन्तु तस्य कृते स्वकीयं सर्वमपि वस्तु दातुमेव वाञ्छति। तत्र तत्सुखसुखित्वस्यैव प्राधान्यं न तु स्वसुखसुखित्वस्य।

अत्र लौकिकी मादकता न भवति। न वा वासनाजन्योन्माद एव। एतदेव प्रेमाऽभिधीयते। वास्तविकप्रेम्णि वासनाराहित्यं शान्त्यतिशयो मोहाभावश्च भवति। संसारसारभूतं प्रेम तु एवंविधमेव। अत्रैव सर्वे रसा भावाश्चोद्भूय लीयन्ते समुद्रे तरङ्गवत्। प्रेम्णा एव साधको द्वैतभावनयाऽद्वैतं ब्रह्म प्राप्नोति। प्रेमैव द्वैतेऽप्यद्वैतता प्रतिपादकः। तेन हि लोकेऽपि भर्तृभार्ये भिन्नेऽप्यभिन्ने। यथा हि जलशर्करे भेदमपहायैकी भवतस्तथैवात्रापि ज्ञेयम्। एवं प्रेमोत्सर्गात् प्रसूताऽऽत्मोत्सर्गस्य भाव एव क्रमेण विकासमेत्य विश्वकर्त्तुः प्रेम्णि परिणमते। इदमेव प्रेम्णः परिष्करणम्, एतदेव भक्तिरसस्य निदानम्।

मनोविज्ञानदृष्ट्याऽनन्यप्रेमभावो व्यापकमनोवृत्तिर्वर्तते, यतो हि सा कतिपयमनोवेगानां सम्मिश्रणस्य क्रमिकबौद्धिकतत्त्वानां समावेशस्य, तेषां पुनरावृत्तेश्च प्रतिफलनमस्ति। अपि च स प्रेमा मनसः स्थिरा वृत्तिर्विद्यते, यस्मिन्नपत्यस्नेहः, संघर्षः, जिज्ञासा, भोजनोपार्जनम्, निषेधः, पलायनम्, आत्मप्रतिष्ठा, सामाजिकता, आत्मसमर्पणम्, निर्माणम्, आर्तप्रार्थना, क्रीडा, अनुकरणम्, हास्यञ्चेत्यादीनां समस्तमूलप्रवृत्तीनामेतत् सम्बद्धानां वात्सल्यम्, क्रोधः, उत्सुकता, क्षुत्, घृणा, भयम्, सहानुभूतिः, गर्वः, उत्सर्गः, कामः, परिग्रहः, सर्जनम्, उत्साह इत्यादिमनोवेगानाञ्च सम्मिश्रणेनैव स्वरूपं लभते। प्रेम्ण एव सृष्टेरारम्भः। अत एव नारीनरयोर्मनोवेगेषु प्रेमभावनायाः प्रामुख्यं स्वीक्रियते बुधैः। कामवासनायां स्वप्रियप्राप्तेर्या त्वरा जायते सैव भक्तिशास्त्रे कामानुगाभक्तिरिति कथ्यते। तादृशदशायां प्रियः प्रेयसीकृते स्वेच्छयैव प्रसन्नतापूर्वकं स्वसर्वस्वं समर्पयति। एवञ्चात्मविलयने सर्वात्मसमर्पणे वा साधकैरलौकिकानन्दः समनुभूयते। प्रेम्णः साऽनन्यदशाऽनिर्वचनीया एव वर्तते। तादृशी विशेषदशैव साधनायाश्चरमसीमा विद्यते। साधकः सर्वं विहाय तामनन्यप्रेमदशामेव सर्वदा वाञ्छति। यदा चित्तस्य प्रेममयभावाकुलता लौकिकविषयं विहाय पारलौकिकविषयं प्रति उदेति, तदा सा सर्वोत्तमा भक्तिदशेति कथ्यते।

## कामस्य भक्तिरूपत्वलाभः

फ्रायडमतानुसारेण सर्वा अपि प्राणिप्रवृत्तयः कामवृत्तिमूला एव। किन्तु सामाजिकमर्यादयाऽन्यकारणेन वा स्वाभाविककामवृत्तिर्निरुध्यते, येन बहुविधा मानसिकव्याधयः समुत्पद्यन्ते, याभिश्च मनुष्यो विकारग्रस्तो जायते। अतो मानसिकविकारेभ्यः परित्राणाय कामभावस्य मर्यादितस्वरूपप्रदानाय च तस्य कामभावविषये परिवर्तनं

क्रियते, तदेव फ्रायडमते कामवृत्तेरुन्नयनं परिष्करणं वेति कथ्यते[1] । स्वमित्रं परमेश्वरं प्रति वा स्वात्मार्पणेन मनुष्य उद्वेगरहितो भूत्वा सन्तोषं शान्तिमानन्दं चानुभवति । तदेव कामस्य परिष्कृतस्वरूपं भक्तिरिति कथ्यते ।

तात्पर्यमिदं यत् फ्रायडमते कामवृत्तेर्जीवने प्राधान्यं वर्तते । तस्याः केनापि कारणेन सर्वथा तिरोभावो न भवति, अपि तु सा कारणविशेषसन्निधानेनान्यरूपेण वाऽऽत्मानं प्रकटयति । दैवीशक्तावाध्यात्मिकतायां वा विश्वासाभावकारणादेव फ्रायडमते भक्तिः काल्पनिकत्वेन भ्रमत्वेन च प्रतिपादिता किन्तु आध्यात्मिकशक्तौ विश्वासकारणादेव युंग-केनिथ-वाकरप्रभृतिभिर्विद्वद्भिः फ्रायडस्य परिष्करणसिद्धान्तः खण्डितः । यदा मनुष्यः सामाजिकबन्धनपरवशः सन् स्वकामभावं सफलयितुं न प्रभवति तदा सः कमप्यलौलिकपरमेश्वरं प्रकल्प्य तदीयभक्तावात्मानमवगाहयतीति यत् फ्रायडमतं तन्नोचितमिति तैः स्पष्टमुक्तम्[2] । एवं युंगप्रभृतिमते परमात्मानं प्रति कामवासनायाः तीव्रतया दिव्यमनोरागस्योदयो न भवति, अपि तु लौकिकविषयविरागेनाऽऽध्यात्मिकानुरागस्य प्राबल्येन च तद् भवति । प्रमाणं चात्र विभिन्नसाधकजीवनवृत्तमेव । इत्थञ्च कामस्यैव परिष्कृतस्वरूपं भक्तिरिति फ्रायडमतं युंगप्रभृतिभिः खण्डितम् । एवं खण्डनीयत्वेऽपि भक्तिरसस्य स्वरूपोद्घाटनाय फ्रायडमतमप्यतीवोपयुज्यते । तदेव युंग-केनिथ-वाकर-सैकटीसप्रभृतिभिर्विद्वद्भिः कामभावस्य भक्तिभावे रूपान्तरणमिति कथ्यते । रूपान्तरप्रक्रियया मनुष्यस्याधोमुखवृत्तयोर्दैवीभावनया दिव्यात्मदर्शनेनोच्चमानसिकवृत्त्या च प्रभाविता ऊर्ध्वमुख्यो भवन्ति । इत्थं च मनुष्यस्य तदा महत् परिवर्त्तनं जायते, पश्चात् लौकिकविषयेभ्यः पराङ्मुखो भूत्वा भगवत्प्रेम्णि स विलीयते । विलियमपूटमतानुसारेण यद्यपि कारणान्तरेणापि जीवने महत् परिवर्तनं भवति, किन्तु भक्तिभावनया एव जीवने कल्पनातीतं परिवर्तनं भवति, तत्रान्यत् कारणं तु अत्यल्पमेव । सर्वतो विच्छिन्नाभिलाषपुरुषं भक्तिरेव सर्वथा रक्षति । तयैव मानवः समस्तदुःखारातिं जयति[3] ।

डा० सैकिटसमतानुसारेण मुख्यतया रूपान्तरणं त्रिधा भवति । यथा हि-(१) दुःखस्यानुभवः, (२) दुःखनिरोधस्य भावना, (३) दुःखस्याऽऽत्यन्तिकनिवृत्त्यर्थं परमात्मनः सान्निध्योपायान्वेषणं भगवत्प्रेम्णः परिपक्वता च । प्रोक्तप्रक्रियात्रयमाधारीकृत्य पाश्चात्त्यमनोवैज्ञानिकैः रूपान्तरस्य मार्गः स्थापितः । तत्रादौ मानवः

---

१. इण्ट्रोडक्टरी लेक्चर्स-पृष्ठे २६०-फ्रायडस्य

२. द सायकोलौजी आफ सेक्स, पृष्ठे २३-ओस्वाल्ड स्क्वार्टज ।

३. रीलिजस कौन्ससनेस-पृष्ठे १५८, विलियमपूट ।

संसारे दुःखमनुभवति ततो मुक्तेर्दुःसाध्यत्वमपि जानाति। यथा-यथा स्ववास्तविकदशायाः सम्यग् ज्ञानं करोति तथा-तथा दुःखादात्मानं गोपयितुं परिव्याकुली भवति। ततः स दुःखस्याऽऽत्यन्तिकनिवृत्त्यर्थं धार्मिकग्रन्थान् पठति, शास्त्राचारस्यानुगमनं करोति, महात्मभिः सह सङ्गतिं च करोति। एवञ्च दुःखनिरोधोपायस्यानुसन्धानं रूपान्तरस्य द्वितीयावस्था वर्तते। प्रोक्तसाधनैर्यथा-यथा सांसारिकविषयेभ्यो विरागो भवति तथा-तथा परमेश्वरं प्रति मानवस्यानुरागो वर्द्धते। अन्ते च परमेश्वरोन्मुखः प्रेमा पूर्णतां प्राप्य सांसारिकविषयान्नात्मसात् करोति। तदा साधकः सदा सर्वत्र निखिलसौन्दर्य—रसानन्दस्वरूपं परमात्मनं स्निह्यति। ईश्वरप्रेम्णः परिपूर्णाऽवस्थेयं रूपान्तरस्य चरमावस्था वर्तते। यत्र भक्तिभावापन्नः साधकः सांसारिकविषयोपभोगस्य पूर्वप्रक्रिययैव स्वमनसि परमेश्वरप्रेम्णोऽनुभवं करोति।

इत्थञ्च सांसारिकभोगनिवृत्तिरूपया रूपान्तरप्रक्रियया सर्वथा विनष्टमनोरथोऽपि पुरुषः सर्वान् मनोरथानाप्नोति[1]। एवञ्च सांसारिकदुःखेभ्यो विनिर्मुक्तो भूत्वा भगवद्रसमनुभवति। अयमेव पौरस्त्यपाश्चात्त्यविदुषां भक्तिविषयकमनोवैज्ञानिकसिद्धान्तो वर्तते। पाश्चात्त्यविदुषां मते तरुणावस्थैव पूर्वोक्तरूपान्तरस्य प्रादुर्भावकालो वर्तते, यतो हि तरुणावस्थायामेव विविधविचाराणां विशेषतः समुत्थानात् तदैव मनोभावानां परस्परं सङ्घर्षणं भवति। डा० फारसीथमतानुसारेण मानसशास्त्रदृष्ट्या भक्त्यात्मकरूपान्तरमिदं पूर्णोत्कर्षप्राप्तसहजानुक्रमे निरुद्धकामभावस्य नूतनप्रबलवेगातिरिक्तं नास्ति किञ्चिदन्यत्[3]। सांसारिकविषयोपभोगस्य वाञ्छां मनुष्यः बाल्यकालादेव कर्त्तुमारभते। अतो रूपान्तरप्रक्रियायाः प्रादुर्भावोऽस्मादेव कालाद् भवतीति निश्चयेन वक्तुं न शक्यते।

थाउलेसमतानुसारेण पापात्मा धर्मात्मत्वं लभते, धर्मात्मा च परमहंसतां विन्दते, इदमपि रूपान्तरणमेव। इत्थमेव रूपान्तरणं कामस्य भक्तित्वेन। किन्तु अन्येषु गूढतमेषु रूपान्तरेषु तु कामभावस्योन्नयनं न भवति। यत्र कामः प्रधानो वर्तते, तत्र जीवनक्रियाकलापस्य संचालिकायाः कामवृत्तेः परिष्करणं भवति[4]। असाधारणरूपान्तरंतु मानवस्य सम्पूर्णवृत्तीनां भक्तिरूपेण भवति। तादृशविशिष्टदशायां साधकः समस्तलौकिकभावं विस्मृत्य भक्तिरसमनुभवन् परमानन्दमाप्नोति।

---

१. द सायकोलौजी आफ रीलिजने पृष्ठे १८७—सेलवि।

२. द सायकोलाजी आफ रीलिजने पृष्ठे १६२।

३. सायकोलौजी एण्ड रीलिजन पृष्ठे १३५ फारसीथ।

४. इण्ट्रोडक्शन टू द सायकोलौजी आफ रीलिजने पृष्ठे २२४ थाउलेस।

मानसशास्त्रदृष्ट्या पाश्चात्त्यानां मते लौकिकसृष्टेर्मूलाधारो नार्यस्तथाऽनादिवासना ( रतिः ) वर्तते । मनसो रतेरस्ति विषयद्वयं, नारी स्वात्मा च । तत्र श्रद्धावात्सल्य स्नेह-कामरूपमनोवेगचतुष्टयस्य समष्टिरेव रतिरिति कथ्यते मानसशास्त्रे । रतेर्विषयेषु नारी प्रामुख्यं भजते । रतिपूर्त्तिश्च नारीत एव संभवति । यदा रतिर्नारीरूपं विषयमपहाय स्वात्मनिष्ठा भवति तदा सैव भक्तिपदमाप्नोति[1] । भक्तिदशायां साधकः परमेश्वरं प्रति तथैव समाकृष्टो जायते यथा पतिर्जायां प्रति समाकृष्यते[2] । प्रिया-विषयिणीरतिर्यथाऽऽनन्दजनिकेति लोकानुभवस्ततोऽप्यधिकतरमानन्दं भक्तिरसरसिकः समास्वादयति । आनन्दोऽयं भौतिकाऽऽनन्दात् सर्वथा भिन्नो विलक्षणस्तथाऽनिर्वचनीयो भवति । स चाध्यात्मरसो मधुरतमतया स्वाद्यते । स्वादानन्तरं साधकः सम्पूर्णलौकिकविषयान् विहाय कामपि वाचामगो[3]चरां दशामुपैति । सा दशा एव मानसशास्त्रदृष्ट्या भक्तेश्चरमलक्ष्यं विद्यते ।

---

१. मधुररस १, पृष्ठे ६५ ।

२. पतिरिव जायामभि नो न्येतु धर्ता दिवः सविता विश्ववारः ।
ऋग्वेदे १०। १४९।४

३. स्वादुष्किलायं मधुमां उतायं तीव्रः किलायं रसवां उतायां ।।
ऋग्वेदे ६।४७।१

# भक्तिरस-विमर्शः

## दर्शनशास्त्रदृष्ट्या भक्तिरसविवेचनात्मकः

## तृतीयोऽध्यायः

**मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।**

—शंकराचार्यः

श्रेयःसृतिं भक्तिमुदस्य ते विभो, क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते, नान्यद् यथा स्थूलतुषावघातिनाम् ।।

—भागवते १०।१४।४

# अद्वैतदर्शने भक्तिरसस्वरूपम्

## सर्वाधिष्ठातृनिरूपणम्

यथा तिलेषु तैलम्, दुग्धेषु घृतं परिव्याप्तमस्ति तथैव विश्वस्य प्रतिकणमलौकिको ऽनिर्वचनीयोऽव्ययः परमात्मा परिव्याप्तो विद्यते। तस्य परमात्मनो मनसानुभूतिरेव ब्रह्मभावनेत्यभिधीयते। सा भावना आधिभौतिका-ऽऽधिदैविका-ऽऽध्यात्मिकभेदेन त्रिविधेति प्रतिपादितमुपनिषत्सु। तत्राऽऽधिभौतिकब्रह्मभावनायां जडपदार्था बाह्यरूपेण ज्ञायन्ते। तत्र सर्वे पदार्था जडदृष्ट्या विलोक्यन्ते। तत्र पदार्थस्याऽऽभ्यन्तरिक-सौन्दर्यं न ज्ञायते। आधिभौतिकदार्शनिका अन्धशक्तिमात्रमेव स्वीकुर्वन्ति। आधिदैविकब्रह्मभावनायां पदार्थस्य सौन्दर्यशक्त्यादीन् स्वीकृत्य देवायत्तत्त्वं देवाः सगुण-साकारतयोपस्थाप्यन्ते। अत एव ब्रह्मण आधिदैविकभावना भक्तावुपयोगिनी वर्तते। तस्या भावनाया मूलाधारभूता भक्तिरेव, भक्तिं विना तस्याः स्थितिर्न सम्भवति। आध्यात्मिकब्रह्मभावना तु प्रोक्तोभयविधभावनापेक्षया श्रेष्ठा, यतो हि तत्र ब्रह्मसत्ताया अनुभूतिर्निर्गुणनिराकारानिर्वचनीयचरमसत्तात्वेन भवति। तादृशावस्थायां साधको जगतः सर्वेष्वपि वस्तुषु परमात्मानं साक्षात्करोति। अपि च परमसौन्दर्यनिधेः परमानन्दस्वरूपपरमात्मनः सुखदामनुभूतिं करोति।

भारतीयमनीषिभिः कार्यरूपस्यास्य जगतः कारणस्य ज्ञानायैव स्वीकीयां बुद्धिं व्ययितवन्तः। अत एव निखिलभारतीयवाङ्मये जगत्कारणान्वेषणस्य च महती प्रवृत्तिः परिदृश्यते। पूर्वं केन प्रकारेण मनुष्यैः सर्वव्यापकस्य सर्वशक्तिमतो महाशक्तेः परमात्मनः सत्ताऽनुभूता, कथञ्च सा एव सत्ता सांसारिकसमस्तकार्याणां कारणत्वेन च स्वीकृता इत्यत्र महदाश्चर्यं भवति। एवं च लौकिकसमस्तकारणानामपि कारणभूता सा एव महाशक्तिर्ब्रह्मत्वेन[1] संज्ञिता, सा च ब्रह्मविद्यया परिज्ञायते। सामान्यतया तद् ब्रह्म, सा ब्रह्मविद्या च धार्मिकदृष्ट्या दार्शनिकरीत्या वा विज्ञायते। ब्रह्मविद्याया धार्मिकरूपं तु मनुष्याणां धार्मिकमनोवृत्तेरुपासनापरकमनोवृत्तेर्वा परिणामो वर्तते। तया मनोवृत्त्या च प्रेरितैः साधकैः सर्वव्यापकं सर्वशक्तिमद्ब्रह्म ऐश्वर्यमयपरमात्मतया परिकल्पितम्। परमात्मन ऐश्वर्यबोधानन्तरमेव साधकैः स्वस्माद्भिन्नः परमात्मा स्वीकृतः, अपि चानुभूतः सः परमात्मा सर्वसमर्थः, दयासिन्धुः, भक्तानां भयत्राता, उद्धारकर्त्ता, अशरणशरणः, पतितपावनश्च वर्त्तते। सः परमात्मा आर्तसाधकानामार्तरवं श्रुत्वा नग्नपद्भ्यामेव परिरक्षणार्थं परिधावति, स च दुष्टानां दलनकर्त्ता सज्जनानां च परिपालकश्चाऽस्ति। एवं च परिदृश्यते भक्तैः स्वाभीष्टसिद्ध्यर्थं ब्रह्मणः प्रोक्तस्वरूप-

---

१. श्वेताश्वतरोपनिषदि-६।६

मेवोपास्यत्वेनाङ्गीकृतम् । ब्रह्मणश्च भक्तानां कामनासिद्धयर्थं तादृशमेव रूपं कल्पितम्[1] । परमेश्वरस्यैश्वर्यबोधानन्तरमेव साधकस्य चेतसि संसारे यदा यदा धर्मस्य हानिः, सज्जनानां पीडा च भवति तदा तदा संसारे धर्मसंस्थापनाय, साधुरक्षणाय, भक्तानां मनोरथपूरणाय च सर्वेषु युगेषु परमात्मा स्वयमेवावतरतीति धारणा दृढा भवति[2] । ब्रह्मणः प्रोक्तैश्वर्यसमन्वितेश्वररूपमेव साधकैरत्यन्तं स्पृहणीयमस्ति । भक्तानां स्वभावानुसारेण भगवद्विषयकरतिः पञ्चविधा भवतीति प्रतिपादितं भक्तैः, तथा हि—शान्तस्वभावस्य शान्तारतिः, दास्यस्वभावस्य प्रीता रतिः, सख्यस्वभावस्य प्रेयसी रतिः, वात्सल्यस्वभावस्यानुकम्पा रतिः, मधुरस्वभावस्य मधुरा रति (कान्ता रतिः) रिति । तत्र परमात्मविषयकानुरागत्वेन कान्ताविषयकरतिरेव भक्तिसम्प्रदाये सिद्धान्तरूपेण सर्वश्रेष्ठा भक्तैः समनुभूयते । तत्रैव साधकैर्मोक्षादपि सर्वश्रेष्ठो रसराजो भक्तिरस आस्वाद्यते । तत्र ब्रह्मणो ब्रह्मविद्यायाश्च परिज्ञानाय दार्शनिकमार्गोऽस्ति । औपनिषद्विद्यैव ब्रह्मविद्येति कथ्यते । तदेव वेदानां चरमो भागो वेदशिरः, उपनिषद्[3], वेदान्त इत्यादिपदैर्व्यवह्रियते । तत्र बहुप्रकारैः सरलया प्रक्रियया दुर्लभं ब्रह्मतत्त्वं प्रतिपादितम् । तत्रौपनिषज्ज्ञानस्य भेदत्रयमस्ति । आत्मज्ञानम्, विश्वज्ञानम, ब्रह्मज्ञानञ्चेति । तत्र सर्वप्रथममात्मज्ञानं विहितम्, यतो हि आत्मदर्शनेनैव विश्वदर्शनम्, तेन च ब्रह्मदर्शनं सम्भवति । अत एवाऽऽध्यात्मविद्यानां साधकैः सर्वप्रथममुत्तमपुरुषस्य दर्शनमन्विष्टम् (कोऽहम्), तस्य दर्शनं च अहं ब्रह्मास्मि' इति रूपेण कृतम् । ततो मध्यमपुरुषस्य ( कस्त्वम् ), दर्शनस्य जिज्ञासा समुद्भूता, तस्य दर्शनं च 'तत्त्वमसि' इति रूपेण कृतम् । तदनन्तरमन्यपुरुषस्य ( कोऽयम् ) दर्शनस्याऽऽकाङ्क्षा समुद्भूता, तस्य च दर्शनं 'सर्वं खल्विदं ब्रह्म' इति रूपेण ब्रह्मरूपस्य दर्शनं कृतम् । एवं च मनुष्ये सर्वप्रथममात्मबोधस्ततो विश्वबोधः पश्चात् परमात्मबोधश्च जातः । इत्थं च मनुष्यैरन्तःस्थितविश्वस्य

---

१. उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पनार रामतापन्युपनिषदि–७

२. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥—श्रीमद्भगवद्गीतायाम् ४।७, ८
—महाभक्तेन श्रीतुलसीदासेनाप्येवमेवानुभूतम्–रामचरितमानसे

३. अद्यत्वे त्रिंशदुत्तरशतसंख्यका उपनिषद उपलभ्यन्ते । किन्तु सर्वथा प्रामाणिकत्वेनल्पीयस्य एव स्वीक्रियन्ते । तत्रापि ईशावास्यादिदशोपनिषदां विशेषः समादरः । आसां दशोपनिषदां श्रीशङ्कराचायादिभिः सर्ववेदान्तिभिः स्वस्वमतानुकूलां व्याख्यां भाष्यं च कृतम् ।

बाह्यविश्वस्य च ज्ञानानन्तरमेव जीवात्मपरमात्मनोश्चानुभूतिः प्राप्ता। तैरात्मबोधद्वारा विश्वबोधो, विश्वबोधद्वारा परमात्मबोधश्च लब्धः। तैश्च मनुष्यैर्विश्वस्य प्रतिकणं परिव्याप्तस्य विश्वात्मनो दर्शनं कृतम्, तथा च तस्य विश्वात्मनोऽनन्ता सर्जनशक्तिश्चानुभूता। मानवजीवनस्येयमेव सर्वोत्तमोपलब्धिः, तेनैव मनुष्यस्य सभ्यता, संस्कृतिः, धर्मः, ज्ञानम्, विज्ञानं चेत्येवमादिचिरसंचिता विशालसम्पत्तिः समुद्भवति विकसति च।

अतो दार्शनिकमनोवृत्त्या प्रेरितैः साधकैः तद्ब्रह्म निराकारम्, निर्गुणम्, सर्वव्यापकम्, सर्वान्तर्यामी अनादि, अखण्डम् मनोवाग्भ्यामगोचरम्, अनिर्वचनीयम्, अद्वैततत्त्वमित्यादिरूपेण च परिज्ञातम्। तेनैव ब्रह्मणा च सम्पूर्णं दृश्यादृश्यं जडचेतनात्मकविश्वं परिव्याप्तमिति च स्वीकृतम्। एवञ्च विविध-धर्ममतानि दार्शनिकसिद्धान्तांश्च प्रतिष्ठापितानि लोके साधकैः। धार्मिकमनोवृत्तेः प्राधान्येन परब्रह्मणः सगुणरूपमेव सर्वाधिकरूपेण स्वीकृतं भक्तैः। दार्शनिकमनोवृत्तेः प्राधान्येन च परब्रह्मणो निर्गुणं निराकारं सूक्ष्मातिसूक्ष्मं स्वरूपमेव विवेचनस्य मुख्य-विषयोऽभूत्। अत एव ब्रह्मणो निर्गुणसगुणोभयविधस्वरूपस्य तत् प्रतिपादकदार्शनिकसिद्धान्तस्य समासेन वर्णनं क्रियते, तत् सम्बन्धश्च येन केन प्रकारेणापि भक्तिरसेन सह स्वीक्रियते दार्शनिकभक्तिरसज्ञैः।

## निर्गुणब्रह्मस्वरूपम्

सामान्यतो ब्रह्मणो व्यक्ताव्यक्तभेदेन रूपद्वयं विद्यते। तत्र ब्रह्मणः साकारं व्यक्तरूपं सगुणत्वेन, तस्य च निराकारमव्यक्तरूपं निर्गुणत्वेनाभिधीयते। ब्रह्मणो निर्गुणं निर्विशेषं स्वरूपं मुख्यतो ज्ञानयोगस्य विषयोऽस्ति, यन्मनोवाणीभ्यामगोचरं विद्यते। तस्य निःसीमाचिन्त्यगुणप्रकाशस्तु तर्केणैव भवति। तस्य परिज्ञानसाधनमात्म-ज्ञानमात्मानुभवो वा विद्यते। तद् वाचको निर्गुणशब्दः सर्वप्रथमं श्वेताश्वेतरो-पनिषदि तस्य देवस्य विशेषणत्वेन दृश्यते, यः समस्तभूतेष्वन्तर्निहितः सर्वव्यापी सर्वकर्माणामधिष्ठाता सर्वसाक्षी सर्वस्य प्रकाशको निरुपाधिश्च वर्तते[1]। अयमेवार्थो भगवद्गीतायामप्युक्तो यत्—"ब्रह्म सर्वेन्द्रियविषयान् जानाति" किन्तु वस्तुतः "पद्मपत्रमिवाम्भसा" इति रीत्या सर्वेन्द्रियेभ्यः परमस्ति। आसक्तिरहितमपि सर्वान् धारयति पोषयति च। निर्गुणत्वेऽपि सर्वगुणान् भुङ्क्ते। तदेव चराचरेषु परिव्याप्तं

---

१. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥
—श्वेताश्वेतरोपनिषदि ६।११।

वर्तते । तच्चातिसूक्ष्मत्वादविज्ञेयम्, अत एव समीपस्थमपि दूरे प्रतिभाति[1] । श्वेताश्वेतरोपनिषदि ब्रह्मणो निर्गुणनिर्विशेषरूपस्यालौकिकता प्रतिपादिता यद् तद् ब्रह्म पादौ विनैव वेगेन चलति, करौ विना गृह्णाति, नेत्रे विना पश्यति, कर्णौ विना शृणोति[2] । एवमेव रामचरितमानसेऽपि तस्य ब्रह्मणः स्वरूपं प्रतिपादितं भक्तप्रवरेण श्रीतुलसीदासेन[3] । अपि च तद् ब्रह्म गच्छदपि न गच्छति, अन्तिके सदपि दूरे चास्ति, सम्पूर्णजगतोऽभ्यन्तरे विद्यमानमपि बहिः प्रकाशते[4] । एवं च विविधविरुद्धात्मकैर्वचनैर्निर्गुणब्रह्मणोऽलौकिकता प्रतिपादिता उपनिषदि । एवं च वेदोपनिषत्पुराणगीतादिषु धार्मिकाऽऽध्यात्मिकग्रन्थेषु परमतत्त्वविषये भूयान् विचारो दृश्यते । तत्र यः परमतत्त्वमेकत्वेन मनुते स एकत्ववादी, यश्चानेकत्वेन मनुते स अनेकत्ववादीति कथ्यते । स एव द्वैतवादी । तद्भिन्नाद्वैतवादिमते तु परमतत्त्वमेकमेव । तत्र ब्रह्म निराकारम्, अगोचरम्, अनिर्वचनीयमेवास्तीति स्वीक्रियते । तस्याद्वैतपरम-तत्त्वस्योपमानं न कोऽपि जानाति जगति ।

प्रोक्ताद्वैतपरमतत्त्वविषये विविधमतानि प्रचलितानि शास्त्रेषु । तत्र शून्यवादिबौद्धानां मते शून्यमिति, । विज्ञानवादिबौद्धानां मते विज्ञानमिति, सौत्रान्तिकवैभाषिकयोः सौगतयोर्मते बाह्यम् तथा बाह्याभ्यन्तरञ्च तत्त्वमिति, जैनानां मतेऽर्हन्निति, शब्दब्रह्मवादिवैयाकरणानां मते शब्द इति, आलङ्कारिकाणां मते रस इति, शक्तिवादिनां मते शक्तिरिति, शैवानां मते शिव इति, वेदान्तिनां मते ब्रह्मेति, तच्च ब्रह्म क्वचिन्निर्गुणं क्वचित्सगुणमिति, मीमांसकानां मते कर्म इति । नैयायिकानां मते कर्त्ता (ईश्वरः) इति । पाश्चात्यदार्शनिकेषु फिश्मेटमते तत्परमतत्त्वमात्मा इति, शेलिङ्गमते अनात्मा (प्रकृतिः) इति, हिगेलमते निरपेक्षप्रत्यय इति, ग्रीनमतेऽपरिच्छिन्नं चैतन्यमिति, ब्रैडलेमतेऽपरोक्षानुभव इति कथ्यते ।

---

१. सर्वेन्द्रिय-गुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ श्रीमद्भ० गी० १३।१४, १५

२. अपाणि पादो जवनो ग्रहीता पश्यत्यचक्षुः सः शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्रं पुरुषं महान्तम् ॥ श्वे० उ० ३।१६

३. रामचरितमानसे

४. तदेजति तन्नैजति तद्दूरे तद्वदन्तिके ।
तदन्तस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥—ईशावास्योपनिषदि— ५

प्रोक्तविभिन्नतत्त्ववादेषु आत्माद्वैतवाद एव सर्वप्रमुखसिद्धान्तोऽस्ति । स तु शून्याद्वयवादाद् विज्ञानाद्वयवादात् शब्दाद्वयवादात् सत्ताद्वयवादाच्च भिन्न एव प्रतीयते। यतो हि तत् सिद्धान्तानुसारेण प्रत्यक्षानुभूतश्चैतन्यस्वरूप आत्मा एव परमतत्त्वं वर्तते, न त्वन्यः कश्चिद्भावोऽभावो वा। सर्वेषामद्वैतवादिनां मते सर्वभूतानां सत्ता अद्वैततत्त्वे एव मायया विद्यमानाऽस्ति। तस्मादेव सृष्टिकाले मायया सर्वे पदार्थाः प्रतीयन्ते, प्रलये च तत्रैव विलीयन्ते।

### श्रीशङ्कराचार्यस्य सिद्धान्तः [ अद्वैतवादः ]

वैदिकवाङ्मये छान्दोग्य-बृहदारण्यक-माण्डूक्याद्युपनिषत्सु ब्रह्मसूत्रेषु गीतादिदार्शनिकग्रन्थेष्वद्वैतवादस्य विशदव्याख्या प्राप्यते। दुष्प्रधर्षस्य तर्कद्वाराऽद्वैतवेदान्तस्य प्रतिष्ठापकः श्रीशङ्कराचार्य एवास्ति। तेनोपनिषद्ब्रह्मसूत्रगीताभाष्यद्वारा ब्रह्माद्वैतवादः प्रतिष्ठापितः। बौद्धाभिमतः शून्याद्वयवादो विज्ञानाद्वयवादश्च खण्डितौ। तस्य मते वस्तुतः परमार्थसत्तारूपं ब्रह्म अद्वैतं सत्यतत्त्वञ्चास्ति, जगन्मिथ्या वर्तते। वस्तुतो ब्रह्मजीवयोरभेद एव, तयोर्भेदो नास्ति आत्मा[1] स्वयं सिद्धप्रत्ययोऽस्ति, अनुभूतिषु समवस्थितः संसारः, अनुभवस्य मूले आत्मनः सत्ता स्वतः सिद्धरूपेणावस्थिता। आत्मा स्वयं सिद्धज्ञानरूपमद्वैतञ्चास्ति। अस्यैवाद्वैततत्त्वस्य प्रतिष्ठापनं शाङ्कराद्वैतवादस्य मुख्यं प्रयोजनं वर्तते। तन्मते निर्विकल्पम्, निरुपाधि, निराकारम्, निर्गुणम्, सत्तामात्रमेव च ब्रह्मणः स्वरूपमुच्यते। एवं च तद् ब्रह्माद्वैतमते परमदिव्यस्वरूपम्, अमूर्तरूपम्, अजम्, अप्राणम्, अमृतस्वरूपम्, इन्द्रियादिरहितम्, परात्परञ्चाङ्गीक्रियते[2]। उपनिषत्सु स्वरूपलक्षणेन तटस्थलक्षणेन च ब्रह्म लक्षितम्। तत्र 'जन्माद्यस्य यतः[3],' 'यतो वा इमानि भूतानि जायन्ते[4]' इत्यादिना तटस्थ-लक्षणेन तद् ब्रह्म जगतः कारणम्, ज्ञानस्वरूपम्, सच्चिदानन्दस्वरूपात्मकस्तीति प्रतिपादितम्। 'सत्यं ज्ञानमनन्तं ब्रह्म[5],' 'सदैव सौम्येदमग्र आसीत्,[6]' "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[7] इत्यादिश्रुति-स्मृतिभिः प्रतिपादितेन स्वरूपलक्षणेन च तदेव ब्रह्म मायावच्छिन्नं सन् सगुणरूपेणाप्यवतरति धरातले भक्तजनानुग्रहीतुम्। अपि च भगवता बादरायणेन भागवते एकस्मिन्नेव श्लोके ब्रह्मण उभयविधस्वरूपं प्रतिपादितम्। तत्र "जन्माद्यस्य"[8] इत्यादिपूर्वार्द्धं ब्रह्मणस्तटस्थलक्षणं, 'तेजोवारिमृदाम्' इत्याद्युत्तरार्द्धं

---

१. श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
सत्यं ब्रह्म जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥ —श्रीशङ्कराचार्यः

२. दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥ —मु० उ० २।१।२ ।

३. ब्रह्मसूत्रे १।१।२ ।　४. तै० उ० ३।१।१ ।　५. तै० उ० २।१।१ ।

६. छा० उ० ६।२।२ ।　७. श्वेता० उ० ३।८ ।　८. भागवते १।१।१ ।

ब्रह्मणः स्वरूपलक्षणम् । ब्रह्मणः स्वरूपलक्षणमेव भक्तिरसोपासनायां भक्तैः साधकैश्चाङ्गीक्रियते ।

माययैव निर्विशेषब्रह्मणः सविशेषजगतः सृष्टिर्भवति । तथा च यथा लूतानाभेर्जडस्तन्तुर्जायते तथैव नित्यशुद्धबुद्धात् पुरुषात् परमात्मनः ( ब्रह्मणः ) प्रकृतिः समुद्भवति[1] । एवमेव प्रतिपादितं मुण्डकोपनिषदि यत् यथोर्णनाभिस्तन्तुं स्वयमेव लीलया सृजति पुनः गृह्णाति, यथा वा लूता किञ्चित् कारणान्तरं विनैव स्वशरीरादभिन्नं तन्तुं प्रसारयति, पुनस्तं स्वयमेव गृह्णाति । यथा वा पृथिव्यां व्रीह्यादिस्थावरान्ता स्वस्मादभिन्ना जायन्ते यथा वा जीवितात् पुरुषात् केशलोमानि विलक्षणानि प्रभवन्ति तथैव निमित्तान्तरं विनैव परब्रह्मणः समस्तजगत् ( प्रकृतिः ) सम्भवति[2] । तच्च मायातत्त्वं ब्रह्म इव त्रिकालाबाधितं सत्यं नास्ति तथा प्रत्यक्षप्रतीयमानत्वेनासदपि नास्ति । अत एव माया सदसद्भ्यां परमनिर्वचनीयतत्त्वं विद्यते । आवरणं विक्षेपश्चेति मायाया द्वे शक्ती स्तः । तत्राऽऽवरण-शक्त्या सा माया ब्रह्मणः शुद्धं स्वरूपं समाच्छादयति विक्षेपशक्त्या च प्रपञ्चपूर्णं जगज्जालं रचयति । इत्थञ्च मायोपाधिकब्रह्मण एव जगत् प्रादुर्भवति । लूताद्वारानिर्मितजालं प्रति यथा लूता निमित्तमुपादानञ्चास्ति तथैव ब्रह्म अपि जगतो निमित्तं तथोपादनकारणञ्चास्ति । तन्मतानुसारेण देहेन्द्रियसमूहस्याध्यक्षः, कर्मफलस्य च भोक्ताऽविद्ययोपाधिक आत्मा एव जीवो विद्यते[3] । स च आत्मा नित्योऽजन्मा वर्त्तते ब्रह्मणा सह भेदाभावात जीवात्मापि परमात्मैव । अत एव तन्मते आत्मा विभुरेव, न त्वणुरूपः । जीवस्यान्तर्मुखी बहिर्मुखी चेति प्रवृत्तिद्वयं भवति । तत्र बहिर्मुखत्त्वेन जीवो जडोन्मुखो ( संसारोन्मुखः ) भवति तथाऽन्तर्मुखत्वेनत्वामभूत परमेश्वरोन्मुखो जायते ।

यद्यप्यद्वैते ब्रह्मणो निर्गुणत्वं पारमार्थिकम् , सगुणत्वं तु औपाधिकं मिथ्येत्यभ्युपगम्यते, तथापि व्यवहारदशाया मुपास्योपासकादिव्यवहाराः स्वीकृता एव । उक्तं च गौडपादाचार्यैः—

---

१ ऊर्णनाभाद् यथा तन्तुर्जायते चेतनाज्जडः ।
नित्यप्रबुद्धात् पुरुषाद् ब्रह्मणः प्रकृतिस्तथा ॥ –योगवासिष्ठे उ०प्र०६६।७१

२. यथोर्णनाभिः सृजते गृह्णते च, यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात् केशलोमानि, तथाक्षरात् सम्भवतीह विश्वम् ॥
–मु० उ० १।१।७

३. आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ –क० उ० १।३।४ ।

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुद्ध्यन्ते तैरयं न विरुध्यते[1] ॥
अविवादोऽविरुद्धश्च देशिकस्तं नमाम्यहम्[2] ॥

अद्वैतवादो यवनानां भारताऽऽगमनानन्तरं सूफीमतरूपेण भारते नवीनतया पुनः प्रतिष्ठितः । मध्यकालिक निर्गुणोपासकानां सूफीसाधकानां चाद्वैतवादः शाङ्कराद्वैतवादेन पूर्णतया प्रभावितः परिज्ञायते । कबीरादिनिगुर्णोपासकानां परमेश्वर एक एव न त्वनेकः । स च परमात्मा निर्गुणसगुणाभ्यां परोऽस्ति । अत्र निर्गुणपदं विशिष्टाद्वैताभिमतं प्राकृतगुणगणरहितं दिव्यानन्तर्गुणगणसहितं ब्रह्म वदति । स च परमात्मा केवलमनुभवगम्यः, ज्योतिःस्वरूपः, निर्गुणः, निराकारः, अगोचरश्च विद्यते । वैष्णवभक्तिसाधनायाः सूफीभक्तिसाधनायाश्च प्रभावेण तदेव निर्गुणं, निरुपाधि, निराकारमद्वैतं ब्रह्म परमसौन्दर्यनिधिपरमात्मरूपेणावतीर्णम् । इत्थञ्च—निराकारब्रह्मप्राप्त्यर्थं भक्तिरसस्य साधनैव परमसहायकभूता विद्यते । तत्प्राप्त्यर्थं भक्तिरेव सोपानमित्यत्र नास्ति विचिकित्सालेशोऽपि । उपास्यस्य तदेव रूपं प्रीत्या समुपासनीयम् । तेन विना संसारबन्धनं न कथमपि विनश्यति[3] । ब्रह्मणो लीलैश्वर्यमधुरभावसमन्वितं तदेव स्वरूपं गृहीत्वा भाषायां मार्मिकाभिव्यञ्जना कृता निर्गुणसगुणोपासकैः । साधनासाहित्यस्य भावात्मकरहस्यवादस्य दार्शनिकपृष्ठभूमिरियमेव विद्यते ।

## शाङ्करमते भक्तेः ( उपासनायाः ) प्रयोजनं स्वरूपं च

अद्वैतवादिषु प्रमुखतम आचार्यो भगवान् श्रीशङ्करो ब्रह्मज्ञानावाप्त्यै साधनं भक्तिरिति मन्यते । तत्र भगवान् शङ्कराचार्यं उपनिषद्भाष्ये ब्रह्मसूत्रभाष्ये गीताभाष्ये च परम्परया ब्रह्मावाप्तिसाधनत्वेन भक्तिं निरूपितवान् । छान्दोग्योपनिषदि[4] शाङ्करभाष्ये ब्रह्मावाप्तिसाधनेषूपासनमुपवर्ण्य ततो ज्ञानसाधनद्वारोपासनस्य ब्रह्मावाप्तिसाधनत्वं समर्थितम् । ब्रह्मसूत्रभाष्ये च भगवता शङ्करेण स्पष्टमेवोक्तं यद् भगवतः परमात्मनोऽनुग्रहरूपोपासनेनैव विज्ञानं जायते । उपासनं चात्र भक्तिरेव[5] ।

भगवत्पादशङ्कराचार्यस्येममाशयं मनसि निधाय श्रीविद्यारण्यस्वामी पञ्चदश्यां

---

१. गौडपादकारिकारिकायाम्–३।१७ । २. गौडपादकारिकायाम्–४।२ ।

३. कबीरग्रन्थावल्याम्–पृष्ठे २४६ ।

४. छान्दोग्योपनिषदि १।१।१ शाङ्करभाष्ये ।

५. तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति, कुतस्तच्छ्रुतेः ॥
ब्रह्मसूत्रे २।३।४१ शाङ्करभाष्ये ।

विद्योत्पत्तावुपासनस्य सामर्थ्यं प्रकटितवान्[१]। एवमेवोपासनस्य विद्योत्पत्तौ माहात्म्यं प्रणवोपासनाद्वारा प्रश्नोपनिषदि,[२] तैत्तिरीयोपनिषदि,[३] मुण्डकोपनिषदि,[४] मैत्रायण्युपनिषदि[५] च साधु प्रदर्शितम्।

विवेकचूडामणौ तु मोक्षे मुख्यं कारणं भक्तिरेवेति प्रतिपादितं श्रीशङ्कराचार्येण[६]। सा च भक्तिस्तन्मते स्वस्वरूपानुचिन्तनात्मिका विद्यते[७]। श्रीशङ्कराचार्यस्य मते विशिष्टाद्वैतिनां श्रीरामानुजाचार्यश्रीरामानन्दाचार्यादीनां मते च एतावानेव विशेषो यदेकत्र भक्त्युपसर्जनीभूतं ज्ञानं मोक्षकारणमपरत्र ज्ञानोपसर्जनीभूता भक्तिर्मोक्षकारणमिति। एतच्च श्रीमद्भगवद्गीतायाः शाङ्करभाष्ये रामानुजभाष्ये आनन्दभाष्ये च स्पष्टीकृतम्।

तत्र तत्र शाङ्करभाष्येषूपासनस्वरूपमपि वर्णितम्। उपासना नाम—उपास्याकाराकारितचित्तवृत्तिरथवोपास्यविषयकाविच्छिन्नतैलधारोपमस्मृतिसन्ततिः[८]। उपासनार्थं चित्तैकाग्र्यम्, चित्तैकाग्र्यर्थमालम्बनञ्चावश्यकम्। एतच्चालम्बनं भगवतो मनोहारिरूपं भवेदथवा भगवत्प्रतीकभूतः ओङ्कारो भवेत्। छान्दोग्योपनिषदि[९] श्रीशङ्करा-

---

१. उपासनस्य सामर्थ्याद् विद्योत्पत्तिर्भवेत्ततः।
नानाः पन्था इति ह्येतच्छास्त्रं नैव विरुध्यते॥ पं० द०, ध्यानप्र० १.२।

२. प्र० उ० ५।१।२। ३. तै० उ० १।८।१। ४. मु० उ० २।२।६।

५. मै०उ० ४।४।३७। ६. मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी॥
विवेकचूडामणौ ३२।

अस्य रचयिता श्रीशङ्कराचार्यः। अयं श्रीशङ्कराचार्य आद्यशङ्कराचार्याद्भिन्नः, उत स एवेति विचारार्हः।

७. स्वस्वरूपानुचिन्तनं भक्तिरित्यभिधीयते॥—विवेकचूडामणौ ३२।

८. "उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरितम्"॥—छा० उ० १।१।१ शां० भा०
उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्यतैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यद् आसनं, तदुपासनमाचक्षते। श्रीमद्भगवद्गीतायाम् १२।२ शाङ्करभाष्ये। उभयत्र उपासनाचोपासनं च नार्थान्तरम्। प्रश्नोपनिषदि— ।५ शाङ्करभाष्ये।
उपासनं नाम समानप्रत्ययप्रवाहकरणमिति। ब्रह्मसूत्रे ४।१।७ तथा १।१।१२ शाङ्करभाष्ये।

९. छान्दोग्योपनिषदि २।३।२१ शाङ्करभाष्ये।

चार्येण भगवतः प्रतीकरूपस्य ओङ्कारस्योपासनं विहितम्। इदमेव निर्विशेष-सविशेष-ब्रह्मवादिनो भेदः। निर्विशेषब्रह्मवादी चित्तालम्बनम् ओङ्कारं मनुते[1]। सविशेषब्रह्मवादी तु भगवतः सुन्दरं चारुमनोग्राहिरूपमालम्बनं मन्यते। निरुक्तकारमते-उपासना भक्तिश्चैकैव, उभयत्रापि चित्तालम्बनार्थमालम्बनमपेक्षते, गुणाश्चारोप्यन्ते। अत एव च भक्तिवादो गुणवाद इत्युच्यते[2]। पूर्वोक्तविवेचनस्य तात्पर्यमिदं प्रतिभाति यत् शाङ्करमते भगवदनुग्रहरूपभक्तिरथवा स्वस्वरूपानुध्यानरूपभक्तिरेव मोक्षस्य हेतुर्विद्यत इति।

## सगुणब्रह्मणः स्वरूपम्

विवेचितस्याद्वैतवादस्य निष्कर्षोऽयं प्रतिभाति—शङ्कराचार्येण प्रचारितवेदान्त-विचारेण तत्कालिक जनमानसप्रश्नानां सन्तोषजनकं सरलं समाधानं किमपि नाभूत्-शाङ्करसिद्धान्तो दार्शनिकदृष्ट्या पूर्णोऽपि व्यावहारिकदृष्ट्याऽपूर्णोऽभूत्। अत एव शङ्कराचार्यानन्तरमद्वैतवादस्य खण्डनं कृत्वा श्रीरामानुजाचार्येण श्रीनारायणपरो विशिष्टाद्वैतवादः, श्रीमध्वाचार्येण द्वैतवादः, श्रीनिम्बार्काचार्येण द्वैताद्वैतवादः, श्रीविष्णुस्वामिना शुद्धाद्वैतवादः, श्रीरामानन्दाचार्येण श्रीरामपरो विशिष्टाद्वैतवादश्चेति इमे सिद्धान्ताः प्रतिष्ठापिताः। ततश्च सगुणोपासनाभक्तिरसरूपसरलराजमार्गे निर्भ्रान्ततया प्रचलिता।

पाञ्चरात्र-भागवतादिधार्मिकमतानुयायिनोऽपि ब्रह्म अनादि, अनन्तम्, निर्विकारम्, निरवद्यम्, अन्तर्यामी, सर्वव्यापकम्, आनन्दस्वरूपं च वर्तते इति मन्यन्ते, तन्मते तच्च ब्रह्म प्राकृतगुणगणातीतम्, निराकारम्, देशकालाद्यनवच्छिन्नम्, पूर्णम्, सर्वव्यापकमस्ति। किन्तु अप्राकृतगुण-गणैर्ज्ञानशक्त्यैश्वर्यबलवीर्य-तेज आदिभिः समन्वितं परब्रह्मैव भगवच्छब्दवाच्यं भवति। तत्र ज्ञानं-सर्वदा सर्वविषयप्रकाशनम्, स्वप्रकाशं नित्यञ्च। शक्तिर्जगत उपादानकारणम्, अघटितघटनासामर्थ्यञ्च। ऐश्वर्य-जगतः सृष्टौ सर्वतोभावेन पूर्णस्वातन्त्र्यम्, समस्तवस्तुनियमनसामर्थ्यञ्च। बलं जगतो निर्माणे श्रमाभावः, समस्तवस्तुधारण-सामर्थ्यञ्च। वीर्यं-जगत उपादान कारणत्वेऽपि विकारराहित्यम्। तेजः-पराभि-

---

१. एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥-क० उ० १।२।१७।

२. बहुभक्तिवादीनि ब्राह्मणानि भवन्तीति॥ तत्राह दुर्गाचार्यः भक्तिर्नाम गुणकल्पना। तेन केनचिद् गुणेन ब्राह्मणं सर्वं सर्वथा वर्णयति। तत्र तत्त्वमन्वेष्यम्। निरुक्ते ७।२४

भवनसामर्थ्यम्, सहायकस्यात्यन्ताभावेऽपि जगतः सृष्टौ पूर्णसक्षमत्वम्। एवं च सर्वद्वन्द्वविनिर्मुक्तम्, सर्वोपाधिविवर्जितम्, सर्वकारणानां कारणम्, षाड्गुण्यपूर्णं परब्रह्मनिर्गुणं सगुणञ्च विद्यते। प्राकृतगुणगणैः रहितत्वेन ब्रह्म निर्गुणमिति, अप्राकृतानन्तगुणसहितत्वेन सगुणमिति च कथ्यते।

वैष्णवाचार्याणां मते परमपुरुषस्य ब्रह्म—परमात्मा भगवानिति रूपत्रयमस्ति[1]। तत्र परमतत्त्वस्य विशुद्धं ज्ञानमयं रूपं ब्रह्म इत्यभिधीयते। तत्र ज्ञातृज्ञेययोर्भेदो न भवति। योगिभिरुपास्यः परमात्मा इति। तत्र ज्ञातृज्ञेययोर्भेदो भवति। तदेव परमतत्त्वमप्राकृतगुणगणयुक्तं सद् भगवानिति कथ्यते। प्रेमिभक्तजनैर्ब्रह्मणः परमानन्दरसात्मकमेव रूपमुपास्यते। मध्यकालिकधर्मसाधनायां ब्रह्मण ऐश्वर्यवत्त्वे ब्रह्मत्त्वे च माधुर्यस्य (भक्तिरसस्य) सर्वथा नवीनाऽवतारणा बभूव। अत एव अनादि, अनन्तम्, अखण्डम्, अजन्म, अभेद्यम्, अच्छेद्यञ्च भक्त्या (प्रेमभावनया) वशीभूतं सद् गोपबालानां समक्षं नृत्यति[2]। अत एव शास्त्रे प्रतिपादितं यत् यः परमात्मानं ज्ञानमयं जानाति स तमेकांशत्वेन जानाति, किन्तु यस्तं प्रेममयं वेत्ति स एव तं वस्तुतः सर्वांशेन वेत्ति। स एव साधको महता संरम्भेण समुद्घोषयति-प्रेमा एव परमपुरुषार्थो न तु मोक्षः[3]। अतो भक्तिसाधकैर्मोक्षादपि परतरा परमश्रेष्ठा परमप्रेमरूपा भक्तिरेवाभिलष्यते।

लोककल्याणकारी भक्तजनमनोरञ्जकश्च परमात्मा पर-व्यूह-विभवान्तर्याम्यर्चा-[4]

---

१. विदन्ति तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥—भागवते १।२।११।

२. ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियम्,
ज्योतिः किंचन योगिनो यदि परे पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरम्,
कालिन्दीपुलिनेषु यत् किमपि तन्नीलं महो धावति॥
—श्रीमधुसूदनस्वामिकृत-श्रीमद्भगवद्गीतायाः १३ अध्यायस्य प्रारम्भे।

३. प्रेमा पुमर्थो महान्—जीवगोस्वामिविरचिते षट्सन्दर्भे।

४. दिव्ये साकेतलोके च दिव्यासने विराजितः।
दिव्यविग्रहसंयुक्तो दिव्याभरणभूषितः॥ ५१॥
दिव्यायुधादियुक्तश्च नित्यैर्मुक्तैः सुसेवितः।
हेयप्रतिभटश्चाथ दिव्यानन्तगुणाम्बुधिः॥ ५२॥
अनन्तकरुणावत्या सीतादेव्या कटाक्षितः।
भगवान् करुणासिन्धुः रामः परतयामतः॥ ५३॥

वतारादिपञ्चस्वरूपेषु[1] आविर्भूय जनानुपकरोति । पाञ्चरात्रस्य संक्षेपतोऽयमेव मुख्यसिद्धान्तोऽस्ति । अवैदिकं मत्वा शङ्कराचार्यस्तं खण्डितवान्, किन्तु प्रसिद्धदार्शनिकश्रीरामानुजाचार्यः श्रीरामानन्दाचार्यश्च तं वेदानुकूलं समुद्घोष्य तत्समर्थने ब्रह्मसूत्रस्य श्रीभाष्यमानन्दभाष्यं च प्रणीतवन्तौ एवं ताभ्यां तदनुयायिभिश्च सुदृढो विशिष्टाद्वैतसिद्धान्तः स्थापितः प्रचारितश्च । विशिष्टाद्वैतस्याधारेणैव पश्चाद् बहवो दार्शनिकसिद्धान्ताः प्रचलिताः । भक्तिसाधनायाश्च बहवः सम्प्रदायाः स्थापिताः, येषु भक्तिरसविषयस्य भगवतो विभवावताराणां लीलायाः कीर्त्तनम्, आराधनाया भक्तिरसोपासानायाश्च विविधरूपाणां सूक्ष्मं विशदं च व्याख्यानं कृतमस्ति । अत एव

---

एष नानावताराणां निधानं बीजमव्ययः ।
देशादितोऽपरिच्छिन्नः शरणागतवत्सलः ॥ ५४ ॥
अनेनैव जगत्स्रष्टुमुपास्त्यर्थं तथैव च ।
वासुदेवादिरूपेण चतुर्धा स्थीयते पुनः ॥ ५५ ॥
वासुदेवादयस्ते च चतुर्व्यूहतया मताः ।
हरे र्मत्स्यादिरूपेणाविर्भावो विभवो मतः ॥ ५६ ॥
मुख्यगौणविभेदेन स द्विधा परिकीर्तितः ।
साक्षादेवावतारः स्यान्मुख्यस्तत्रेति बुध्यताम् ॥ ५७ ॥
आवेशो गौणरूपेण स्वीकृतः शास्त्रवेत्तृभिः ।
अन्तर्यामिस्थितिर्द्वेधा कथ्यते तत्त्वकोविदैः ॥ ५८ ॥
अवस्थासु च सर्वासु सर्वेषां देहधारिणाम् ।
सहायकस्य तांस्त्यक्तुमसमर्थस्य च स्थितिः ॥ ५९ ॥
एकाऽपरा तु हृत्पद्मे ध्येयत्वार्थं तु देहिनाम् ।
सद्बन्धोर्दिव्यदेहस्य रक्षितुं तानवस्थितिः ॥ ६० ॥
आश्रिताभिमतं द्रव्यं स्वीकृत्य देहरूपतः ।
तत्राप्राकृतदेहेन विशिष्टः सन् प्रतिष्ठितः ॥ ६१ ॥
स्नानभोजनकर्मादावर्चकायत्तता गतः ।
अमोघार्चानमस्कारश्चामोघदर्शनस्तवः ॥ ६२ ॥
राघवोऽर्चावतारोऽस्ति स पूर्णः षड्गुणाश्रयः ।
स्वयं व्यक्तादिभेदेन स चतुर्धा प्रकीर्तितः ॥ ६३ ॥

—प्रमेयपरिशोधिन्याम्, पृष्ठे १५-१६

१. पर-व्यूह-विभवान्तर्याम्यर्चावतारभेदात् ॥

—विशिष्टाद्वैतदर्शने ३।२।२, श्रीभगवदाचार्यकृते ।

भक्तिरससाधनासु तस्य विशिष्टाद्वैतसिद्धान्तस्य प्रभावाणां च विवेचनमवश्यमेव कर्त्तव्यमस्ति।

सर्वेषां वैष्णवानामाराध्यदेवः श्रीविष्णुः, श्रीरामः, श्रीकृष्णो वा वर्तते। सिद्धान्ततया सर्वे वैष्णवाः त्रिष्वप्यभेदमेव स्वीकुर्वन्ति, किन्तु स्वेष्ट वषये वैशिष्ट्यमपि प्रतिपादयन्ति। श्री-ब्रह्म-रुद्र-सनकादयो वैष्णवसम्प्रदायस्याऽऽद्यप्रवर्तकाः कथ्यन्ते। तैः प्रचालिताः साधनामार्गा दार्शनिकसिद्धान्ताश्च तेषां तेषां संज्ञाभिर्जीवकल्याणायानादिकालात् प्रचलिता आसन् किन्तु कालक्रमेण मार्गावरोधे जाते सति ये आचार्याः पुनः तत्सिद्धान्तप्रचारका जातास्ते एव सम्प्रदायप्रवर्त्तकरूपेणाद्यत्वे प्रसिद्धाः। वस्तुतः परमात्मनो विष्णोः साक्षाच्छिष्याः श्रीब्रह्मरुद्रसनत्कुमारास्तेषां तेषां सम्प्रदायानां प्रतिष्ठापकाचार्या बभूवुः। श्रीरामानुजमध्वविष्णुस्वामिनिम्बाकाचार्याणां तत्तत् सम्प्रदायप्रवर्त्तकत्वकथनं त्वौपचारिकमेव। वस्तुतस्ते पूर्वप्रचलितसम्प्रदायाणामुद्धारका एव न तु प्रवर्तकाः। एतावतैव तेषां संज्ञाभिरेव सम्प्रदाया व्यवह्रियन्ते। तेष्वन्यतमः श्रीरामानुजाचार्यो विद्यते। तस्य सिद्धान्तश्च विशिष्टाद्वैत इति। सम्प्रदायेऽस्मिन्नादौ द्वादशालवारभक्तास्तदनन्तरञ्च श्रीयामुनाचार्य-श्रीरामानुजाचार्य-श्रीवेदान्तदेशिकाचार्य-श्रीरामानन्दाचार्यप्रभृतयो बहवो दार्शनिका बभूवुः। ग्रन्थाश्च तमिलप्रबन्धः, श्रीभाष्यम्, सिद्धित्रयम्, आगम-प्रामाण्यम्, आनन्दभाष्यम्, न्यायसिद्धाञ्जनमित्यादयः सन्ति।

# श्रीसम्प्रदाये भक्तिरसस्वरूपम्

## श्रीरामानुजाचार्यस्य सिद्धान्तः ( विशिष्टाद्वैतवादः )

विशिष्टं च विशिष्टं च विशिष्टे, तयोर्विशिष्टयोरद्वैतं विशिष्टाद्वैतमितीयं विशिष्टाद्वैतशब्दस्य व्युत्पत्तिः। सूक्ष्मचिदचिदात्मकशरीरविशिष्टस्य कारणस्य ब्रह्मणः स्थूलचिदचिदात्मकशरीरविशिष्टस्य कार्यस्य च ब्रह्मण ऐक्यप्रतिपादनमेव विशिष्टाद्वैतदर्शनस्य तात्पर्यमिति[1]। प्रलयावस्थायां ब्रह्म सूक्ष्मचिदचिद्विशिष्टं सृष्टिदशायाञ्च स्थूलचिदचिद्विशिष्टं भवतीति कालभेदेन ब्रह्मणो द्वे रूपे।

१. विशिष्टञ्च विशिष्टञ्च विशिष्टे इति बुध्यताम्।
तयोरद्वैतमित्येवं विशिष्टाद्वैतविग्रहः ॥ २१९ ॥
विशिष्टाद्वैतशब्दार्थः कार्यकारणब्रह्मणोः।
अभेदः कार्यता चास्य स्थूलात्म-चिद्विशिष्टता ॥ २२० ॥
कारणतापि चास्यैव सूक्ष्मात्मचिद्विशिष्टता ॥
—श्रीवैष्णवाचार्यकृत'प्रमेयपरिशोधिन्याम्' पृ० ४१-४२।

केचित् श्रीरामानुजाचार्यस्य विशिष्टाद्वैतं तु वस्तुतो शाङ्कराद्वैतविशेषमेव, यतो ह्युभयोरपि मते श्रुतिप्रामाण्यवादित्वेन निरुपाधि-निर्विकारमद्वैतात्मकमेव ब्रह्मणः स्वरूपं विद्यत इति । नैतत् समीचीनम्, यतो हि तयोर्व्याख्यानं परस्परं सर्वथा भिन्नमेव । श्रीरामानुजाचार्यस्य मते बृह्धातोर्मनिन्प्रत्यये सति चिदचिद्विशिष्टस्य ब्रह्मतत्त्वस्याभिधायको ब्रह्मशब्दः सिध्यति । एवञ्च तन्मते ब्रह्मशब्दो युगपदेव तत्त्वत्रयावेदकः । एवञ्च सः शङ्कराचार्येण प्रतिपादितमद्वैतवादं श्रुतिप्रमाणेन तर्केणानुभवेन च खण्डयित्वा विशिष्टाद्वैतवादं स्थापितवान् । तथा च रामानुजमतं शाङ्करमतात् विशेषतो न भिद्यत इति कथनं न युक्तिसहम् ।

श्रीरामानुजाचार्यमतानुसारेण परमात्मा ( ईश्वरः ), चित् ( जीवः ), अचित् ( प्रकृतिः ) इति पदार्थत्रयं नित्यं स्वरूपतोभिन्नञ्च विद्यते । तत्र परमात्मा सर्वान्तर्यामी ईश्वरः । चिद् सर्वभोक्ता जीवः । अचिच्च भोग्या प्रकृतिः । जीवस्य प्रकृत्याश्चेश्वरेण सह्यंशांशिभावसम्बन्धोऽस्ति । चिदचिद्विशिष्टः परमात्मा एकैवेत्यत्रैवाभेदश्रुतेस्तात्पर्यम् । जीवश्च द्रव्यरूपोऽपि गुणवत् परमात्मनोऽपृथक्सिद्धविशेषणम् । तत्र परमात्मा ( ब्रह्म ) नित्यमेव सगुणंविशिष्टञ्च । विशिष्टस्य तस्यैवैक्याद्द्वितीयत्वं सजातीय-विजातीयभेदशून्यत्वञ्च । चिदचिती च परस्परं भिन्ने । परमात्मनश्चिदचिद्भ्यां सह पृथक्सिद्धसम्बन्धः । ईश्वरो विशेष्यभूतः चिदचिती च विशेषणमिति प्रतिपादितं श्रीभाष्ये[1] । चिदचितोः परमेश्वरेण प्रगाढसम्बन्धो वर्तत इति सारार्थः । परमात्मा च तन्तुं प्रति लता इव जगतोऽभिन्ननिमित्तोपादानकारणम् । सा यथा स्वशरीरद्वारा स्वसङ्कल्पेन तन्तुजालं विस्तारयति तथैव परमात्मापि स्वशरीरभूतप्रकृतिद्वारा स्थूलं जगत् सृजति । जगदेतत् परमात्मनो लीलाविलास एवेति सर्वं प्रतिपादितं बादरायणेन ब्रह्मसूत्रे[2] । सृष्टिकाले स्थूलचिदचिद्विशिष्टत्वेन ब्रह्मणः कार्यावस्था, प्रलये च सूक्ष्मचिदचिद्विशिष्टत्वेन तस्य कारणावस्था भवति ।

## ब्रह्म ( परमात्मा )

विशिष्टाद्वैतमते सृष्टिं बृंहयति वर्धयतीति हेतोर्ब्रह्मेत्युच्यते[3] । तदेव सकलशास्त्राणां प्रतिपाद्यं निखिलकारणञ्च[4] । तदेव ब्रह्म शास्त्रेषु लोकेषु चेश्वर-परमेश्वर-परमात्मादिशब्दैरुच्यते । तच्च ब्रह्म सत्यम्, ज्ञानं, अनन्तम्, नियामकम्, अपहतपाप्म, सुन्दरम्, आनन्दमयम्, चिदचितोश्चाधारभूतम्, नियन्तृ, शेषि,

१. प्रतिज्ञाविरोधात्–ब्रह्मसूत्रे १।१।६ श्रीभाष्ये ।
२. लोकवत्तु लीलाकैवल्यम्–ब्रह्मसूत्रे २।१।३४ ।
३. बृंहणाद् ब्रह्म–विशिष्टाद्वैत ३।१।२ ।
४. ब्रह्मसूत्रे १।१।२

चिदचिदात्मकस्य सर्वस्य जगतश्चोपादाननिमित्तसहकारीति त्रिविधं कारणम्,[1] सर्वज्ञम्, सर्ववेदैकवेद्यम्, सर्वशक्तिमत्, सर्वकर्मफलप्रदम्, सर्वकर्म-समाराध्यं[2] स्वज्ञानस्वेतरसमस्तद्रव्यशरीरकं च विद्यते[3]। प्रकृतिर्जीवश्चेश्वरस्य सर्वदा परतन्त्रौ शेषभूतौ च स्तः। श्रीरामानुजाचार्यमते तद् ब्रह्म, पर-व्यूह-विभवान्तर्याम्यर्चावतार-रूपेण[4] पञ्चधावस्थितः सर्वदा सात्वतैरुपास्यते। एतत् सर्वं विशदरूपेण पाञ्चरात्रे प्रपञ्चितम्। तत्र परः साकेताख्ये वैकुण्ठे दिव्यविग्रहसंयुक्तः, दिव्याभरणविभूषितः, दिव्यायुधयुक्तः, दिव्यानन्तकल्याणगुणगणविशिष्टः करुणासिन्धुः श्रीरामादिरूपः श्रीवासुदेवः सततं नित्यमुक्तैरनन्तकरुणावतीभिः श्री-भू-लीलादिपत्नीभिश्च सर्वदा सेव्यते[5]। स एव नानावताराणां कारणम्, देशादिनोऽपरिच्छिन्नः शरणागतवत्सलश्च विद्यते। भक्त्या प्रपत्त्या वा प्रसन्नः स एव[6] भक्तेभ्यो मुक्तिं प्रयच्छति।

व्यूहः—वासुदेवः ( आत्मा ) सङ्कर्षणः ( जीवः ) प्रद्युम्नः ( मनः ) अनिरुद्धः ( अहंकारः ), इमे चत्वारः परमात्मनो ( ब्रह्मणः ) व्यूहरूपाः सन्ति। ते सर्वे उत्तरोत्तरं पूर्वपूर्वकारणकाः। परमात्मा वासुदेवादिरूपाणि उपासकानुग्रहार्थं जगतो रक्षणार्थं जगत्स्रष्टुमुपास्त्यर्थं च स्वीकरोति[7]।

---

१. ईश्वरः सूक्ष्मचिदचिद्विशिष्टवेषेण जगदुपादानकारणं भवति। सङ्कल्प-विशिष्टवेषेण निमित्तकारणं भवति। कालाद्यन्तर्यामिवेषेण सहकारिकारणं च। यतीन्द्रमतदीपिकायाम्—पृष्ठे ७६—८०।

२. सर्वेश्वरत्वं, व्यापकत्वे सति चेतनत्वं, सर्वशेषित्वं, सर्वकर्मसमाराध्यत्वं, सर्वफल-प्रदत्वं सर्वाधारत्वं सर्वकार्योत्पादकत्वं स्वज्ञानस्वेतरसमस्तद्रव्यशरीरकत्वं स्वतः सत्यसङ्कल्पत्वादिकं चेश्वरलक्षणम्। न्यायसिद्धाञ्जने पृष्ठे २६१ तथा यतीन्द्रमतदीपिकायाम् पृष्ठे ७८।

३. यतीन्द्रमतदीपिकायां—पृष्ठे ८३।

४. मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः।
परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥
अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।
इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः॥ न्यायसिद्धाञ्जने पृष्ठे २८८

५. वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
उभाभ्यां भूमिलीलाभ्यां सेवितः परमेश्वरः॥ विश्वक्सेनसंहितायाम्

६. प्रमेयपरिशोधिन्यां सिद्धान्तनिरूपणे ४७—५४ श्लोकें, पृष्ठे १५।

७. वासुदेवादयश्च चतुर्धा व्यूहः। विशिष्टाद्वैतदर्शने ३।२४।

विभवः—मत्स्य-वराह-राम-कृष्णादयश्च परमात्मनो विभवावताराः सन्ति[1]।

अन्तर्यामी—अन्तर्यामिरूपेण परमात्मा जीवस्य सुहृत्त्वेन तद्दोषैरपरामृष्टः सन् सर्वदा हृदये तिष्ठति।

अर्चावतारः—आश्रिताभिमतं वस्तु स्वीकृत्याप्राकृत-शरीरेण स्थितो मूर्त्तिविशेषोऽर्चावतारः। तदा च स स्नानभोजनकर्मादावर्चकायत्ततां गतोऽमोघार्चानमस्कारोऽमोघदर्शनस्तवः, षड्गुणगणाश्रयो भवति[2]। स च स्वयंव्यक्त-दैव-सैद्ध-मानुषभेदाच्चतुर्विधः[3]। स च चतुर्विध-मुक्तिं प्रयच्छति मुमुक्षुभ्यः। तत्र वैकुण्ठवासः सालो-

---

१. विभवो दशधा-विशिष्टाद्वैतदर्शने ३२।१०। अत्र वैखानससंहिताया अहिर्बुध्न्यसंहितायाश्च वचनमनुसन्धेयम्, पद्मनाभादयो विभवभेदास्तत्र विशदरूपेण वर्णिताः—

पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः।
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः॥
क्रोडात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा।
देव एकार्णवशयः कूर्मः पातालधारकः॥
वराहो नरसिंहश्चाप्यमृताहरणस्तथा।
श्रीपतिर्दिव्यदेहोऽथ कान्तात्मामृतधारकः॥
राहुजित् कालनेमिघ्नः पारिजातहरो महान्।
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः॥
न्यग्रोधशायी भगवानेकशृङ्गतनुस्तथा।
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः॥
नरो नारायणश्चैव हरिः कृष्णस्तथैव च।
ज्वलत्परशुधृग्रामो रामश्चान्यो धनुर्धरः॥
वेदविद्भगवान् कल्की पातालशयनस्तथा।
प्रादुर्भावगणा मुख्या इतीमे विभवाह्वयाः॥
मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः।
रामो रामश्च कृष्णश्च बुद्धो कल्कीति ते दश॥

२. बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते।
अर्चापि लौकिकी या सा भगवद्भावितात्मनाम्॥
मन्त्रमन्त्रेश्वरन्यासात् सापि षाड्गुण्यविग्रहा॥

३. स्वयं व्यक्तश्च दैवश्च सैद्धो मानुष एव च।
देशादौ हि प्रशस्ते स वर्तमानश्चतुर्विधः॥
श्रीवैष्णवमताब्जभास्करे ५।७ तथा न्यायसिद्धाञ्जने पृष्ठे ४६०।

क्यमुक्तिः, भगवतः सामीप्यलाभः सामीप्यमुक्तिः, भगवत्सदृश रूपप्राप्तिः सारूप्यमुक्तिः, भगवत्समानभोगावाप्तिः सायुज्यमुक्तिः। सायुज्यमेव भक्तिरसस्य परमं लक्ष्यमिति।

चिद् (जीवः)—चिनुते धर्मार्थकाममोक्षानिति चिद्, अथवा चिनोति मुक्तिसाधनं भक्तिं प्रपत्तिं वेति चिदिति व्युत्पत्तिः। चिदेव शास्त्रेषु लोकेषु च जीवशब्देनात्मशब्देन चालप्यते। पारतन्त्र्यविशिष्टश्चेतनो जीव इत्युच्यते। वेदान्तदेशिकमतानुसारेण "अल्पपरिमाणत्वे सति ज्ञातृत्त्वम्, शेषत्वे सति ज्ञातृत्त्वमिति वा जीवस्य लक्षणं निरूपितम्[१]। श्रीनिवासाचार्येण तु अणुत्वे सति चेतनत्वं, स्वतः शेषत्वे सति चेतनत्वमाधेयत्वविधेयत्वपराधीनकर्तृत्व-परतन्त्रत्वादिकञ्च जीवलक्षणमिति प्रतिपादितम्[२]। विशिष्टाद्वैतमते चिद् देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणः स्वयंप्रकाशश्च जीवो वर्तते[३]। बृहदारण्यकोपनिषदनुसारेण जीवोऽणुपरिमाणकः[४]। उत्क्रान्त्यादेः श्रवणाच्चायमणुरेवेति निश्चीयते। तस्मान्नायं विभुः, श्वेताश्वेतरोपनिषदनुसारेणापि जीवोऽणुपरिमाणक[५] एव। कर्तृत्वादिकधर्मतो जीवोऽयमचेतनेभ्यो भिन्नः, एवमेवाऽऽधेयत्वाद् विधेयत्वाद् शेषत्वाच्चेशतोऽपि भिन्न एव। वस्तुतः परमात्म-जीवात्मनोः पार्थक्यमेव, यतो हि मुक्तोऽपि जीवः परमात्मवज्जगतः कर्त्ता नियन्ता च भवितुं न शक्नोति[६]। एवञ्च जीवः सततं शेषिणः परमात्मन आश्रितो वर्तते। केषाञ्चि-

१. न्यायसिद्धाञ्जने पृष्ठे २२६। 　 २. यतीन्द्रमतदीपिकायाम् पृष्ठे ६७।

३. तत्र देहेन्द्रियमनः प्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रात्मा भिन्नः स्वतः सुखी॥ सिद्धित्रये—२ आत्मसिद्धि-प्रकरणे। तत्त्वत्रये पृष्ठे ५।

४. आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः। बृहदारण्यकोपनिषदि ४।२।२, उत्क्रान्तिगत्यागतीनाम्—ब्रह्मसूत्रे २।३।२०

ज्ञातारो ज्ञानरूपाश्च जीवाः सर्वेऽजडा मताः।
सर्वे चाणुप्रमाणास्तेऽमर्यादा विभवो न हि॥ २१॥
उत्क्रान्तिश्च गतिश्चेति जीवस्यात्रागतिस्तथा।
श्रुता श्रुतौ ततो जीवस्त्वणुरेव विभुर्न हि॥ २२॥
—रामानन्दसिद्धान्तसारे

५. बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते॥ श्वेताश्वेतरोपनिषदि ३।५।६
स्वरूपमणुमात्रं स्याज्ज्ञानानन्दैकलक्षणम्।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः॥

६. भोगमात्रसाम्यलिङ्गाच्च—ब्रह्मसूत्रे ४।४।२१ श्रीभाष्ये।

न्मते मुक्तावस्थायां ज्ञातृत्वाद् जीवब्रह्मणोऽभेद एव, किन्तु नैतत् समीचीनं सोपाधिकत्वात्। ब्रह्मजीवयोरैक्यं ज्ञातृत्वहेतुना साध्यते। तच्चानुमानं कर्तृत्वरूपोपाधिना खण्ड्यते, यतो हि ज्ञातृत्वहेतुः सोपाधिकः, उपाधिश्च जगतः कर्तृत्वरूपः। श्वेताश्वेतरोपनिषदि जीवस्य प्रकृतेरीश्वरस्य च पृथक्त्वापृथक्त्वे विषये वैशद्येन विवेचितम्[१]। "यस्यात्मा शरीरम्[२]" इत्यादिना जीवो ब्रह्मणः शरीरमेव। जीवो ब्रह्मशरीरमत एव जीवस्य शेषत्वमपि। 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति,[३] कतम आत्मा, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः[४]' इत्यादिश्रुतिवचनप्रामाण्याज्जीवः स्वयंप्रकाशरूपश्च। 'विज्ञानात्मा पुरुषः' इत्यत्र विज्ञानात्मशब्दस्वारस्याज्जीवो ज्ञानस्वरूपश्चेति सिद्ध्यति। स च जीवात्माऽहमिति प्रत्यक्त्वैकत्वविशिष्टतया स्वयंप्रकाशतया च स्फुरति। योगदशायां तु यथावस्थिताकारविशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते। उक्तं च—

'योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्यते'[५]।

स च जीवो नित्यो व्यापी स्वतःसुखी प्रतिशरीर भिन्न एव[६]। यदि जीवस्य प्रति शरीरं भिन्नत्वं न स्यात्तदा एकस्मिन् शरीरे जायमानं दुःखं सुखं वा सर्वशरीरेषु ज्ञातं भवेत्। भिन्नत्वे सत्येव यस्य जीवस्य कर्मानुसारं दुःखं सुखं वा स्यात्तेनैव तत्प्रतीतिर्नान्येनेति व्यवस्था सिद्ध्यति[७]। एवं च ते जीवा नित्या मुक्ता

---

१. ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता।
अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता त्रयं यदा विन्दते ब्रह्ममेतत्॥ श्वेताश्वतरोपनिषदि १।६

२. बृहदारण्यकोपनिषदि—३।७।३।

३. बृहदारण्यकोपनिषदि ४।३।६।  ४. बृहदारण्यकोपनिषदि ४।३।७।

५. सिद्धित्रये ४३ पृष्ठे २२२।  ६. नानात्मानो व्यवस्थातः। न्यायसूत्रे सिद्धित्रये ३।  ७. दार्शनिकानां मते जीवस्य (आत्मनः) विभिन्नस्वरूपमेवं प्रतिपादितम्, तथाहि—'ज्ञानस्य क्षणिकत्वं क्षणिकज्ञानसन्तानरूप आत्मेति बौद्धपक्षः। भूतचतुष्टयात्मकत्वाद् देहस्य देहावधिक आत्मेति चार्वाकपक्षः। गजदेहे गजपरिमाणः पिपिलिकादेहे तत्परिमाणोऽतो देहपरिमाण आत्मेति जैनपक्षः। कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव न तु पुरुषस्येति सांख्यपक्षः। ब्रह्मांशो जीव इति यादवपक्षः। सोपाधिकब्रह्मखण्डो जीव इति भास्करपक्षः। अविद्यापरिकल्पित एकजीववादपक्षः। अन्तःकरणपरिच्छिन्नानेकजीववादपक्षः' इत्यादि प्रपञ्चितं यतीन्द्रमतदीपिकायाम्। एवं च स जीवात्मा 'नानात्मानो व्यवस्थातः' इति न्यायसूत्रानुसारेण, 'जनन-मरणकरणानां' (सांख्यकारिकायां १८) इति सांख्यमतानुसारेणापि नानारूप इति सिध्यति।

बद्धाश्चेति त्रिविधा समीरिताः शास्त्रे । तत्र नित्या जीवा कर्मयोगात् संसारं कदापि न प्राप्नुवन्ति । मुक्ता निवृत्तसंसारा भवन्ति । बद्धास्तु संसारं प्राप्नुवन्ति[1] ।

अचिद् ( प्रकृतिः )—न चिनोति किमपि स्वातन्त्र्येणेति अचित् । अचिदेव प्रकृतिशब्देनाभिधीयते । विकारान् प्रकरोतीति प्रकृतिरथवा परमात्मा प्रकरोति विकारान् अस्या इति प्रकृतिः । सात्त्विकराजसतामसगुणानामाश्रया विरुद्धज्ञानकारिणी या सैव प्रकृतिर्विज्ञेया[2] । तत्र 'सत्त्वात् संजायते ज्ञानम्' इति वचनप्रामाण्यात् सत्त्वस्य ज्ञानसुखादिजनकत्वम्, रजसो रागतृष्णयोः कर्मसङ्गस्य च जनकत्वम्, तमसश्च विपरीतज्ञानानवधानालस्य-निद्रादीनां जनकत्वमिति ज्ञेयम्[3] । बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायकत्वं विपरीतज्ञानजनकत्वं चास्या एव सम्भवति । सा परमात्मनः क्रीडासाधनभूता, देशकालभेदेन सदृशासदृशविकारोत्पादिका च । सा चाक्षरशब्द-वाच्या नित्या च । सा ज्ञानविरोधित्वादविद्याशब्देन, विचित्रसृष्टिकारणत्वात्[4] 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'[5] इति श्रुति-प्रामाण्याच्च मायाशब्देन चाभिधीयते । 'सोऽकामयत, बहुस्यां प्रजायेय'[6] इति भगवत्सङ्कल्पाधीनगुणवैषम्यात् कार्योन्मुखावस्था साऽव्यक्तमित्युच्यते । सा मूलप्रकृत्यादिचतुर्विंशतितत्त्वात्मिका[7] । तथाहि—अव्यक्त-प्रकृतितः ( अचित्तः ) महान्, ततोऽहंकारः, तत एकादशेन्द्रियाणि, ततः पञ्चतन्मा-त्राणि, ततश्च पञ्चभूतानि जायन्ते ।

एवं च विशिष्टाद्वैतमतेऽचित् ( प्रकृतिः ) ज्ञानशून्यम्, विकारास्पदम्, भगवदधीनभूतञ्च तत्त्वम् । तस्याः शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्यमिति भेदत्रयं भवति । तत्र शुद्धसत्त्वं नित्यविभूतिः, तयैव मुक्तावस्थायां जीवदेहस्य निर्माणं जायते । मिश्रसत्त्वं रजोगुणेन तमोगुणेन च मिश्रितं भवति । तदेव जगत उपादानकारणं भवति । सत्त्वशून्यावस्था च प्रलयकाले भवति । ब्रह्मप्राप्तिपर्यन्तं

---

१. यतीन्द्रमतदीपिकायाम् पृष्ठे ७५ ।

२. जडा हि प्रकृतिर्ज्ञानशून्या च त्रिगुणाश्रया ।
प्रलये प्रकृतौ ज्ञेयाः समाः सत्त्वादयो गुणाः ॥ ६१—रामानन्दसिद्धान्तसारे

३. यतीन्द्रमतदीपिकायां पृष्ठे ३७ टीकायाम् ।

४. न्यायसिद्धाञ्जने पृष्ठे ३६ ।

५. श्वेताश्वेतरोपनिषदि-४।१० ।

६. तैत्तिरीयोपनिषदि २।६।४ तथा च 'तदैक्षत बहुस्यां प्रजायेय'
—छान्दोग्योपनिषदि ६।२।३

७. पूर्वावस्थोपमर्दकावस्थाभेदाच्चतुर्विंशतितत्त्वानि मूलप्रकृतिर्महानहंकार इन्द्रि-याण्येकादश पञ्चतन्मात्राणि पञ्चभूतानि चेति । न्यायसिद्धाञ्जने पृष्ठे ३७ ।

ब्रह्मविषयकजिज्ञासा नाम मुमुक्षा, मोक्षप्राप्त्यर्थं शास्त्रेषु कर्मयोगः, ज्ञानयोगः, भक्तिश्चेति त्रयं प्रतिपादितम्। तेषु जीवानां कल्याणाय मोक्षार्थं वा भक्तियोग एव परमसरलसोपानम्। तेनैव साधको भगवन्तं जानाति लभते[1] च। स एव भक्तियोगः भक्तिरसस्याधारशीला विद्यते।

## विशिष्टाद्वैतमते भक्तेः स्वरूपम्

मनुष्याणां कल्याणचिकीर्षया भागवते भगवता ज्ञानं कर्म भक्तिश्चेति साधनत्रयं प्रतिपादितम्[2]। तत्र ज्ञानपदेन जगदादिकारणभूतस्य ब्रह्मणः शास्त्रसम्मतं ज्ञानं विवक्षितम्। कर्मपदेन श्रौतं स्मार्तं तान्त्रिकं समस्ताऽऽधुनिकप्रवृत्तिपरिपोषितं निखिलभौतिकचमत्कारयुक्तसाधनजन्यं कर्म च विवक्षितं वर्तते। भक्तिपदेन च विविधवेषा परमेश्वरविषयिण्यो हृदयस्य समस्तद्रुतिभेदा विवक्षिताः। यथा नैरन्तर्येणाविरतगत्याऽखण्डरूपेण गङ्गाप्रवाहः समुद्रं प्रति प्रवहति तथैव या अखण्डानन्ददायके जगत्कारणेऽविपरिणामशीले परमेश्वरेऽखण्डरूपेण तैलधारावदविच्छिन्नमनोगतिः प्रवहति सैव भक्तिपदेनाभिधीयते[3]। एवं च प्रोक्तत्रिविधसाधनेषु कर्मयोगः कर्मकाण्डमूलको बाह्यविधानप्रधानो भवति। निष्कामकर्मयोगेनाहंकारो विनश्यति, विषयेभ्यो मनसो निवृत्तिश्च जायते, चित्तस्य स्थिरता च भवति। स एव परिपक्वावस्थायां ज्ञानयोगरूपतां भजते। ज्ञानयोगश्च वैराग्यप्रधानो निवृत्यात्मको दुःसाधयश्च वर्तते। स च प्रायो भावहीनो रसहीनश्च भवति। वैराग्यस्य सततमभ्यासेन सर्वदा तत्त्वचिन्तानादिना च तत्त्वज्ञानं जायते। तदनन्तरमेव कैवल्यलाभो भवति। स च ज्ञानयोगोऽसिधारावदतिदुःसाध्य एव न तु सरलोपायः[4]।

यद्यपि मतान्तरे मोक्षोपायो ज्ञानयोग एवास्ति, किन्तु विशिष्टाद्वैतमते 'भक्तिप्रपत्तिभ्यां प्रसन्न ईश्वर एव मोक्षं ददाति'[5] इति यतीन्द्रमतदीपिकानुसारेण मोक्षोपायस्तु

---

१. भक्त्या मामभिजानाति—श्रीमद्भगवद्गीतायाम्

२. योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥—भागवते ११।२०।६।

३. मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ।
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्॥ भागवते ३।२९।११-१२।

४. क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति। क०उ०१।३।१४।

५. यतीन्द्रमतदीपिकायाम् पृष्ठे ६१।

भक्तिप्रपत्ती एव स्तः। एवमेव तत्त्वमुक्ताकलापेऽपि[1] प्रतिपादितं यत् श्रुतिशतविहिता भगवत्प्रीतिरूपा भक्तिरेव मोक्षोपायो विद्यत इति। न्यायसिद्धाञ्जनेऽपि[2] प्रतिपादितं यत्—शास्त्रेषु ज्ञानवेदनध्यानादिशब्दवाच्यो भक्तिरूपज्ञानविशेष एव मोक्षस्य हेतुरिति। ब्रह्मसूत्रे—"प्रयाणान्तमोङ्कारमभिध्यायीत', 'आवृत्तिरसकृदुपदेशात्" इत्यादिश्रुतिसूत्रैर्वर्णिता मोक्षोपायभूता भक्तिर्विशिष्टाद्वैतमते भगवद्विषयिका परमप्रीतिरेव[3]। सा एव निमित्तभेदात् पराभक्त्यादिशब्दैर्व्यवह्रियते। परा भक्तिश्च 'योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्' इति रीत्या मोक्षोपायः, तत्रैव च भक्तिशब्दो मुख्यवृत्तः। लक्षणया स्तुतिनमस्कारश्रद्धादिषु चापि भक्तिशब्दः प्रयुज्यते। सा भक्तिः साधनभक्तिफलभक्तिभेदात् द्विविधा। तत्र विवेकविमोकाभ्या[4]सक्रियाकल्याणानवसादानुद्धर्षरूपसप्तसाधनजन्या साधनभक्तिः, परमात्मकृपाजन्या तु फलभक्तिः। सा भक्तिरुपनिषत्सु सदक्षरान्तरिक्षान्तरादित्य-दहर-भूममधूद्गीथ-वैश्वानर-पुरुषप्रतर्दनादिद्वात्रिंशद्विधा वर्णिता[5]। उक्त ब्रह्मविद्यारूपा भक्तिर्ब्रह्मसूत्रेषु गुणोपसंहारपादे वर्णिता वर्तते। एवमेव श्रीपाञ्चरात्रे वर्णिता चातुरात्म्योपासनापि भक्तिरेव। सा च भक्तिः श्रीरामानुजाचार्यमते परमप्रीतिपूर्वकं भगवतोऽनुचिन्तनमेव[6]। अपि च तन्मते स्मृतिसन्तानरूपा [7]ध्रुवानुस्मृतिरेवोपासनापरपर्यायो भक्तिरिति[8]। एवं च ज्ञानध्यानादिपदवाच्या फलेच्छादिरहिता श्रुतिशतविहिता प्रीतिरूपा भक्तिरेव मोक्षस्य हेतुरिति सिद्धम्।

एवं च प्रतिभाति विशिष्टाद्वैतमते भगवत्प्राप्त्यर्थं भक्तिरूपसाधनस्य परमाऽऽवश्यकता विद्यत इत्यायाति। यतो हि भक्तौ ज्ञानकर्मणी अङ्गायेते। अपि च

---

१. तत्त्वमुक्ताकलापे—जीवसरे—२६।

२. न्यायसिद्धाञ्जने—जीवपरिच्छेदे पृष्ठे २९७।

३. महनीयविषये प्रीतिर्भक्तिः—न्यायसिद्धाञ्जने—जीवपरिच्छेदे पृष्ठे ३०८।

४. तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुधर्षेभ्यः सम्भवान्निर्वचनाच्च बोधायनवृत्तौ

५. न्यायसिद्धाञ्जने—जीवपरिच्छेदे पृष्ठे ३०८ तथा यती० दी० पृष्ठे ६४।

६. स्नेहपूर्वमनुध्यानं भक्तिरुच्यते बुधैः। श्रीमद्भगवद्गीतायाः रामानुजभाष्यस्य सप्तमाध्यायस्यावतरणिकायाम्।

७. उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च ( बोधायनवृत्तौ ) आनन्दभाष्ये, ब्रह्मसूत्रे १।१।१

८. ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते। उपासनापर्यायत्वाद् भक्तिशब्दस्य ब्रह्मसूत्रे १।१।१ श्रीभाष्ये।

भक्तानां मनोरथसाधनाय दिव्यमङ्गलविग्रहयुतो भवति भगवान्। तन्मते चिदचिद्-विशिष्टब्रह्मणो बोधनानन्तरमीश्वरं प्रत्यनन्यासक्तिरेव भक्तिः, उपास्यस्य प्रीतिपूर्वकं चिन्तनमेव वा भक्तिरिति विस्तरेण प्रपञ्चितं श्रीभाष्ये[1] आनन्दभाष्ये वैष्णवमताब्ज-भास्करे च,। सर्वदोषविनिर्मुक्ता तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा विवेकादिसप्तभूमिकाजन्या भगवतोऽनन्यानुरक्तिरेव भक्तिरिति[2] सिद्धमेतावता। अन्यच्च भक्तिसाधनाकाले भक्तः सर्वतोभावेन भगवन्तं प्रति समर्पयत्यात्मानम्। सर्वस्वं विहाय भगवतः शरणागतिं करोति। अनयैव शरणागत्या मुक्तिः।

## विशिष्टाद्वैतमते प्रपत्तेः स्वरूपम्

शास्त्रेषु वर्णिता न्यासविद्यैव[3] प्रपत्तिः। भगवान्[4] मम निरपेक्षरक्षक इत्यध्यवसायविशिष्टो महाविश्वास एव न्यासविद्या, सा तु ब्रह्मविद्या साध्यभक्तिरूपा ज्ञानविशेषरूपा च। अत एव "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिमोक्षविषयकश्रुतिभिर्न कोऽपि विरोधः। यतो हि ब्रह्मविषयकभक्तिरूपज्ञान-विशेषत्वात् न्यासविद्या ( शरणागतिः ) अपि मोक्षोपायः। तस्याश्च न्यासविद्याया भक्तिविशेषरूपत्वात् 'भक्त्या त्वनन्यया शक्यः[5]' इत्यनेनापि न विरोधः। एवं च दृश्यते शास्त्रज्ञविदुषां साधकानां मते श्रीभगवत्प्राप्तौ श्रीभगवानेव साधनमपीति महाविश्वास एव साध्यभक्तिः, सैव शरणागतिरित्यभिधीयते। प्रपत्तेः स्वरूपं, नारदपाञ्चरात्र–वायुपुराण–प्रभृतिविशिष्टाद्वैतप्रतिपादकेषु ग्रन्थेषु समुपलभ्यते, तथा हि–भगवतोऽनुकूलकार्यकरणे दृढसङ्कल्पः ( भगवन्तं प्रति द्रढीयान् विश्वासः ) (२) भगवतः प्रतिकूलकार्यस्याकरणेऽपि दृढनिश्चयः, (३) सर्वशक्तिमान् परमेश्वरो मम रक्षक इति दृढविश्वासः, (४) ऐकान्त्येन भगवतो ध्यानम्, तस्य प्रशस्तगुणचिन्तनं च। (५) भगवन्तं प्रति सर्वतोभावेनाऽऽत्मनो निक्षेपणम्, (६) स्वस्य दीनताऽकिञ्चनता-क्षुद्रतानां च सर्वतोभावेन स्वीकरणपूर्वकं भगवतो महिमगानमिति षड्विधा प्रपत्तिर्नि-

---

१. ब्रह्मसूत्रे १।१।१ श्रीभाष्ये आनन्दभाष्ये च।

२. सर्वोपाधिर्विनिर्मुक्तमनेकभेदकं भक्तिः समुक्ता परमात्मसेवनम्।
अनन्यभावेन नियम्य मानसं महर्षिमुख्यैर्भगवत्परत्वतः ॥ ६५ ॥
सा तैलधारावदनष्टसंस्मृतिप्रतानरूपेशपरानुरक्तिका।
भक्तिर्विवेकादिकसप्तभूमिजा यामादिकाष्टावयवा मता बुधैः ॥ ६६ ॥
—वैष्णवमताब्जभास्करे

३. स्वीयप्रवृत्तेर्विनिवृत्तिरिष्टो न्यासः प्रपत्तिः शरणागतिर्वा ॥ वै०म०भा०१०० ॥

४. न्यायसिद्धाञ्जने–जीवपरिच्छेदे–पृष्ठे ३११।

५. भक्त्या त्वनन्यया शक्य—श्रीमद्भगवद्गीतायाम् ११।५४

रूपिता वैष्णवाचार्यैः[१]। सैव प्रपत्तिर्भगवद्शरणागतिर्वा भक्तिरससाधनस्य सर्वस्वं विद्यते। यतो हि तयैवोपास्यं प्रति उपासकस्यानन्यासक्तिश्चरमोत्कर्षं प्राप्नोति। यया भक्तो भगवतोऽनुग्रहस्याधिकारी मार्जारशिशुन्यायेन मर्कटशिशुन्यायेन च भवति। कदाचिद् भक्तं प्रति भगवतोऽहैतुकी कृपा भवति, कदाचिच्चतदर्थं भक्तोऽपि यत्नं करोति। श्रीयामुनाचार्येण स्वनिर्मिते आलवन्दारस्तोत्रे प्रपत्तिविषयकं मनोहरं वर्णनं कृतम्। प्रतिपादितं च तत्र हे नाथ! यो वा को वा भवाम्यहं किन्तु सर्वतो भावेनाहं तवैवास्मि। किं मया तुभ्यं देयमदेयं वा। मम किञ्चिदपि नास्ति, सर्वं तवैवास्ति। अतः किं तुभ्यं समर्पयामि[२]। एवमेव भगवच्छरणागतिजन्यानन्दयुतो जनः पुनस्तच्चरणौ हातुं स्वप्नेऽपि नेहते[३]।

भगवत्प्राप्तौ भक्तिरेवोपाय इति बुद्धिरेवोपायभक्तिः, अर्थात् केवलं बुद्ध्या कृता भक्तिरुपायभक्तिः। सा चोपायभक्तिः प्रारब्धातिरिक्तं सर्वं पापं नाशयति। साध्यभक्तिस्तु प्रारब्धजन्यपापमपि विनाशयतीति तयोर्भेदः[४]। यद्यप्येवं प्रपत्तिः प्रारब्धमपि निःशेषं

---

१. आनुकूल्यस्यसंकल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः॥ अ०बु०सं० उत्तरार्द्धे–३७।२८
प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता।
विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा॥ वायुपुराणे,
नारदपाञ्चरात्रस्य भारद्वाजसंहितायां, विष्वक्सेनसंहितायाञ्च

२. मम नाथ! यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव!
नियत स्वमिति प्रबुद्धधीरथवा किं नु समर्पयामि ते॥ आलवन्दारे ५२

३. निरासकस्यापि न तावदुत्सहे, महेश! हातुं तव पादपङ्कजम्।
रुषा निरस्तोऽपि शिशुः स्तनन्धयो न जातु मातुश्चरणौ जिहासति॥
–आलवन्दारस्तोत्रे २६।

४. साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः।
साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते॥
उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः।
उपायभक्तिरेतस्याः पूर्वोक्तेव गरीयसी॥
उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी॥
–न्यायसिद्धाञ्जने–पृष्ठे ३११।

विनाशयितुं शक्तास्तथापि निःशेषवैराग्याभावे रागविषयमंशं तदनुबन्धिदुःखं च नापनुदति। पूर्णवैराग्ये सति तु निःशेषमपि प्रारब्धं निवर्त्तयति। अयमेव परमैकान्तिनोदृसार्तयोर्भेदः।

## भक्तिप्रपत्त्योर्भेदः

पूर्वोक्तविवेचनस्य निष्कर्षोऽयं यत् शरणागतिरूपप्रपत्तिरपि भक्तिविशेषरूपैव। एवं च भक्तिविशेषभूतायाः प्रपत्त्याः पुनर्भक्तितः पृथगुपादानं कथं सम्भवतीतिचेदुच्यते। भक्तिप्रपत्त्योर्भेदेन तस्याः पृथगुपादानं कृतम्, तत्र भक्तिर्मरणपर्यन्तं सततमहर्निशं क्रियते किन्तु न्यासविद्यारूपशरणागतिर्जीवने एकदैव स्वीक्रियते। अपि च भक्तिस्तु वर्णाश्रमधर्मसमाश्रिता किन्तु न्यासविद्यारूपशरणागतिस्तु तन्निरपेक्षिका भवतीति तयोर्भेदः। भक्तौ विवेकादिसप्तभूमिकासम्पन्नसाधकस्य त्रैवर्णिकस्यैवाधिकारः, किन्तु प्रपत्तौ भगवन्निष्ठानां सर्वेषामधिकारो वर्तते[1]। सा च प्रपत्तिर्भक्तेः परिपक्वावस्था विद्यते। प्रपत्ति शब्दस्य रूढार्थस्तु भगवन्तं प्रति साधकस्यानन्यभावेनात्मनिवेदनमेव। भक्तिरससाधनायां प्रपत्तिर्भगवतो भक्तिप्राप्त्यर्थे प्रयुज्यते। 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज[2]' इत्यादिना प्रपत्तेः स्वरूपं महत्त्वं च वर्णितम्।

तात्पर्यमिदं यत् सर्वस्वामिनं परमात्मानं श्रीनारायणं श्रीकृष्णं श्रीरामं वा प्रति भक्तानां तैलधारावदविच्छिन्ना स्मृतिरेव भक्तिः[3], तस्याः साधनं विवेकादिसप्तसाधनं ज्ञेयम्, सैव संसारसमुद्रतरणाय तरिर्विज्ञेया साधकानां कृते। सा प्रारब्धातिरिक्तं सर्वं पापं विनाश्य साधकं मोक्षोन्मुखं भगवदुन्मुखं वा करोति। तया शुद्धान्तःकरणा भक्ता एव प्रपत्तिं प्राप्य साक्षात् वा संसारसमुद्रं तरन्ति। शास्त्रेषु

---

१. सर्वे प्रपत्तेरधिकारिणो मताः शक्ता अशक्ताः पदयोर्जगत्प्रभोः।
नापेक्ष्यते तत्र कुलं बलं न वा चापि कालो न हि शुद्धतापि वा॥
—वैष्णवमताब्जभास्करे १०१

२. श्रीमद्भगवद्गीतायाम् १८।६५।

३. भक्तेश्च ब्रह्मणः सर्वस्वामिनः शार्ङ्गधारिणः।
रामस्य तैलधारेव न विच्छिन्ना स्मृतिः स्मृताः॥ ३३
भक्तिर्भवाम्बुधेःसेतुः कर्मज्ञानाङ्गिनी मता।
तस्याश्च साधनं बोध्यं विवेकादिसप्तकम्॥ ३४
—रामानन्दसिद्धान्तसारे।

न्यासादिरूपेण वर्णिताऽऽनुकूल्यादिषड्भेदा शरणागतिरेव प्रपत्तिरुच्यते[१]। सा प्रपत्तिर्जीवने सकृदेवाङ्गीक्रियते। वर्तमानदेहावसाने सैव मुक्तिप्रदायिका। न्यासविद्याख्या प्रपत्तिस्तु प्रारब्धमपि विनाशयति, तत्र सर्वेषां वर्णानां समानरूपेणाधिकारो वर्तते। एवं च ज्ञायते भक्त्या शुद्धान्तःकरणाः साधका एव प्रपत्त्या सायुज्यमुक्तिं लभन्ते।

प्रपत्तिवादोऽयं भारतीयतत्त्वचिन्तनस्य धर्मसाधनायाश्च विशिष्टोपलब्धिर्विद्यते। अस्य प्रचारको विशिष्टाद्वैतवादस्य प्रतिष्ठापको वैष्णवदार्शनिको भगवद्पाद श्रीरामानुजचार्यो बभूव। तेनैव सर्वप्रथमं शास्त्रेषु निगूहितं प्रपत्तितत्त्वमुद्भावितम्। तेन च साधकानां महानुपकारो बभूव भविष्यति च। प्रपत्तिं विना संसारसमुद्रतरणायान्या सुलभा तरणीर्नास्ति साधकानां कृते। सा च प्रपत्तिर्निर्गुणसगुणोभयविधोपासकैः स्वस्वसाधनामार्गे कालान्तरे पूर्णरूपेण स्वीकृता, सैवोभयविधोपासनायाःप्राणरूपाः प्रमाणिताः।

निर्गुणसगुणोभयविधसाधनायां प्रपत्तिवादस्याऽऽधारभूतप्रवृत्तिद्वयम्--उपास्यं प्रति उपासकस्याऽऽनन्यता, आत्मनिवेदनासक्तिश्चोपलभ्येते। श्रीभागवतपुराणे श्रवणम्, कीर्तनम्, स्मरणम्, पादसेवनम्, अर्चनम्, वन्दनम्, दास्यम्, सख्यम्, तथा आत्मनिवेदनमिति नवविधा भक्तिः प्रतिपादिता[२]। तत्र श्रवण-कीर्तन-स्मरणरूपभक्ति-

१. प्रपत्तिर्न्यासविद्या सा रामायात्मसमर्पणम्।
आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्॥ १०५
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा।
कार्पण्यमिति विद्वद्भिर्न्यासेऽङ्गाश्चकं मतम्॥ १०६
एतद्देहावसाने हि न्यासो मुक्तिप्रदायकः।
शरणागतिवाच्योऽसौ कर्त्तव्यः सकृदेव हि॥ १०७
आर्त्तानां तु मतो न्यासः प्रारब्धस्यापि नाशकः।
विद्वद्भिः सम्मतो न्यासेऽधिकारः सकलात्मनाम्॥ १०८--रामानन्दसिद्धान्तसारे
द्रष्टव्यः--भक्तिप्रपत्तिविवेकः--श्रीदेशिकतिरुमलैतालाचार्यः, सारस्वतीसुषमापत्रिकायाम् २०१३ वै० ११ वर्षे ३-४ अङ्के प्रकाशिते,। अस्मिन्नेवाङ्के श्रीभगवदाचार्यस्य भक्तिप्रपत्तिमतभेदविचारनामको लेखः।

२. श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ भागवते ११५।२३
उदारकीर्त्तेः श्रवणं च कीर्तनं हरेः स्मृतिः पादसरोजसंश्रयः।
समर्चनं वन्दनदाससख्यकान्यात्मार्पणं सा नवधेति गीयते॥
--वैष्णवमताब्जभास्करे ६७

भिर्भक्तभगवतोः सान्निध्यं भवति, यदुपासनाया लक्ष्यमस्ति। दास्य-सख्याऽऽत्मनिवेदन-रूपभक्तिभिर्भक्तेन सहेश्वरेऽपि क्रियाशीलता जायते। तत्राऽऽत्मनिवेदनं नाम भक्तभगवतोर्भावपूर्णाऽतिसामीप्यबोधिनी दशा। यत्रोपासक उपास्यं प्रति स्वसर्वस्वं समर्पयति। तादृशावस्थायां भक्तभगवतोः किमपि व्यवधानं न भवति। एवञ्चाऽऽत्म-निवेदनं भक्तेरन्तिमा सर्वोत्तमा च प्रक्रिया विद्यते। ययाऽनायासेन सर्वे वर्णाः सर्वकाले सर्वत्र समानतयैव भगवन्तं मोक्षं वा लभन्त इति नात्र विचिकित्सालेशोऽपि।

भक्तितत्त्वप्रतिपादकानां मते भगवन्तं प्रति भक्तानां सर्वश्रेष्ठा परमानुरक्तिरेव भक्तिः[1]। सा च भक्तिः परमप्रेमरूपाऽमृतरूपा च भवति[2]। सा च भक्तिर्नारदमुनि-मतानुसारमेकादशधा (१) गुणमाहात्म्यासक्तिः (२) रूपासक्तिः, (३) पूजासक्तिः, (४) स्मरणासक्तिः, (५) दास्यासक्तिः, (६) सख्यासक्तिः, (७) कान्तासक्तिः, (८) वात्सल्यासक्तिः, (९) आत्मनिवेदनासक्तिः, (१०) तन्मयतासक्तिः, (११) परमविरहासक्तिश्चेति।[3]

प्रोक्तविवेचनानुसारेण नारदभक्तिसूत्रमतस्य भागवतमतस्य च तत्त्वतः किमपि वैलक्षण्यं न प्रतीयते। यतो हि एकमेव तत्त्वमुभयत्र नामान्तरेण प्रतिपादितम्। तथाहि—नारदभक्तिसूत्रस्य स्मरणासक्तिर्दास्यासक्तिः सख्यासक्तिश्च भागव-तस्य स्मरण-दास्य-सख्यभक्तिषु, पूजासक्तिः पादसेवनार्चनवन्दनरूपभक्तिषु, गुणमाहात्म्यासक्तिः रूपासक्तिश्च श्रवणकीर्तनयोः, आत्मनिवेदनासक्तिः तन्मयतासक्तिः कान्तासक्तिर्वात्सल्यासक्तिः परमविरहासक्तिश्च भागवतप्रतिपादिताऽऽत्मनिवेदनरूप-भक्तौ समाविश्यन्ते। एवं च भागवतनारदसूत्रयोश्चाऽऽत्मनिवेदनरूपभक्तिरेव सर्वश्रेष्ठा भक्तिर्विद्यत इत्यायाति। यतो हि तत्रैवाऽऽराध्याऽऽराधकयोश्चानन्यभावः समुत्पद्यते। यो हि भक्तिरसस्य प्राणभूत एवास्ति। तत्रैवोपासक उपास्ये लीनो भवति। तत्रैव भक्तो भगवतोऽनुग्रहं स्नेहं च पूर्णतो लभते। अत एवान्योन्याश्रयता समरसता च भक्तेऽनायासेन भवतः। पश्चाद् विशुद्धाऽऽत्मनिवेदनावस्थायामकृत्रिमता, विधि-निषेधं प्रति निरपेक्षता, आचरणस्य स्वच्छता च भक्तस्य जीवने स्वाभाविकरीत्यै-वानायासेन समागच्छन्ति।

## अद्वैतविशिष्टाद्वैतयोर्भेदः

यदद्वैतिभिरुपगम्यते भक्तिर्नाम मानसीक्रिया पुरुषप्रयत्नसाध्या, ज्ञानं तु वस्तुतन्त्रं पुरुषेणान्यथाकर्त्तुमशक्यमिति तदेभिर्नाभ्युपेयते, एते तु ज्ञानमपि पुरुषेण कर्त्तुमकर्त्तुम-

१. सा परानुरक्तिरीश्वरे—शाण्डिल्यभक्तिसूत्रे २।

२. सा त्वस्मिन् परमप्रेमरूपा, अमृतरूपा च॥ नारदभक्तिसूत्रे २, ३

३. नारदभक्तिसूत्रे—८२-८३

न्यथाकर्तुं च शक्यमिति वदन्ति। शुक्तिरुप्यादिज्ञानेऽपि पञ्चीकरणप्रक्रियया रजतांशविशिष्टस्यैव वस्तुनो भानात् सर्वं ज्ञानं यथार्थमिति चैतेषामभ्युपगमः।

## भक्तिसाधनायां दाम्पत्यभावस्य वैशिष्ट्यम्

दास्यवात्सल्यादिभावापेक्षया दाम्पत्यभावे भक्तजीवने स्वभावतः सरसता समुद्भवति। दास्यस्य वात्सल्यस्य वा दशायां भक्तभगवतोर्मध्ये पूर्णरूपेण तादात्म्यं न सम्भवति। सख्यभावेऽपि उच्चावचरूपभेदोऽज्ञातरूपेण लभ्यत एव, किन्तु दाम्पत्यभावे विधिनिषेधाभ्यां रहितः सन् भक्तो ऽप्रकाश्यतममपि निवेदनं निःसंकोचमभिव्यञ्जयति। तादृशदशायां भक्तस्य हृदयं स्वत एव परिस्फुरितं सत् स्नेहस्य मधुरतरतरङ्गेषु तरङ्गायते। यदा कदा भावावेगानां तीव्रत्वेन प्रेमोन्मत्तताऽपि समाविशति। नारदमुनिना प्रतिपादितं यद् तदानीं भक्तः स्वसम्पूर्णकर्मफलं भगवन्तं प्रति समर्पयन् तस्य किञ्चिन्मात्रमपि विस्मरणेन परमव्याकुलतामनुभवति[1]। अत एव दाम्पत्ये आत्मनिवेदनासक्तिभावस्य परमविरहासक्तिभावस्य च बाहुल्यं स्पष्टतयैव प्रतिभासते। यः कान्ताभावेऽपि समुपलभ्यते। कान्ताभावोपासनायां भक्तिदशावर्णने आत्मनिवेदनासक्तिः, प्रियवियोगजन्यव्याकुलतावर्णने च परमविहासक्तिश्च विशेषतो विद्यते। उपासनायास्तादृशविशिष्टदशायामुपास्यं विहाय उपासको न किमपि जानाति। न तस्य किमपि ज्ञातव्यमेवावशिष्यते, उपास्यं प्रत्यतिशयानुरक्तिमत्त्वेनोपासक उपास्यस्य क्षणिकमपि विरहं न सहते। तादृशसाधकानां कृते शास्त्राचारस्य लोकाचारस्य वा बन्धनं व्यर्थमिव भवति। तद्बन्धनं केनापि प्रकारेण भक्तं न बाधते। तादृशप्रेमभक्तियुतसाधकानां कृते व्रजाङ्गनावन्मोक्षार्थं न कस्या अपि अन्यायाः साधनाया आवश्यकता भवति[2]। तादृशभक्तानां कृते भगवद्भक्तिरेवामृतायते[3]।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं परिज्ञायते यत् साधकैर्भगवतः प्रेम्णः सान्निध्यस्य च प्राप्तये तेन सह यावान् सम्बन्धः स्थाप्यते, तेषु सम्बन्धेषु दाम्पत्यसम्बन्ध एव प्रेम्णोऽनन्यता ऽऽत्मनिवेदनासक्तिश्च चरमोत्कर्षतां प्राप्नुतः। अत एव भगवतः सान्निध्यस्य प्रीतेश्च प्रार्थिनो भक्तजना वात्सल्यादिसम्बन्धापेक्षया दाम्पत्यसम्बन्धेनैव स्वात्मपरमात्मनोस्तादात्म्यभावं सफलं कुर्वन्ति। संयोगवियोगयोर्नैकविधासु दशासु-प्रोज्ज्वलभक्तिरसस्य मार्मिकाभिव्यञ्जनां दर्शयन्ति। दाम्पत्यप्रेम्णा शुद्धाऽऽध्यात्मिकविचारः कोमलभावनारूपेण प्राकट्यमेति। यस्मात् काव्येष्वलौकिकानन्दो

---

१ नारदभक्तिसूत्रे—१९-२१।

२. अत एव तदभावाद्वल्लवीनाम्। शाण्डिल्यभक्तिसूत्रे १४।

३. मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः॥ भागवते १०।८२।४५।

दिव्यरसश्च प्रकटीभवति । दाम्पत्यप्रेम्णि विरहमिलनयोश्चावस्थयोर्मधुरः कोमलश्च भावः समुदेति । लौकिककाव्येषु तस्य भावस्य चित्रणं वासनाया उद्दीपकरूपेण प्रतीयते । किन्त्वाध्यात्मिककाव्येषु तदेव चित्रणमात्मनो मधुररसमयस्थितेरलौकिकामभिव्यक्तिं करोति । भक्तैः परमात्मनो विरहजन्यं विभिन्नं प्रेमोच्छ्वसितं मधुमयं चित्रणं दाम्पत्यप्रतीकेनैवाभिव्यज्यते । तदेव भक्तिरससाधनायाः सर्वस्वं विद्यते रसमर्मज्ञविदुषां साधकानां मते ।

अयमत्र निष्कर्षो यन्मध्यकालिकभारतीयधर्मसाधनायां विशिष्टाद्वैतमतप्रतिपादनेन भक्तिरूपराजपथस्य निर्माता श्रीरामानुजाचार्यो बभूव । यतो हि तस्य विशिष्टाद्वैतात् प्रसूतस्य भक्तिवादस्य प्रपत्तिवादस्य वा प्रभावेण सकलमध्यकालिकधर्मसाधना प्रभाविता । तस्य पश्चाद्वर्तिनो भक्तशिरोमणिगोस्वामितुलसीदासप्रभृतयः सगुणोपासकाः, कबीर-प्रभृतयो निर्गुणोपासका भक्ताः कवयश्च सर्वेऽपि विशिष्टाद्वैतवादमुपजीवन्ति । तद् वशिष्टद्वैतमनुसृत्य भारते रामोपासनाया विशेषतः प्रवर्त्तकः श्रीरामानन्दाचार्यो बभूव । तत्त्वतः श्रीरामानुजाचार्यस्यानुगामित्वेऽपि विष्णोः सर्वरूपापेक्षया श्रीरामरूपस्य सर्वाधिकं महत्त्वं प्रदाय किञ्चिद्वैलक्षण्येन श्रीरामानन्दाचार्यो विशिष्टोपासनामार्गस्य प्रवर्त्तनं श्रीवैष्णवसम्प्रदायस्य संघटनं च कृतवान् । स वैकुण्ठवासिनो विष्णोः स्वरूपं विहाय लोके मर्यादापुरुषोत्तमं श्रीराममिष्टरूपेण तथा रामनाम च मूलमन्त्ररूपेण स्वीचकार । यद्यपि रामानन्दाचार्यस्य पूर्वकालेऽपि रामस्य महिमा प्रचारित आसीत् । किन्तु रामलीलायास्तावान् विस्तारो नाभूत् पूर्वम् । वाल्मीकिरामायणे श्रीरामे नारायणत्वापेक्षया नरत्वस्यैव प्राधान्यं वर्तते । अपि च विविधरामकथाकाव्येषु रामो महापुरुषत्वेन श्रेष्ठनायकत्वेन वा प्रदर्शितः । एवं च रामतापनीयोपनिषद्-भागवतशाण्डिल्यभक्तिसूत्र-नारदभक्तिसूत्राध्यात्मरामायणप्रभृतिग्रन्थप्रतिपादितश्रीरामकृष्णादीन्नवतारान् प्रति विशेषतः श्रद्धाभक्तिप्रेमोत्पादका वैष्णवाचार्या एव सन्ति । येषु भक्तिभावस्य जनतायां विशेषतः प्रचारकास्तु श्रीरामानन्दाचार्यश्रीवल्लभाचार्यप्रभृतय-एव प्रामुख्येन गणनीयाः सन्ति ।

श्रीरामानन्दाचार्यस्य शिष्यपरम्परायां रामकथाया भक्तिभावस्य च प्रमुखप्रचारको महाकविर्गोस्वामितुलसीदासो बभूव । येन मर्यादापुरुषोत्तमश्रीरामस्य चारुचरितावली-मंहदुत्कर्षतां प्रापिता । स च श्रीरामस्यैश्वर्येण सहैव यथास्थानं रूपमाधुर्यं प्रेममाधुर्यं च निरूपितवान् किन्तु तत्र कुत्रापि अस्वाभाविकता नास्ति । कालान्तरे यदा कृष्णभक्ति-काव्यधारायां राधाकृष्णयोः रूपमाधुर्यस्य लीलामाधुर्यस्य प्रेममाधुर्यस्य क्रीडामाधुर्यस्य चातिशयितत्वेन मध्यकालिकभक्तिरससाधनायामुग्रश्रृङ्गारस्य स्रोतस्विनी महता संरम्भेण प्रवाहिता तदा तस्यां रामभक्तिकाव्यधारायामपि मर्यादा ध्वस्ता । तस्मादेव कारणाद्

रामोपासनायामपि नैकविधा रसिकसम्प्रदायस्य स्थापनाऽभूत् । अत एव रामोपासनायामपि रामस्य रामसख्युश्च, सीतायाः सीतासख्युश्च हासविलासाः, प्रेमालापाः, मिथः केलयस्तथा विविधान्तर्दशानां रमणीयरूपाणां प्रेमव्यापाराणां सुमधुरं वर्णनं दृश्यते ।

सर्वेषामपि प्राच्यपाश्चात्यतत्त्वविदुषां मते यस्मिन् काले भारते मध्यकालिकभक्तिरसधारा (प्रेमसाधना) नैरन्तर्येण प्रवहिता तस्मिन्नेव काले पाश्चात्यदेशेऽपि ईसाईधर्मे प्रचण्डभक्तिरसधारा ( प्रेमप्रवाहः ) महता संरम्भेण प्रवहिता । तत्र तदा लोकैस्तस्याः प्रवाहकः करुणा-प्रेम-दया-क्षमादीनामवतारभूत ईसामसीहः परमप्रेममयत्वेन पतितपावनत्वेन दीनदयालुत्वेनाशरणशरणत्वेन च चित्रितः । एवमेव वैष्णवसाधनायां श्रीरामकृष्णयोश्च महत्त्वं प्रतिपादितम् । अत एव भगवद्भक्तो धर्मार्थकाममोक्षमपि न च याचते । अपि तु सः साधकः केवलं भगवतोऽविचलभक्तिमखिलप्रीतिमेवाहर्निशं समीहते । तात्पर्यमिदं यत् साधकस्य चरमसृष्टिरेवेयं यत् यत्र गत्वा निर्गुणमपि ब्रह्म भक्तस्य स्वाभावानुसारेण रूपमङ्गीकरोति । नेति नेतीत्यादि श्रुत्या यस्यानुसन्धाने वेदपुराणधर्मदर्शनानि चासमर्थतां प्रकटयन्ति, तदेव निर्गुणं निष्क्रियं ब्रह्म भक्त्यधीनं भक्तेन सह लीलां करोति[1] । अत एवं ज्ञानमार्गी साधकोऽपि केवलं ज्ञानं निःसारमेव मत्वा त्यक्तवान्, भक्तिं च गृहीतवान् । एवं च माध्यकालिकभक्तानां कवीनां च वाणीषु विशिष्टाद्वैतस्य भक्तिरसस्य च व्यापकप्रभावः परिलक्ष्यते । यतो हि तस्मादेव प्रसूतो भक्तिवादः प्रपत्तिवादश्च कालान्तरे मधुरोपासनायां ( कान्ताभावोपासनायाम् ) परिपल्लवितः सन् भक्तिरससाधनारूपेण परिणतो बभूव ।

## श्रीरामानन्दाचार्यस्य सिद्धान्तः

श्रीरामानन्दसम्प्रदायस्य संस्थापकः श्रीरामानन्दाचार्य आसीत् । यद्यपि रामानुजसम्प्रदायस्य मुनिर्यामुनाचार्य इवात्रापि श्रीराघवानन्दो मूलसम्प्रदायप्रेरणाप्रदो विद्यते । श्रीरामानन्दाचार्यस्यापि सिद्धान्तो श्रीरामानुजाचार्यसिद्धान्तवत् विशिष्टाद्वैतमिति । तस्यापि सम्प्रदायः श्रीसम्प्रदाय एव कथ्यते । एवं च यद्यपि श्रीरामानुजाचार्यस्यैव विशिष्टाद्वैतमतमनेन स्वीकृतम् , किन्तूपास्यस्वरूपविषये तयोर्भेदोऽपि दृश्यते ।

उपासनाविषये यथा-श्रीरामानुजाचार्यस्येष्टदेवौ श्रीलक्ष्मीनारायणौ स्तस्तथा श्रीरामानन्दाचार्यस्य श्रीसीतारामौ स्तः । यद्यपि रामानुजसम्प्रदायेऽपि श्रीरामोपासना विहिता[2] तथापि तत्र श्रीरामः श्रीविष्णोरवतारत्वेनैवोपास्यते किन्तु श्रीरामानन्दाचार्यमते

---

१. श्रीमद्भगवद्गीतायाः १२ अध्यायस्य प्रारम्भे श्रीमधुसूदनस्वामिकृतटीकायाम् ।

२. कल्याणपत्रिकाया वेदान्ताङ्के श्रीगोपीनाथकविराजमहोदयस्य लेखः

परं तत्त्वं रामाख्यमेव[1]। श्रीरामानुजसम्प्रदाये कुलशेखरादय आलवारभक्तास्तु श्रीरामोपासका एवाऽऽसन्। एवं च रामोपासना पूर्वत एव श्रीसम्प्रदाये आसीत् किन्तु प्रधानतया रामोपासना रामानन्दाचार्यात् प्रचलिता इति सम्प्रदायिका मन्यन्ते। सम्प्रदायेऽस्मिन् रामोपासनाविषये "राँ रामायनमः" इति षडक्षरात्मको राममन्त्रः[2], स च मन्त्रराज इति कथ्यते। "श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्राय नमः", इति पञ्चविंशत्यक्षरात्मको युगलमन्त्रः[3], "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यः ददाम्येतत् व्रतं मम" इति द्वात्रिंशदक्षरात्मकः शरणागतिमन्त्रश्च विद्यत इति सर्वं प्रपञ्चितं वैष्णवमताब्जभास्करे श्रीरामानन्दाचार्येण[4]। तत्र षडक्षरः श्रीराममन्त्र एव तारकाख्यो विद्यते। तन्मते श्रीराम एव सर्वोत्कृष्टो देवो विद्यते। स च सकलदिव्यगुणगणसिन्धुः, वेदान्तप्रतिपाद्यः, ब्रह्मादिशब्दवाच्यः, अशरणशरणः, चेतनानां चेतनः, स्वतन्त्रः, विश्वस्य कर्त्ता भुवनस्य गोप्ता, अनन्तकल्याणादिगुणगणविशिष्टः परमोपास्यश्च विद्यते[5]।

१. रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥ रा०ता०उ०पू० भागे ६ मन्त्रे।
ओं यो वै श्रीरामचन्द्रः स भगवान् यः सच्चिदान-
न्दाद्वैतैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः॥ रा०ता०उ०उ०भा०४७।
ब्रह्मपरात्परं रामो नित्यैर्मुक्तैर्नमस्कृतः॥ श्रीरामानन्दसिद्धान्तसारे १२१।

२ सञ्जाप्यस्तारकाख्यो मनुवर इह तैर्वह्निबीजं यदादौ,
रामो ङेप्रत्ययान्तो रसमितशुभदस्वक्षरः स्यान्नमोऽन्तः।
मन्त्रो रामद्वयाख्यः सकृदितिचरमप्रान्वितो गुह्यगुह्यो
भूताक्ष्युतसंख्यवर्णः सुकृतिभिरनिशं मोक्षकामैर्निषेव्यम्॥
—वैष्णवमताब्जभास्करे १० श्लोकः

३. श्रीरामद्वयमन्त्रमद्भूततमं वाक्यद्वयं षट्पदं,
बाणाक्षिप्रमिताक्षरं तु खलु विद्धि त्वं दशार्थान्वितम्।
युक्तं तं त्रिपदेन तत्र सुमते पूर्वं शुभस्यास्पदं,
वाक्यं पञ्चदशाक्षरं तदनुदिग्वर्णात्मकं तूत्तरम्॥ ३४॥ वै०म०भा०

४. प्रोक्ता वत्सक मन्त्ररत्नविवृत्तिः सन्मानसाभीष्टदं,
सद्वेद्यं सकृदित्यवेहि चरमं निर्णीतवाक्यार्थकम्।
रामीयं हि तदीयमन्त्रनिरतैस्तैर्बोधनीयं परम्,
द्वात्रिंशत्प्रमिताक्षरमनुपदं द्वयर्द्धं जगद्विश्रुतम्॥ वै० म० भा० ४४।

५. महापुरुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिकातिशयासंख्येयकल्याणगुणगणं भगवन्तं श्रीराममेवाह। ब्रह्मसूत्रस्य १।१।१ आनन्दभाष्ये

श्रीरामानन्दाचार्यप्रतिपादितविशिष्टाद्वैतमते वस्तुतः सीतारामयोश्चैक्यमेव सिध्यति। 'तत्त्वमसि' इति महावाक्ये तत्पदेन ब्रह्म, त्वंपदेन जीवः, असिपदेन माया बोध्यते[1]। तच्च 'तत्त्वमसि' पदं रामपदेन सीतापदेन वापि सिध्यति। 'राम' इत्यत्र रपदेन तत्पदार्थः, दीर्घाकारेण त्वंपदार्थः, मपदेन च असिपदार्थः प्रतिपादितः[2]। एवमेव 'सीता' इत्यत्र कङ्कणाकृतित्रिधालिखितपदेन चित्रकाव्यं भवेत्। एवं च 'तासी' इत्यत्र तकारेण तत्पदम्, दीर्घाकारेण त्वं पदम्, सीपदेन असिपदं बोध्यते[3]। एवं च सूक्ष्मेक्षिकया परिज्ञायते श्रीरामोपासना ( भक्तिः ) भक्तिरसश्च वैदिक एव। जानकीमन्त्रबीजार्थानुसारेणापि तयोस्तादात्म्यं परिज्ञायते साम्प्रदायिकैः[4]।

श्रीरामानन्दसम्प्रदायानुसारं श्रीरामविशिष्टद्वैतस्य प्रचारप्रसारयोर्महत्त्वपूर्णं स्थानं विद्यते श्रीरामानन्दाचार्यस्य। तेन वेदान्तस्य प्रस्थानत्रये श्रीरामपरकं विशिष्टाद्वैतं भाष्यं व्यरचि। केचन एवं मन्यते यदुपासनाविषये निर्गुणोपासनायाः सगुणोपासनायाश्च समर्थकोऽयमासीदिति। अत एव तस्य शिष्यः श्रीकबीरो निर्गुणोपासनायाः समर्थकस्तथा सगुणोपासनायाश्च श्रीमदनन्तानन्दाचार्यश्रीसुरसुरानन्दाचार्यप्रभृतयः समर्थकाः प्रचारकाश्चाभूवन्। कालान्तरे सगुणोपासनापरम्परायां युगस्रष्टा भविष्यद्रष्टा परमभक्तप्रवरः श्रीतुलसीदासो बभूव। श्रीरामविशिष्टद्वैतानुसारं मुक्तिसाधनं भक्तिरेव। तयैव जीवानां

---

१. ब्रह्मेति तत्पदं विद्धि त्वं पदं जीवनिर्मलः।
ईश्वरोऽसि पदं प्रोक्तं ततो माया प्रवर्तते॥ —महारामायणे ५२।५५।

२. रकारस्तत्पदो ज्ञेयस्त्वं पदाकार उच्यते।
मकारोऽसि पदं खञ्जं तत्त्वमसि सुलोचने॥ —महारामायणे ५२।५४

३. लिखितं त्रिविधं सीता कङ्कणाकृतिशोभितम्।
चित्रकाव्यं भवेत्तत्र जानन्ति कविपण्डिताः॥
तकारं तत्पदं विद्धि त्वं पदाकार उच्यते।
दीर्घता च असि प्रोक्तं तत्त्वमसि महामुने॥ —महासुन्दरीतन्त्रे

४. सकारार्थस्सीता सुछविकरुणैश्वर्यविभवा,
इकारार्थो भक्तिः स्वपतिवशयुक्त्युज्ज्वलरसा।
सुरेफार्थो रामो रमणरसधामः प्रियवशो,
मकारार्थो जीवो रसिकयुगसेवासुखरतः॥
प्रोक्ता सीता सकारेण रकाराद् राम उच्यते।
ईकारादीश्वरो विद्यान्मकाराज्जीव ईरितः॥
श्रीशब्दस्य द्विभावार्थः सूरिभिरनुमीयते॥
—अभियुक्तसारावल्याम् ५।५२ तथा जानकीवल्लभदासकृतसीतामन्त्रार्थे वि० सं० १९९९।

कल्याणं भवति[१]। तया भक्त्यैव जीवा वर्तमानशरीरत्यागानन्तरमर्चिरादिराजमार्गेण क्रमश ऊर्ध्वलोकं गत्वाऽन्ते चानुविरजं वैकुण्ठरूपसाकेतं प्रविश्य श्रीरामस्य निर्हैतुककृपास्पदीभूय तदीयदर्शनं प्राप्नुवन्ति तथा तत्र वैकुण्ठरूपसाकेते महानन्दाब्धिमग्नाश्च सन्तः सर्वदा निवसन्ति । साकेतमेवायोध्यापुर्यपराजितापुरीवैकुण्ठपुर्यादिशब्दैरप्यभिधीयते । एतद् छान्दोग्योपनिषदि,[२] अथर्ववेदे,[३] शिवसंहितायां,[४] दिव्यसूरिचरिते[५] च शब्दतः स्पष्टं सूचितम् । तत्र गत्वा जीवाः पुनः संसारे नावतरन्ति । तदेव परमं पवित्रं भगवद्धाम प्राप्य जीवा जरामरणरहिता भगवद्श्रीरामस्यसायुज्यमनुभवन्ति । केचिच्च सारूप्यम् , सालोक्यम् , सामीप्यं च मोक्षं प्राप्नुवन्ति ।

सा मुक्तिप्रदायिका भक्तिस्तु भगवद्भिन्नविषये वैतृष्ण्यपूर्वकः परमप्रमेयरूपो भगवदनुरागात्मको ज्ञानविशेष[६] एवेति प्रतिपादितं श्रीमदाचार्येण । मतेऽस्मिन् न केवलं ज्ञानेन न वा केवलं कर्मणैव लभ्यते मुक्तिः, अपितु ज्ञानकर्माङ्गकभक्त्यैव सा प्राप्यते । तथाहि 'तं विद्याकर्मणी समन्वारभेत[७]' इति श्रुत्या विद्याकर्मणोः समानमहत्त्वं ज्ञायते । विद्या 'कर्माङ्गत्वं ज्ञापयति[८]' इति श्रुत्या ब्रह्मसूत्रानन्दभाष्यतृतीयाध्यायेऽपि ज्ञानकर्मसमुच्चयादेव मुक्तिरिति[९] प्रतिपादितम् ।

---

१. परमपुरुषपरिचर्यातपःसमाधिभिराशुब्रह्माधिगमः सायुज्यफलम् ॥
ब्रह्मसूत्रे १।१।१ आनन्दभाष्ये ।

२. अपराजिताः पूर्ब्रह्मणः —छान्दोग्योपनिषदि ८।५।३ ।

३. अष्टचक्रा नवद्वारा देवानां पूरयोध्या ॥ —अथर्ववेदे १०।२।३१ ।

४. भोगस्थानं पराऽयोध्या लीलास्थानं त्वियं भुवि ।
भोगलीलावती रामो निरङ्कुशविभूतिकः ॥ —शिवसंहितायाम् २।१८
अयोध्यानन्दिनी सत्या नामा साकेत इत्यपि ।
कोशलाराजधानी च ब्रह्मपूरपराजिता ॥ —शिवसंहितायाम् २०।१५

५. तत्र तेजो मयि काचिद् नगरी शाश्वताकृतिः ।
शंसन्ति सार्थाः यामयोध्यामपराजिताम् ॥

६. सा च भक्तिः परमप्रमेयो भगवदितरवैतृष्ण्यपूर्वकपरमपुरुषानुरागरूपो ज्ञानविशेष एव । ब्रह्मसूत्रे १।१।१ आनन्दभाष्ये

७. बृहदारण्यकोपनिषदि ४।४।२ । ८. ब्रह्मसूत्रे ३।४।५ आनन्दभाष्ये ।

९. तस्मात् कर्मविशिष्टस्यैव ज्ञानस्य मोक्षसाधनत्वमिति सिद्धान्तः ।
—ब्रह्मसूत्रे ३।४।५१ आनन्दभाष्ये ।

एवञ्चेतरवैष्णवसिद्धान्तेभ्योऽस्य विशिष्टाद्वैतस्य पार्थक्यं वैशिष्ट्यं चापि सिध्यति । तथाहि श्रीरामानुजीयविशिष्टाद्वैते श्रीनारायणस्यैव प्राधान्यम् , कर्माङ्गिकं भक्त्यपरपर्याय ज्ञानमेव मोक्षसाधनं, सगुणमेव ब्रह्म इति । पुष्टिमार्गीयवल्लभमते श्रीबालकृष्ण एवोपास्यस्तथा पुष्टिभक्तिरेव मुक्तिसाधनमिति । श्रीनिम्बार्कमते श्रीगौडीयमते च श्रीकृष्ण एवोपास्यस्तथा तद्गुणानुकीर्त्तनमेव मोक्षसाधनमिति प्रतिपादितम् । तद्वैलक्षण्यं तु श्रीरामानन्दाचार्यमते श्रीराम एव परब्रह्मत्वेन निर्गुणसगुणोभयविधत्वेन स्वीक्रियते[1] । ज्ञानकर्मसमुच्चितभक्तिरेव मुक्तिसाधनम् , सा च भक्तिः श्रुतिस्मृतिवाल्मीकिरामायणादिसमाश्रिता एव । एवञ्च तन्मते भक्तेः सर्वमानवसुलभीकरणेनाहिन्दूहिन्दूनरनारीभेदजातमपहाय सर्वेषां मानवजातीनां कृते भक्तिमार्गस्य प्रचारणेन श्रीरामानन्दसिद्धान्तोऽयं सर्वमानवस्य कल्याणं करोति, अग्रे च कल्याणं करिष्यति ।

भक्तिरसानुसारेण श्रीरामानन्दसम्प्रदायेऽपि श्रीरामः शान्त दास्य सख्य वात्सल्य माधुर्याख्येन पञ्चविधेन भावेनोपास्यते साधकैः । सम्प्रदायेऽस्मिन् श्रीरामोऽपि रसिकभक्तसाधकैर्माधुर्यभावेनोपास्यते । तेषां रसिकभक्तानां संख्या न्यूना एव । तद्विषये 'रामभक्ति में रसिक सम्प्रदाय' इति हिन्दीभाषानिबद्धे ग्रन्थे साध्वनुसंहितम् ।

एवञ्चाद्यत्वे रामोपासकरामानन्दसंप्रदायस्तथा नारायणोपासकरामानुजसंप्रदाय इति भेदेन श्रीसंप्रदायो[2] द्वैविध्यं नीतो दृश्यते ।

## ब्रह्मसम्प्रदाये भक्तिरसरूपम्

### श्रीमध्वाचार्यस्य सिद्धान्तः (द्वैतवादः)

अत्र परं तत्त्वमेकमेव, द्वे वा त्रीणि वेति मत्वाऽद्वैतवाद-विशिष्टाद्वैतवाद-द्वैतवाद-द्वैताद्वैतवादादयो बहवो वैदिकदार्शनिकसिद्धान्ताः प्रचलिताः सन्ति लोके । येषां मते परं तत्त्वमेकमेवास्ति तेषां सिद्धान्तस्त्वद्वैतवादः, तत्रापि माध्यमिकानां शून्याद्वैतवादः, विज्ञानवादिनां विज्ञानाद्वैतवादः, श्रीशङ्करस्य निर्विशेषब्रह्माद्वैतवादः, शिवाद्वैतवादः, शक्त्यद्वैतवादः, वैयाकरणानां शब्दाद्वैतवादश्चेत्यादयो भेदाः सन्ति । यैश्च एकाधिक तत्त्वस्य सत्यत्वं स्वीक्रियते, ते द्वैतिनः ।

---

१. सगुणं निर्गुणं चाथ श्रुतयस्तं वदन्ति हि ।। —श्रीरामानन्दसिद्धान्तसारे १२० ।

२. द्रष्टव्यः—श्रीरामानन्दाचार्यस्य विशिष्टाद्वैत नामको लेखः, श्रीवैष्णवाचार्येण कल्याणपवित्रकाया वेदान्ताङ्के प्रकाशितः । तत्रैव म०म० गोपीनाथकविराजमहोदस्य लेखोऽपि ।
श्रीमाधवाचार्य ( विद्यामार्तण्डः ) कृत 'विशिष्टाद्वैतरामानन्दमतयोः साधर्म्य-वैधर्म्यविचारो नामको लेखः, श्रीआदित्यनाथ झा अभिनन्दनग्रन्थे संस्कृत-खण्डे पृष्ठे ६४

यद्यपि श्रीशङ्कराचार्येण प्रतिपादितमद्वैतवादं सर्वे वैष्णवाचार्याः खण्डितवन्तः तथापि ते स्वस्वसिद्धान्ते विशिष्टशुद्धादिविशेषणयुतमद्वैतशब्दं प्रयुञ्जन्ति। केवलं मध्वाचार्य एव द्वैतिनाम्ना स्पष्टरूपेण सिद्धान्तसमराङ्गणे स्थितवान्। तेनाद्वैतसिद्धान्ते महान् झंझावातः समुत्पादितः। एवं चाद्वैतवादं पूर्णतया विखण्ड्य द्वैतवादस्य प्रवर्त्तकः श्रीमध्वाचार्य एवाऽऽसीत्। अन्यदार्शनिकसिद्धान्तसदृशो द्वैतवादोऽयं वेदान्तविषयकोऽस्ति, येन भगवत्सान्निध्यं प्राप्यते येन च भक्तिरसः समास्वाद्यते। यद्यपि मतेऽस्मिन् ब्रह्मवादस्यैव प्राधान्यम्, तथापि तत्र जीवब्रह्मजगतां परस्परं पार्थक्यं स्वीक्रियते। मतमिदं विशेषतः श्रीशङ्कराचार्यप्रतिपादिताद्वैतवादस्य खण्डनरूपेण भक्तिवादस्य मण्डनरूपेण च प्रवृत्तम्। आचार्येण तेन श्रुत्या तर्केण स्वानुभूत्या च स्वमते प्रतिपादितं यज्जगदिदं मिथ्या नास्ति, न वा जीवो ब्रह्मण आभासमात्र एव, न वा केवलं ब्रह्मैव सत्यमस्तीति। एवं तेनाद्वैतवादं विखण्ड्य 'पञ्चनित्यभेदसिद्धान्तः' स्थापितः। तस्य सिद्धान्तानुसारेण— १. ईश्वरजीवयोर्भेदः, २. ईश्वरजगतो (जडयो) र्भेदः,

३. जीवजडयोर्भेदः, ४. जीवानां परस्परं भेदः, ५. जडपदार्थानामपि परस्परं भेदश्चेति पञ्चभेदा नित्याः प्रतिपादिताः।

श्रीमध्वाचार्यप्रतिपादितस्य द्वैतवादस्य भारतीयदर्शनपरम्परायां महत्वमधिकं वर्तते। स्वसिद्धान्तस्य पुष्ट्यर्थं स्पष्टतयाऽद्वैतवादसमर्थकानामौपनिषदिकवाक्यानामपि द्वैतरीत्या व्याख्यां कृतवन्तस्ते। तथाहि—काश्चन श्रुतयः। तत्रादावद्वैतमतम्, ततो द्वैतमतमिति।

१. तत्त्वमसि—तदेव त्वमसि, अर्थात् त्वं साक्षाद् ब्रह्मैवासि नत्वन्यत् किञ्चित्।
२. अयमात्मा ब्रह्म—अयमेव आत्मा साक्षाद् ब्रह्म, न तु भिन्नः कश्चिद्।
३. ब्रह्मविद् ब्रह्मैव भवति—यो ब्रह्म जानाति स ब्रह्मैव भवति।
४. एकमेवाद्वितीयं ब्रह्म—ब्रह्म सजातीयविजातीयभेदशून्यमेकमेवाद्वितीयम्।

इति पूर्वोक्ताद्वैतमतप्रतिपादकानां वाक्यानां पूर्वोक्तार्थो द्वैतवादिभिर्न स्वीक्रियते। तेषां मते पूर्वोक्तवाक्यानि द्वैतरीत्या व्याख्यायन्ते—

१. तत्त्वमसि—तस्य त्वमसि। अत्र सम्बन्धे षष्ठी, सम्बन्धश्च भेदप्रतिपादकस्तेन जीवब्रह्मणोः पार्थक्यं सिध्यति।

२. अयमात्मा ब्रह्म—अयमात्मा ( जीवात्मा ) वर्द्धनशीलो वर्तते।

३. ब्रह्मविद् ब्रह्मैव भवति—ब्रह्मविद् ब्रह्मसदृशं भवति।

४. एकमेवाद्वितीयम्—यथा नगरेऽसावेक एव राजा इति कथनेन राजा एकः, तद्भिन्नाः प्रजाः पशवः वृक्षाश्च वर्तन्त एव, एतेन राज्ञोऽद्वितीयत्वं न विहन्यते, तथैव ब्रह्मत्वेन ब्रह्म तु एकमेव तदतिरिक्तं जीवजगती अपि वर्तेते।

पदार्थः—द्वैतवादे द्रव्यम्, गुणः, कर्म, सामान्यम्, विशेषः, विशिष्टः, अंशी, शक्तिः, सादृश्यम्, अभावश्चेति दशपदार्थाः स्वीकृताः सन्ति। तत्र द्रव्याणि-परमात्मा, लक्ष्मीः, जीवः, अव्याकृतः, आकाशः, प्रकृतिः, गुणत्रयम्, अहङ्कारतत्त्वम्, बुद्धिः, मनः, इन्द्रियाणि, मात्राः, भूतानि, ब्रह्माण्डः, अविद्या, वर्णः, अन्धकारः, वासना, कालः, प्रतिबिम्बश्चेति विंशति सन्ति।

ईश्वरः—श्रीमध्वाचार्यमते श्रीहरिः सर्वप्रधानं तत्त्वं विद्यते,स एव सर्गस्थितिनाश-नियमनज्ञानावरणबन्धमोक्षादीनां विधाता दिव्यगुणगणनिधिः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः परमात्मा वर्तते। स च सगुणः सविशेषश्चास्ति। अनन्तकल्याणगुणगणपरिपूर्णः सच्चिदानन्दघनपरमात्मा सच्चिदानन्दकणजीवेभ्यो जडजगदभ्याञ्च सर्वथा विलक्षण एवास्ति। एकत्वेऽपि नानारूपधारणशीलः परमात्मा एव साक्षाद् विष्णुर्वर्तते। तस्य शक्तिश्च लक्ष्मीः, या परमात्मनोऽधीनापि तस्माद् भिन्नैव।

जीवः—सदा हरिमायामोहितः, अज्ञः, अशक्तः, अनादिकालाद्बद्धः, अणुरूपश्चेति। किन्तु परमात्मा तु सर्वज्ञः, सर्वशक्तिमान्, महान्, स्वतन्त्रश्च वर्तते। परमात्मजीवात्मनोः सेव्यसेवकतासम्बन्धो भवति।

जगत्—सत्यसङ्कल्पेन भगवता निर्मितं जगत् मिथ्या नास्ति, प्रत्युत जडं जगदपि सत्यमेवास्ति। स्वतन्त्रतास्वतन्त्ररूपतया तत्त्वद्वयं विद्यते। तत्राशेषसद्गुणसमन्वितो भगवान् विष्णुः स्वतन्त्रतत्त्वं जीवो जगच्चास्वतन्त्रं तत्त्वं वर्तते। प्रोक्ता ईश्वर-जीवजगतां परस्परं पञ्चभेदा अपि परमार्थतः सन्ति। जीवाः सर्वदशायां परमात्मनो दासा एव। बन्धमोक्षादिसर्वदशासु जीवानां नीचोच्चभावो भवत्येव। तत्र देवर्षिपितृ-मानवा मुक्त्यर्हा भवन्ति। मनुष्येष्वपि मुक्त्यर्हा उत्तमाः, नित्यसंसारिणो मध्यमाः, अधमास्तामसाश्च भवन्ति। गुणभेदेन मुक्तावस्थायामपि जीवानां तारतम्यं भवत्येव। स्वसुखानुभूतिरेव मुक्तिः। कर्मक्षयः, उत्क्रान्तिः, अर्चिरादिमार्गः, भोगश्चेति मुक्तेश्च-र्विधत्वं जायते, तत्र चरमो भोग एव श्रेयान्। सोऽपि सालोक्यम्, समीप्यम्, सारूप्यम्, सायुज्यञ्चेति रूपेण चतुर्विधः। तेष्वपि सायुज्यमेव ज्यायः। 'सायुज्यं' नाम भगवति प्रविश्य तच्छरीरेण भोगः' इति। केऽपि सायुज्ये जीवस्य भगवति सर्वथा विलयमैक्यं वा स्वीकुर्वन्ति, तन्नात्रमन्यते। दार्शनिकानां मते सायुज्यशब्दस्य द्वावर्थौ, ऐक्यं साम्यञ्च। यथा हि–वाक्यपदीये ' प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते" १।३१ इति कारिकायाः स्वोपज्ञवृत्तौ वैयाकरणकेशरिणा श्रीहरिणा ऐक्यरूपोऽर्थ उक्तः[1]।

---

१. वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा तांछिन्नबन्धनाम्॥
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते॥
—वाक्यपदीये—१।१३१ स्वोपज्ञवृत्तौ

महावैयाकरणपतञ्जलिना व्याकरणाध्ययनस्य फलं शब्दब्रह्मणा साम्यमुक्तम्, तत्र नागेशेन तत् प्रतीकमादाय सायुज्यरूपोऽर्थः कृतः। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्[१]। अत्र कैयटेन महता परेण ब्रह्मणा इत्युक्तम्, नागेशेन च ब्रह्मणा शब्दब्रह्मणा साम्यं सायुज्यमिति व्याख्यातम्। एवं च मध्वमते सायुज्यपदस्य साम्यरूपोऽर्थस्वीकरणं शस्त्रान्तरसम्मतं युक्तञ्चेति।

श्रीमध्वाचार्यमते मुक्तानामपि भोगे रामानुजमत इव न सर्वथा भेदराहित्यम्, अपितु तेषामपि परमानन्दविषये तारतम्यं भवति। तस्या मुक्तेरुत्तमं साधनं श्रीभगवतोऽमलाभक्तिरेव। 'भक्त्या त्वनन्यया शक्यः' इति गीतोक्ताऽऽनन्याभक्तिरेव मध्वस्यामलाभक्तिर्मुक्तिहेतुभूता। सर्वप्रमेयानां सिद्ध्यर्थं प्रत्यक्षानुमानशब्दाः प्रमाणम्। सर्ववेदे प्रतिपाद्यः श्रीविष्णुरेव सर्वथाऽऽराधनीयः साधकै, रित्येव मध्वसिद्धान्तः संक्षेपेणः प्रतिपादितः श्रीबलदेवविद्याभूषणेन प्रमेयरत्नावल्याम्[२]।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं श्रीमध्वाचार्यमते जीवन्मुक्तिनिर्वाणमुक्त्यपेक्षया वैकुण्ठप्राप्तिरेव श्रेष्ठा मुक्तिः। स्थूलसूक्ष्मसर्वपदार्थानां यथार्थज्ञाने, ईश्वरजीवयोश्च पार्थक्यस्य तत्त्वतो, ज्ञाने ईश्वरस्य गुणानामुपलब्धौ सत्यामीश्वरस्यानन्तसौन्दर्यस्य, अनन्तशक्तेः, अनन्तशीलस्य च बोधे समस्तजागतिकपदार्थानां यथार्थस्वरूपस्य च ज्ञाने सत्येव मुक्तिः प्राप्यते साधकैः। इत्थं चेश्वरजीवजगतां पार्थक्यं प्रतिपादयता तेन तत्साधनरूपा भक्तिः पूर्णरूपेण वर्णिता। अपि च राधाकृष्णयोर्भक्तिश्च विशेषतो वर्णयित्वा तेन वैष्णवभक्तिसाधनायां निरन्तरं प्रवहणशीला भक्तिरसस्याखण्डधारा प्रवाहिता, तथा च नामरूपोपासनाया भक्तिद्वारं समुद्घाट्य सा सर्वजनग्राह्या सर्वजनसुलभा च कारिता। श्रीशङ्कराचार्यस्य मायावादेन जनेषु नैराश्यस्य, निःसहायभावस्य च व्याप्तिरभूत्, तद्दूरीकृत्य राधाकृष्णयोर्युगलोपासनाया भक्तिरसधाराभिर्जनमनांस्यभिषिच्य संतर्प्य च तेषु जनेषु पुनर्नवीनाऽऽशा, नूतनोत्साहः, भव्यजीवनस्फूर्तिश्च समारोपिता श्रीमध्वाचार्येण।

यद्यपि सिद्धावस्थायां भक्तेः रसत्वं सम्प्रदायान्तरैरपि स्वीकृतं तथापि मुख्यतया श्रीमध्वानुयायिभिरेव विद्वद्भिर्भक्तेः काव्यशास्त्रदृष्ट्यापि रसत्वं स्थापितम्, प्रचारितं चेति निश्चितम्।

---

१. महाभाष्ये पस्पशाह्निके।

२. श्रीमन्मध्वमते हरिः परतरः सत्यं जगत् तत्त्वतो,
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्,
प्रत्यक्षादित्रयं प्रमाणमखिलाम्नायैकवेद्यो हरिः॥ प्रमेयरत्नावल्यामं पृष्ठे ३६

द्वैतविशिष्टाद्वैतयोर्भेदः—द्वैतविशिष्टाद्वैतयोर्जीवाणुत्वजगत्सत्यत्वपाञ्चरात्रागम-प्राधान्यादिकं यद्यपि समानमेव तथापि विशिष्टाद्वैतमते ब्रह्मणः स्थूलसूक्ष्मचिदचिद्विशिष्टवेषेणैक्यं तथापि स्वरूपतः सिद्ध्यन्नानात्वमपि दुरपह्नमेव। एवञ्च द्वैतश्रुतेरद्वैतश्रुतेश्चात्र सम्यग्निर्वाहः। द्वैतमते तु सर्वथा चिदचिदीश्वराणां भेदः स्वीकृतः, तत्राद्वैतताया गन्धोऽपि न स्वीक्रियते। तस्मादेव तत्र ब्रह्मणो जगदुपादानत्वं नास्ति। इत्थञ्चानयोरस्ति सिद्धान्तभेदः।

## सनकादिसम्प्रदाये भक्तिरसस्वरूपम्

### श्रीनिम्बार्काचार्यस्य सिद्धान्तः ( द्वैताद्वैतवादः, भेदाभेदवादो वा )

अद्यत्वे द्वैताद्वैतवादस्य संस्थापकत्वेन श्रीनिम्बार्काचार्यः स्मर्यते, किन्त्वतः पूर्वमपि द्वैताद्वैतवादस्य प्रचार आसीत्। श्रीभर्तृप्रपञ्चश्रीब्रह्मदत्तौ द्वैताद्वैतवादिनावभूताम्। परन्तु तेषां त्रयाणामपि भेदाभेदवादे ( द्वैताद्वैते ) सिद्धान्ते प्रक्रियायां च किञ्चिद् वैषम्यमस्ति। तत्र भर्तृप्रपञ्चमते भेदाभेदवादस्येदं मूलं यद् यथा वैदिकज्ञानकाण्डस्य प्रामाण्यं यैर्जीवब्रह्मणोरैक्यं स्वीक्रियते तथैव वैदिककर्मकाण्डस्य वैदिकोपासनाकाण्डस्यापि प्रामाण्यं स्वीकर्तव्यम्। तस्मात् कर्मकाण्डोपासनाकाण्डयोः सार्थक्याय जीवब्रह्मणोर्भेदोऽङ्गीकरणीयः। अतो जागतिकावस्थायां कर्मकाण्डोपासनाकाण्डोदितविधिसम्पादनाय जीवब्रह्मणोर्भेदः, किन्तु मुक्त्यवस्थायां तयोरभेदः। एवमेव जीवन्मुक्तिविषयेऽपि भेदः। एतेषां सविशेषज्ञानाय डा॰ श्रीमुरलीधरपाण्डेयद्वारा प्रस्तुतशोधनिबन्धो द्रष्टव्यः[1]।

श्रीनिम्बार्काचार्यस्य सिद्धान्तो द्वैताद्वैतेति भेदाभेदेति वा नाम्ना ख्यातोऽस्ति। तन्मते भगवान् वासुदेवः श्रीकृष्णः परब्रह्मास्ति, स एव परमोपास्यः साधकैः। चिदचिद्ब्रह्मेति तत्त्वत्रयमस्ति। चिदचित्तत्त्वे ब्रह्मणो भिन्ने सती अप्यभिन्ने स्तः।

चिद् ( जीवः )—चिद् जीवो, ज्ञानस्वरूपः, ज्ञानाश्रयः, ज्ञातृत्वकर्तृत्वादिधर्मविशिष्टः, परिमाणतयाऽणुः, प्रतिशरीरं भिन्नः, कर्तृत्वे स्वतन्त्रः किन्तु भोक्तृत्वे सः चेश्वराधीनो वर्तते। एवं च स ज्ञाता, कर्त्ता, भोक्ता चापि विद्यते। मतेऽस्मिन् रामानुजीयमत इव जीवो जगच्च ब्रह्मणो नाङ्गम्, अपितु ते तस्य शक्तिभूते विद्येते। एवं च जीवः सदा मोक्षार्हश्चित्पदार्थ इति कथ्यते।

अचिद् ( प्रकृतिः )—अचित्पदार्थस्तु प्राकृताप्राकृतकालभेदात् त्रिविधो विद्यते। तत्र गुणत्रयाश्रयभूतः प्राकृतः, सोऽपि नित्यं परिमाणादिविकारशीलः। एवञ्चा-

१. डा॰ मुरलीधरपाण्डेयः-श्रीमच्छङ्कराचार्यात्पूर्वमद्वैतस्वरूपमिति प्रकाशितग्रन्थस्य सप्तमाध्याये।

महत्तत्त्वमहाभूतपर्यन्तं प्रकृतिजन्यं जगदेव प्राकृतमिति। त्रिगुणप्रकृतेः कालाचात्यन्तं भिन्नमचित्तत्त्वमप्राकृतम्। तत्प्रकृतिमण्डलाद्भिन्नदेशवर्ति, नित्यविभूतिशालि परव्योम ब्रह्मलोकादिरूपम्। प्राकृताप्राकृतभिन्नं कालतत्त्वं नित्यं विभु चास्ति।

ब्रह्म ( ईश्वरः )—ब्रह्म नित्यशुद्धचैतन्यम्, अजडम्, अस्थूलम्, सर्वकारणम्, सर्वशक्तिमत्, सर्वसत्ताविशिष्टम्, ध्येयम्, ज्ञेयम्, प्राप्तव्यम्, सर्गस्थितिनाशकारकम्, सर्वव्यापकं सर्वथा पूर्णञ्चास्ति। ईश्वरे ( ब्रह्मणि ) ऽनन्तनिर्माणशक्तिनिहिता, तया सः स्वेच्छया नानारूपात्मकसंसाररूपतामाप्नोति। ब्रह्मणः सगुणं निर्गुणं चोभयं स्वरूपं विद्यते, किन्तु जीवकल्याणाय भक्त्यर्थं सगुणस्यैव वैशिष्ट्यं वर्ण्यते। तस्यैव परब्रह्म, नारायणः, भगवान्, परमात्मा, ईश्वरः, श्रीकृष्णः, पुरुषोत्तम इत्यादीनि नामानि सन्ति।

जीवो जगच्च ब्रह्मणः शक्तिविशिष्टे, क्षुद्रांशे। जीवब्रह्मणोः कार्यकारणशक्तिमदशांशिभावो वास्तविकः स्वाभाविको नित्यश्च। जीवः सदा ब्रह्मणो ध्याता, ज्ञाता, प्रापकः, सर्गादिनिर्माणशक्तिहीनोऽणुः शासितश्चास्ति। ब्रह्मणो जीवजगतोश्च यथा स्वाभावि भेदस्तथैव स्वाभाविकोऽभेदोऽपि विद्यते। कार्यं कारणाद् गुणतः कार्यतश्च भिन्नमपि स्वरूपतोऽभिन्नं भवति एवमेव कारणमपि कार्यातिरिक्तरूपात् कार्यात् भिन्नं कारणलीनकार्यस्वरूपे कार्यादभिन्नमेवास्ति, एवं ब्रह्मणो जीवजगतोः स्वाभाविको भेदोऽभेदश्च। यथा कार्यरूपो घटः कारणरूपमृत्तिकातोऽभिन्न एव, यतो ह्युभयोरेकैव सामग्री वर्तते। अपि चोभौ परस्परं भिन्नावपि, यतो ह्युभयोर्नामरूपप्रयोजनादि च परस्परं पृथग् पृथगेव। तथैव कार्यरूपजीवो जगच्च कारणरूपब्रह्मणो भिन्नाभिन्ने वर्तेते। इत्थञ्चांशांशिभावानुसारेण द्वैताद्वैतवाद एव ( भेदाभेदवादः ) सर्वाधिकमान्यः सिद्धान्तो विद्यते।

श्रीनिम्बार्काचार्यमते मुक्तेः मुख्यं साधनं तु प्रपत्तिमूलिका भक्तिरेव विद्यते। ईश्वरं प्रति सर्वात्मसमर्पणेन भगवच्छरणागत्या एव च साधकैर्भगवदनुग्रहः प्राप्यते। प्रपत्तिं विना परमात्मनः साक्षात्कारो न सम्भवति। अत एव प्रपत्त्या एव भक्तो भक्तिरसं भगवदनुग्रहं च प्राप्नोति। यद्यपि भक्तिरियमेव श्रीरामानुजाचार्यमतेऽपि स्वीकृता, किन्तु तयोः किञ्चिद् वैषम्यमस्ति। श्रीरामानुजाचार्येण औपनिषदीभक्तिः ( सततमर्चनं चिन्तनमित्यादि ) प्रचारिता, किन्तु श्रीनिम्बार्काचार्येण परमेश्वरं प्रति परानुरक्तिरूपाभक्तिरेव प्रसारिता, या भक्तिः पूर्वाचार्यैः[1] प्रतिपादिता। अपि च श्रीरामानुजाचार्येण भगवदैश्वर्यप्रधानभक्तिः स्वीकृता, यतो हि तन्मते परमेश्वरो महतो महीयान्, उदात्तः, अतुलनीयः, अनन्तदिव्यगुणाश्रयोऽस्ति। अत एव तं प्रति साधकानां श्रद्धा, भक्तिश्च भवति, किन्तु निम्बार्कमते ऐश्वर्यप्रधानभक्तेरपेक्षया माधुर्यप्रधाना भक्तिः

१. सा परानुरक्तिरीश्वरे—शाण्डिल्यभक्तिसूत्रे १।२।

स्वीकृता, या हि तन्मते भगवत ऐश्वर्येण तं प्रति आकर्षणं तु भक्तिसाधनायाः ( धर्मसाधनायाः ) प्रारम्भिकोपासनामात्रमेवास्ति । किन्तु श्रेष्ठा साधना तु परमेश्वरस्य भगवद्माधुर्यस्य च समास्वादनमेव, तस्य च माधुर्यभावेन सततं दर्शनञ्च विद्यते । एवं चेश्वरजीवयोर्माधुर्यभावस्य समुद्घाटकः श्रीनिम्बार्काचार्य एव बभूव । स एव माधुर्यभावो भक्तिरसस्य स्रोतोभूमिः । तत एव सततं प्रवहणशीलो भक्तिरसो भक्तसाधकैः समास्वाद्यते ।

युगलोपासना—श्रीनिम्बार्काचार्यमते राधाकृष्णयोर्युगलोपासना माधुर्यभावेन विधीयते । मतेऽस्मिन् श्रीकृष्ण एव परब्रह्म, राधा च तस्य मूलशक्तिरिति । अत एव रामानुजीयैश्वर्यप्रधानभक्तिस्थाने राधाकृष्णयोर्माधुर्यप्रधानभक्तिः स्वीकृता तेन । ब्रह्मणो भिन्नत्वेऽपि तस्मिन् स्वसत्ताया विलयनमेव जीवस्य मुख्यं कर्तव्यमस्ति, जीवब्रह्मणोर्मिलनं लीलापुरुषोत्तमश्रीकृष्णस्य मधुरभक्तिरसनिधिराधायाश्चोपासनयैव सिध्यति । तयोर्जीवब्रह्मणोः राधाकृष्णयोर्वा तादात्म्यभावेन भक्तिरसस्य चरमं लक्ष्यं निर्धारितं भक्तिरसज्ञैः ।

मतेऽस्मिन् युगलोपासनाया रहस्यमिदं प्रतिभाति यद् यथा भगवतः पुरुषविग्रहेषु श्रीकृष्णस्य प्राधान्यं तथैव तस्य स्त्रीविग्रहेषु श्रीराधायाः प्राधान्यं वर्तते । श्रीराधा सच्चिदानन्दस्वरूपात्मकस्य भगवत आह्लादिनीशक्तिर्विद्यते । यद्यपि सत्त्वं चित्त्वञ्च जीवब्रह्मणोः समानमेव तथापि जीवापेक्षया ब्रह्मणि सदाऽऽनन्दमयत्वमधिकमस्ति । तस्यैवाऽऽह्लादिनीशक्ती राधा विद्यते, अत एव सा सर्वासु गोपिकासु श्रेष्ठा वर्तते । तत एव जीवापेक्षया ब्रह्मणि वैशिष्ट्यं लभ्यते । अपि च भगवता सह सम्पृक्तरूपेण स्त्रीमूर्त्तेर्भक्तिपूर्वकमर्च्चनया स्त्रीमूर्तिं प्रति सर्वानर्थमूलकः कामभावस्तिरोभवति । स्त्रीपुरुषयोर्मिथुनीकृतरूपस्य भगवल्लीलायाश्च दर्शनेन साधकस्य चित्तं निर्मलत्वमेति । अत एव भावुकभक्तजनाः श्रीकृष्णस्य वामाङ्गे विराजमानां तस्यानुरूपसौन्दर्यादिदिव्यगुणगणैः समन्वितां नित्यं सखिभिः परिसेवितां भक्तजनानामभीष्टप्रदायिकां, सततप्रसन्नवदनां वृषभानुनन्दिनीं श्रीराधिकां स्नेहाधिक्येन स्मरन्ति[1] । एवं च मतेऽस्मिन् नैकस्य कृष्णस्योपासनाऽपितु सखीसहस्रपरिवृतया राधया सहितस्यैवेति ।

उपासनायां भगवन्तं प्रति स्वस्य दैन्यास्याविष्करणं प्रधानम् । तस्मादेव षड्विधशरणागतौ कार्पण्यं चरमत्त्वेन संख्यातम्, तदैव कार्पण्यरूपदैन्यमुपासकेन स्वीकार्यम् । तद्दैन्यं तु भगवत्कृपायाः सर्वोत्कृष्ट आधारः । भगवतो दीनबन्धुरिति संज्ञायाः

१. अङ्गे तु वामे वृषभानुजां मुदा, विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा, स्मरेम देवीं सकलेष्टकामदाम् ॥
—श्रीनिम्बार्काचार्यस्य वेदान्तकामधेनु—५

प्रसिद्धत्वात् दैन्यादियुक्ते साधके श्रीकृष्णस्य कृपाऽञ्जसा भवति, तया कृपया प्रेमविशेषलक्षणा भक्तिस्तत्र श्रीकृष्णे जायते[1]। श्रीनिम्बार्काचार्येणोपासनाविषयकः सिद्धान्तो वेदान्तकामधेनुनामकदशश्लोकिग्रन्थे प्रतिपादितः। तस्मिन् ग्रन्थे श्रीनिम्बार्काचार्यैः समासेन स्वसिद्धान्तः प्रतिपादितः। तत्र हि पञ्चविषयाः समान्यतया उपन्यस्ताः, तथाहि– उपास्यस्वरूपम्, उपासकस्वरूपम्, साधनभक्तिः, भक्तिरसः (प्रेमलक्षणाभक्तिः), उपास्यप्राप्तेरन्तरायः[2] (माया)। तत्र ब्रह्मशिवादिवन्दितः श्रीकृष्णः परमोपास्यदेवः[3]।

श्रीनिम्बार्काचार्यमते साधनारूपा–प्रेमलक्षणारूपाभेदेन भक्तिर्द्विविधा। तत्र साधनारूपाभक्तिः सामान्या, श्रीकृष्णकृपाप्राप्ता प्रेमलक्षणाभक्तिश्चोत्तमेति कथ्यते। 'कृपाफलं भक्तिरसस्ततः परम्' इत्यादिना सैवोत्तमा भक्तिः स्वपरिपक्वावस्थायां रसरूपतां प्राप्नोति। साधनकालेऽन्तरायरूपमायाऽस्तीति परिज्ञानपूर्वकं श्रीकृष्णकृपयैव सा साधनीया। यथा रसालफलं स्वस्वत्वमपरित्यज्यैव परिपक्वावस्थायां माधुर्यगुणोपेतं सदन्यस्मायेवास्वादं ददाति तथैव साधनभक्तिरेव परिपक्वावस्थायां रसरूपतां लभते। भक्तैः स्वस्वभावानुरूपं शान्त-दास्यसख्यवात्सल्यमाधुर्यभावेन वोपास्यते परमात्मा। मतेऽस्मिन् प्रपत्त्यादीनामङ्गानां बहुलतया वर्णनं प्राप्यते, किन्तु तेषां रसरूपत्वेन वर्णनं तु स्वल्पांश एव। पश्चाच्च श्रीहरिव्यासाचार्येण 'उपास्यरूपम्·······भक्तिस्ततः परम्' इति श्लोकस्य व्याख्यायां शान्तदास्यसख्यवात्सल्यमाधुर्याख्यः पञ्चरसाः समासेन वर्णिताः। तेषु माधुर्यस्यैव प्राधान्यं वर्तते। अत एव साम्प्रतमपि सम्प्रदायेऽस्मिन् राधाकृष्णयोर्माधुर्यभक्तिरेव सर्वश्रेष्ठरूपेण स्वीक्रियते।

श्रीनिम्बार्काचार्येण प्रचालितो मार्गो निम्बार्कसम्प्रदाय इति कथ्यते। सम्प्रदायप्रवर्त्तकस्य संज्ञाविषये जनश्रुतिरियं प्रसिद्धा यदेकदा कोऽपि भगवद्भक्तोऽतिथिरूपेण तस्य निवासस्थाने समागतः, किन्तु सः सूर्यास्तकाले भोजनं कर्त्तुं न स्वीचकार, पश्चादाचार्योऽयं निम्बवृक्षोपरि सुदर्शनेन प्रकाशं कृत्वाऽतिथिभोजनं कारयामास। अत एव निम्बोपर्यर्कप्रकाशकत्वेन निम्बार्क इति प्रसिद्धिः प्राप्ता तेनाचार्येण। अस्य सम्प्रदास्यापरसंज्ञा सनकादिसम्प्रदायश्चेति।

---

१. कृपास्य दैन्यादियुजि प्रजायते यथा भवेत् प्रेमविशेषलक्षणा।
भक्तिः———॥ दशश्लोक्याम् ६

२. उपास्यरूपं तदुपासकस्य च, कृपाफलं भक्तिरसस्ततः परम्।
विरोधिनो रूपमथैतदाप्तेर्ज्ञेया, इमेऽर्था अपि पञ्चसाधुभिः॥ दशश्लोक्याम् १०

३. नान्या गतिः कृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात्।
भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यशासनात्॥
—दशश्लोक्याम् ८।

# रुद्रसम्प्रदाये भक्तिरसस्वरूपम्

## श्रीविष्णुस्वामिनः सिद्धान्तः (शुद्धाद्वैतवादः)

शुद्धाद्वैतपदे शुद्धं च तदद्वैतं चेति कर्मधारयः, शुद्धयोरद्वैतमिति षष्ठीतत्पुरुषो वा ज्ञेयः। शुद्धपदस्यार्थो मायासम्बन्धरहितं ब्रह्म बोध्यम्। तेन मायासम्बन्धरहितस्य ब्रह्मणोऽद्वैतमिति। अथवा शुद्धयोर्मायासम्बन्धरहितयोर्जीवब्रह्मणोरद्वैतमिति। एवं च कार्यकारणरूपमपि ब्रह्म शुद्धमेव, न तु मायिकमिति बोध्यम्[1]।

शुद्धाद्वैतवादस्य प्रवर्त्तकः श्रीविष्णुस्वाम्यासीत्। यद्यप्यस्यापि प्रेरणाप्रदायकः श्रीरुद्र एव, किन्तु केनापि कारणेनावरुद्धमार्गस्य पुनर्गत्याधायकत्वेन श्रीविष्णुस्वाम्येवास्य प्रवर्त्तकः प्रचारकश्चेति कथ्यते। मतेऽस्मिन् मायारहितं कार्यरूपेण कारणरूपेणोभयविधप्रकारेण वाऽद्वैतं ब्रह्मैव शुद्धतत्त्वं वर्तते। जगत्प्रपञ्चस्तस्यैव लीलाविलासो विद्यते। सर्वं ब्रह्मैव न तु मायिकम्। अत्र राधाकृष्णयोर्भक्तिरावश्यकत्वेन स्वीक्रियते। अस्य मतस्य दार्शनिकव्याख्याताऽणुभाष्यकर्त्ता श्रीवल्लभाचार्यो बभूव। शाङ्करमायावादः सर्वथा खण्डितस्तेन। अत एव दार्शनिकदृष्ट्या मायारहितमद्वैतमेव शुद्धाद्वैतं वर्तते। श्रीवल्लभाचार्यमते ज्ञानस्यापेक्षया भक्तेः प्राधान्यम्, यतो हि तन्मतानुसारं ज्ञानेन ब्रह्मणः केवलं निरूपणं भवति, किन्तु भक्त्या तु तस्य साक्षादनुभूतिर्भवति।

श्रीवल्लभाचार्यमतानुसारं जगतः सर्वं वस्तु ब्रह्ममयमेवास्ति। तदेवैकमद्वितीयं सत्यं च वर्तते। तदेवोपनिषदि ब्रह्मत्वेन, गीतायां पुरुषोत्तमत्वेन भागवते कृष्णत्वेन परमात्मत्वेन वा कथितम्,। श्रीकृष्ण एव परब्रह्मेश्वरः परमात्मा वास्ति। स च विशेषोऽपि निर्विशेषोऽपि, निर्गुणोऽपि सगुणोऽपि, अणुरपि महानपि, गतिशीलोऽपि कूटस्थोऽपि, गम्योऽप्यगम्योऽपीति समस्तविरुद्धधर्माश्रयोऽस्ति। स सच्चिदानन्दस्वरूपो विद्यते। तस्य सर्वे गुणाः स्वभावतस्तस्माद् भिन्ना एव, न तु ते गुणाः तस्य शक्तिरूपा मायारूपा वा। यद्यपि तस्य ब्रह्मणः स्वरूपमात्रेणैव सम्पूर्णं जगदाविर्भवति, तथापि तदविकृतमेव तिष्ठति। अत एव मतमिदम् 'स्वरूपपरिणामवादः' इति कथ्यते। जगदिदं कार्यरूपं ब्रह्मैवेति।

---

१. शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः।
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः॥ २७
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्॥ २८
—शुद्धाद्वैतमार्तण्डे पृष्ठे २३, २४।

जगत्संसारयोर्भेदः—जगत उत्पत्तिर्विनाशो वा न भवति, अपि तु तस्याऽऽविर्भावतिरोभावावेव भवतः। यदेदं जगदनुभूयते तदास्याविर्भावो मन्यते, अनुभूत्यभावे तु तस्य तिरोभावोऽभ्युपगम्यते। मतेऽस्मिन् ईश्वरस्येच्छाविलासेन प्रादुर्भूतपदार्थो जगदिति, अविद्ययाऽज्ञानेन वा जीवेच्छया कल्पितो ममतादिरूपपदार्थः संसार इति कथ्यत इति जगत्संसारयोर्भेदः। संसारस्य सत्ताऽविद्यया वर्तते, ज्ञानोदये सति तस्य विनाश एवास्ति, किन्तु जगद् ब्रह्मरूपत्वेन सदा सत्यमविनाशिरूपेण तिष्ठतीति[1]। उक्तञ्च 'ईश्वरेच्छया चिदानन्दांशतिरोभावेन सदंशात् प्रादुर्भावितं यत्तज्जगत् पञ्चपर्वात्मिकाविद्यया जीवेन कल्पितोऽहंताममतात्मकः संसारः[2] इति। तत्र स्वरूपाज्ञानाध्यास देहाध्यास इन्द्रियाध्यासः प्राणाध्यासोऽन्तःकरणाध्या सइत्यविद्यायाः पञ्चपर्वाणि'। तत्र संसारस्याविद्याकल्पितत्त्वाज्ज्ञानेन नाशः। जगतस्तु ब्रह्मरूपत्वान्न नाशः। अपि च रागद्वेषादिभिः परिमितबुद्धित्वाज्जीवो जन्ममरणसुखदुःखादिकं सर्वं भुङ्क्त इति सोऽयं संसारः। ज्ञानेन योगेन भक्त्या च संसारबन्धनाज्जीवस्य मुक्तिरिति। एवं जीवस्य मुक्तौ संसारलय एव न तु जगल्लयः। एतन्मते भगवद्शक्तिस्वरूपाया मायाया विद्याऽविद्येतिरूपद्वयम्—तत्राविद्यया जीवाः संसारसमुद्रे सदा परिभ्रमन्ति, विद्यया च संसारसमुद्रमनायासेन तरन्ति ते। अविद्या सत्यज्ञानमाच्छाद्य सत्येऽसत्यं भासयति, जीवान् विषयारण्येषु निपात्य ज्ञानं हरति, येन जीवाः सुखदुःखमोहरागद्वेषादिभिः क्लिश्यन्ति। विद्यया जीवाः संसारिकदुःखबन्धनात् प्रमुच्यन्ते। अविद्या विनाशे विद्याप्राप्तौ च ज्ञानादीनि साधनानि कठिनानि सन्ति। अत एवाचार्येण जीवानां कल्याणाय सरलोपायः पुष्टिमार्ग उद्भावितः। तत्र केवलज्ञानापेक्षया केवलभक्तेर्गरीयस्त्वम्। ज्ञानयुक्तभक्तेश्च परममाहात्म्यं वर्तते। एतावता भक्तेरेव गरीयस्त्वं स्वीक्रियते।

ब्रह्म—शुद्धाद्वैतमते ब्रह्म 'विश्वतश्चक्षुरुत[3] विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।' 'स बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी[4] जनयन् देव एकः' इत्यादि श्वेताश्वतरोपनिषदादिभिः साकारं, सर्वज्ञम्, सर्वव्यापकं सर्वशक्तिमत्, सर्वकर्त्तृ,

---

१. ब्रह्म सत्यं जगद् सत्यं मिथ्या संसारः केवलम्॥ वल्लभाचार्यः

रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत्।

यथा सर्पः स्वेच्छया हि कुण्डलाकारतां गतः॥ शुद्धाद्वैतमार्तण्डे—१२

२. तत्वार्थदीपनिबन्धे—

३. श्वेताश्वतरोपनिषदि—३।३।

४. श्वेताश्वतरोपनिषदि ३।३।

सच्चिदानन्दस्वरूपं च प्रतिपादितम्[१]। 'सर्वोपेता च तद्दर्शनात्[२]' इत्यनेन सर्वधर्मविशिष्टम्, तथा 'सर्वधर्मोपपत्तेश्च[३]' इति ब्रह्मसूत्रप्रामाण्यात् तद् ब्रह्म सर्वधर्मवदेवाङ्गीक्रियते। तस्य ब्रह्मणः परब्रह्मान्तर्याम्यक्षरब्रह्मेति च रूपत्रयमस्ति। तत्र परब्रह्मेति ब्रह्मण आधिदैविकरूपम्, अन्तर्यामीति तस्य सर्वत्र आत्मसु समवस्थितं रूपमेव। समक्षरब्रह्मेति तु तस्याऽऽध्यात्मिकं स्वरूपं विद्यते। तेषु परब्रह्माख्यं रूपं सत्वादित्रयपूर्णं, किन्तु तदितरे द्वे रूपे तु ब्रह्मणस्तस्यानन्दांशमात्रभूत इति सिद्धान्तः[४]।

जीवः—'एकोऽहं बहुस्यां प्रजायेय' इति श्रुत्या स्वेच्छया ब्रह्म क्रीडार्थं[५] स्वकीयं पूर्णानन्दं तिरोधाय जीवस्वरूपं गृह्णाति। तत्राविद्यासम्बन्धोऽल्पीयानपि नास्ति। एवं[६] च बहुभवनेच्छया ब्रह्मणः सकाशादेव सूक्ष्माः परिच्छिन्नाश्चित्प्रधाना असंख्याता अंशा उच्चनीचत्वभावनावशादुच्चनीचरूपेणाग्नेः स्फुलिङ्गा इव समुत्पन्ना जीवाः। उपनिषदि प्रतिपादितं यद् यथा सुदीप्तात् पावकाद् विस्फुलिङ्गा व्युच्चरन्ति तथैव ब्रह्मणः सर्वे प्राणाः सर्वे लोकाः सर्वे जीवाश्च समुत्पद्यन्ते[७]। यथा स्वरूपतः पावकः स्फुलिङ्गश्चैक एव तथैव जीवब्रह्मणोरैक्यमेव न तु भेदः, तथापि जीवे पूर्णं ब्रह्मत्वं नास्ति, तस्यांशत

---

१. साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च।
सच्चिदानन्दस्वरूपं हि ब्रह्म तस्मादिदं जगत्॥ सप्रकाश शुद्धाद्वैतमार्तण्डे ८

२. ब्रह्मसूत्रस्य २।१।३० अणुभाष्ये।

३. ब्रह्मसूत्रस्य २।१।३७ अणुभाष्ये।

४ तत्त्वार्थदीपनिबन्धे शास्त्रार्थप्रकरणे पृष्ठे ३०-३२।

५. रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत्।
यथा सर्पः स्वेच्छया हि कुण्डलाकारतां गतः॥ —शुद्धाद्वैतमार्तण्डे १२।

६. जडजीवान्तः स्थितानां यथा क्रमश उद्गमः।
अग्नेर्यथा विस्फुलिङ्गास्तथा जीवोद्गमः स्फुटः॥ शुद्धाद्वैतमार्तण्डे ६

७. यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति॥
—मुण्डकोपनिषदि २।१।१

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति। यथा सोम्यैकेन लोहमणिना सर्वं लोहमयम्। —छान्दोग्योपनिषदि ६।१।४-५

यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा व्युच्चरन्तीति—बृ० उ० २।१।२०, मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा—गौडपादीयकारिकायाम् ३।१५।

एव ब्रह्मत्वात्। ब्रह्मसूत्रेषु जीवस्योत्क्रान्तिगत्यागतिकथनात् सोऽणुरूपो न तु शाङ्करमतवद्विभुः। 'ममैवांशो जीवलोके[1]' तथा 'नानाव्यपदेशात्[2]' इति श्रुतिस्मृतिप्रामाण्याज्जीवो ब्रह्मणोंऽश एव। एवं सिद्धान्तिते शाङ्करमत इवाभासप्रतिबिम्बादिकल्पनाया अवकाशो नास्ति। एवं चैश्वर्यवीर्ययशःश्रीज्ञानवैराग्यादिषडैश्वर्यपरिपूर्णस्य भगवतोंऽशा जीवा यदा भगवद्विमुखा भवन्ति तदा शक्तिहीनाः सन्तो मायावशे दुःखिताः संसारसागरे परिभ्रमन्ति, दुःखं चाप्नुवन्ति। तन्निवारणाय भगवद्भजनरूप एक एवोपायः। यदा भगवद्भजनेनोपयुक्ताः षड्धर्मा आनन्दश्च प्रकाशते जीवे तदा जीवः संसारक्लेशेभ्यो मुक्तो भवति परमानन्दं चोपलभते। शाङ्कराद्वैतवादेऽविद्याविनाशे 'जीवो ब्रह्मैव नापरः', इत्युच्यते किन्तु शुद्धाद्वैते मोक्षावस्थायामपि जीवः साक्षाद् ब्रह्म न भवति।

जगत्—'सदेव सोम्येदमग्र आसीद्, यदिदं किञ्च तत्सत्यमित्याचक्षते' इत्यादिश्रुतिभिर्जगतः सत्यत्वमिति। 'यत्सत् तदेवोपलभ्यते' इति युक्तिरपि जगत उपलभ्यमानत्वात् सत्यत्वबोधिका। यथा घटो मृत्तिकाप्रकारः सन्, तथैव जगदपि ब्रह्मप्रकारत्वात् सत्यम्। मतेऽस्मिन् जगदिदं शुद्धब्रह्मणोऽविकृतः परिणामो लयेऽपि पुनः शुद्धब्रह्मरूपमेवाधिगच्छति। यथोर्णनाभिः स्वमुखात् तन्तुजालं विरच्य तत्र स्वेच्छया क्रीडित्वा च पुनः स्वेच्छयैव स्वमुखे प्रवेशयति तथैव ब्रह्मांशेन जगद्रूपं चाधिगम्य तत्र विक्रीड्य तल्लयं प्राप्याविकृततया ब्रह्मस्वरूपमेव भवति। तत्त्वनिबन्धस्य सर्वनिर्णयप्रकरणे तेन प्रतिपादितं यद् सृष्टेरादिकाले परमं तत्त्वम्, तस्य च परिणामात् सत्त्वरजस्तमसाद्यष्टाविंशतितत्त्वानां प्रादुर्भावः। तेषु तत्त्वेषु पुनर्यदा तदन्तर्यामिरूपेण प्रविष्टं सत् सञ्चालयति तदा नामरूपात्मिका सृष्टिरियं प्रसरति।

तात्पर्यमिदं यद् जगदिदं ब्रह्मणो लीलाविलास एव। लीलाविलासो नाम प्रयोजनरहिता क्रिया। तद्बहिर्भूता कस्यापि कार्यस्य सृष्टिर्न भवति, न वोत्पन्नं कार्यमभीष्टप्रयोजनम्, न वा सा क्रिया कर्त्तर्यणुमात्रमपि प्रयासं सृजति, अपि तु अन्तःकरणे समाविष्टे पूर्णानन्दे सति तदुल्लासेन स्वयमेवानायासेन तत्र कार्योत्पादनरूपाक्रिया जायते। सैव लीलानामधेया। तस्या न किमपि प्रयोजनम्। एवं च लीला एव लीलायाः प्रयोजनम्, नत्वन्यत् किञ्चित्[3]। 'तदनन्यत्वमारम्भणशब्दादिभ्यः[4]' इति

---

१. श्रीमद्भगवद्गीतायाम् १५।७। २. ब्रह्मसूत्रे २।३।४३ अणुभाष्ये।

३. लीलानाम विलासेच्छा। कार्यव्यतिरेकेण कृतिमात्रम्। न तया कृत्या बहिः कार्यं जन्यते। जातमपि कार्यं नाभिप्रेतम्। नापि कर्त्तरि प्रयासं जनयति। किन्त्वन्तःकरणे पूर्णे आनन्दे तदुल्लासेन कार्यजननसदृशी क्रिया काचिदुत्पद्यते। भागवते तृतीयस्कन्धे सुबोधिन्याम्।

४. ब्रह्मसूत्रे २।१।१४ अणुभाष्ये।

ब्रह्मसूत्रप्रामाण्याज्जगतो ब्रह्मणश्चाभेदः, नात्र शाङ्करमत इव जगतो मायामयत्वम्, किन्तु ब्रह्मण आधिभौतिकं स्वरूपं जगत् तेन ब्रह्म जगच्चाभिन्ने। एवं च सच्चिदानन्दघनस्य परब्रह्मणः सिसृक्षायां जातायां सदंशेन प्रकृतिः, चिदंशेन जीवाः, आनन्दांशेनान्तर्यामिरूपं जगदिदं च जातमिति श्रीवल्लभाचार्यस्य सिद्धान्तो विद्यते।

श्रीवल्लभाचार्यमते परब्रह्म श्रीकृष्ण एव सम्पूर्णदिव्यगुणगणसम्पन्नः पुरुषोत्तमः[1]। तस्मिन् पुरुषोत्तम एवाऽऽनन्दस्य पूर्णनिष्पत्तिर्भवति। सः स्वभक्तानामनुरञ्जनाय वैकुण्ठेऽनन्तक्रीडामारचयति। तस्यैव प्राप्तिर्भक्तानां चरमं लक्ष्यम्। वैकुण्ठस्य नित्यलीलाभूमौ ( गोलोके ) प्रवेश एव जीवानामुत्तमागतिरिति। पुरुषोत्तमश्रीकृष्णस्य समस्तलीला नित्या भवन्ति। भक्तेभ्य आनन्दप्रदानं स्वीयाऽऽनन्दानुभवश्च भगवल्लीलानामेकमात्रं प्रयोजनं वर्तते। तदेवाऽऽनन्दतत्त्वं भक्तिरसस्य जीवनम्। तन्मते ज्ञानमार्गः कर्ममार्गश्च दुःसाध्यो वर्तते, किन्तु केवलं भक्तिमार्ग एव जीवकल्याणाय सर्वजनसुलभः सरलश्चास्ति। तस्य साधनार्थं तु मतेऽस्मिन् प्रेम्णः सर्वाधिकं महत्त्वमस्ति। प्रेमलक्षणाभक्तेः श्रद्धा पूज्यबुद्धिर्वा सहायिका भवति। माहात्म्यज्ञानपूर्विका सुदृढा स्नेहात्मिका भक्तिरेव मुक्तिप्रदायिकात्वेन स्वीकृता[2]। यथा ज्ञानस्य चरमसीमा ज्ञातृज्ञेययोश्चैक्यं तथैव भक्तेरपि चरमसीमा भक्तभगवतोस्तादात्म्यमेव विद्यते। मुक्तिप्रदायिनीं प्रेमलक्षणाभक्तिं जीवाः निर्हैतुकेन भगवदनुग्रहेण प्राप्नुवन्ति, तस्य सोऽनुग्रहः 'पुष्टिः पोषण' मिति कथ्यते। अत एवाचार्यस्य सिद्धान्तः 'पुष्टिमार्गः' इति कथ्यते, येन पश्चात्वर्तिनः सर्वे वैष्णवभक्ताः कवयश्च पूर्णरूपेण प्रभाविताः। पुष्टिभक्तेर्विवेचनं स्पष्टतया भागवते 'पोषणं तदनुग्रहः' इति रूपेण प्राप्यते।

## श्रीवल्लभाचार्यस्य पुष्टिमार्गः

श्रीवल्लभाचार्यमते संसारसागरतरणाय भक्तिरेव मुख्यं कारणं, सेयं भक्तिर्भगवदनुग्रहेणैव लभ्यते। 'पोषणं तदनुग्रहः' इत्यनेन पुष्टिर्निर्हैतुकी भगवत्कृपैव, तया एव जीवो संसारबन्धनात् प्रमुच्यते। भगवदनुग्रहेण मोक्षप्राप्तिर्न केवलं नवीनोद्भावना, अपि तु वैदिकवाङ्मयेऽपि तदुपलब्धिर्वर्तते। उपनिषदि प्रतिपादितं यत् निखिलरसानन्दमूर्तिः परमात्मा न बहुप्रवचनेन न वा बहुमेधया एव प्राप्यते, अपि तु सः परमात्मा स्वानुग्रहेणैव प्राप्यते। तदनुग्रहं विना स दुर्लभ एव[3]। एवमेव कठोपनिषदि 'तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः[4]' इत्यादिना भगवदनुग्रहेणैव

---

१. श्रीमद्भगवद्गीतायाम्—१५।१८।

२. माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा॥ पाञ्चरात्रे

३. 'यमेवैष वृणुते तेन लभ्यः'॥ मुण्डकोपनिषदि—३।२।३।

४. कठोपनिषदि १।२।२०।

( प्रसादेन ) मुक्तिः प्रतिपादिता । भागवते भगवदनुग्रहस्य परं महत्त्वं प्रतिपादितम् । पुष्टिमार्गाद् भिन्नो मर्यादामार्गोऽपि शास्त्रे विहितः, यस्मिन् मार्गे शास्त्रविहितज्ञानेन तदुदितकर्मानुष्ठानेन वा मुक्तिः प्राप्यते किन्तु पुष्टिमार्गस्तु भगवदनुग्रहैकसाध्यः । मर्यादामार्गे जीवः कर्माधीनः, तस्मात्तत्र ज्ञानकर्मादीनामपेक्षा, किन्तु पुष्टिमार्गे भगवदनुग्रहं विहाय न कस्याप्यपेक्षा[1] ।

प्रमेयरत्नार्णवे बालकृष्णभट्टेन पुष्टिमार्गस्य स्वरूपं प्रतिपादितं यद् यस्मिन् साधने भगवदर्थं सर्वतोभावेन मनसा वाचा कर्मणा समस्तविषयत्यागः सर्वसमर्पणं च जायते स एव पुष्टिमार्गः[2] । पुष्टिमार्गे विषयत्यागो देहादेः समर्पणं च स्वयमेव जायते, न तु तत् क्रियते । अत्र श्रीकृष्णकृपैव नियामिका, तां विना नान्यत्साधनं परन्तु भगवदनुग्रहः कदा कस्मिँश्च भवेदत्र को निर्णयस्तथास्य साधनमपि भागवते निरूपितम्–'तत्तेऽनुकम्पां सुसमीक्ष्यमाणो भुञ्जान एवात्मकृतं विपाकमिति[3]" । केवलं कृष्णसेवितानां स्रग्गन्धवस्त्रालंकारादीनां धारणं तदीयोच्छिष्टभोजनं कृत्वा तत्कृपानुसन्धानं पुष्टिमार्गे कर्त्तव्यमस्ति, भगवदनुग्रहाभिलाषी जनो भगवदनिवेदितं पदार्थं न सेवते । पुष्टिभक्तौ यद्यपि वर्णाश्रमादीनां नियमो नास्ति सर्वे तस्या अधिकारिणस्तथापि तमोरजः प्रकृतिका जनास्तां प्राप्तुमशक्ता भवन्ति । एवं च सात्त्विकभावापन्नैः साधकैरेव सा पुष्टिभक्तिः प्राप्यते[4] । एवं च यत्र समस्तसिद्धीनां कारणं भगवदनुग्रह एव, यत्र च भगवद्विरहावस्थायां तस्य लीलानुभवमात्रेण संयोगावस्थायाः सुखमनुभूयते, स एव पुष्टिमार्ग इति कथ्यत इत्यादि सर्वं प्रपञ्चितं प्रमेयरत्नार्णवे ।

अविद्याविनाशे विद्याप्राप्तौ च ज्ञानादीनि साधनानि कठिनानि भवन्ति । अत एवाचार्येण जीवानां कल्याणाय सरलोपायः पूर्वोक्तःपुष्टिमार्ग उद्भावितः, तत्र ज्ञानोपेक्षया भक्तेरेव गरीयस्त्वम् । भक्तिरपि मर्यादापुष्टिभेदेन द्विधेति प्रोक्तम् । तत्र प्रथमा भगवच्चरणारविन्दयोः भक्तिः, द्वितीया भगवन्मुखारविन्दभक्तिः । प्रथमया

---

१. अत एव पुष्टिमार्गमङ्गीकृतवतो ज्ञानादिनैरपेक्ष्यं मर्यादामार्गमङ्गीकृत-
वतस्तु तदपेक्षित्वं चेति ।　　–ब्रह्मसूत्रे ३।३।२६ अणुभाष्ये ।

२. समस्तविषयत्यागः सर्वभावेन यत्र हि ।
समर्पणं च देहादेः पुष्टिमार्गः सः कथ्यते ।। प्रमेयरत्नार्णवे ( पु॰वि॰ ) १६ ।

३. भागवते–१०।१४।८ ।

४. सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ।
भवन्ति सम्भवाद् दैवात् तेषामर्थे निरूप्यते ।।
　　–तत्त्वार्थदीपनिबन्धे ।

मर्यादया नारदादिभिः श्रवणादिद्वारा सुखसम्बन्धो लब्धः, सा तु सुलभा। द्वितीयया स्वयं श्रीकृष्णदत्तया दुर्लभया पुष्टिभक्त्या गोपिकाभिर्भगवदधरामृतसेवनं सम्पादितम्। मर्यादाभक्तिर्वेदसिद्धा। पुष्टिभक्तिस्तु स्वतन्त्रा। मर्यादाभक्तेः फलं सायुज्यम्। पुष्टिभक्तेः फलं तादात्म्यावबोधनम्। मर्यादाभक्तौ फलापेक्षा, पुष्टिभक्तौ फलानपेक्षा। मर्यादाभक्तिस्थपुरुषोत्तमात् पुष्टिभक्तिस्थपुरुषोत्तमोऽपि भिन्न एव। तथाहि-मर्यादामार्गीयपुरुषोत्तमो धर्मस्वरूपः, पुष्टिमार्गीयपुरुषोत्तमो धर्मिस्वरूपः। मर्यादास्थ-पुरुषोत्तमो गुहायां निलीनः, पुष्टिस्थस्तु साक्षाद् दृश्यमानः। मर्यादास्थपुरुषोत्तमोऽक्षरात्मके वैकुण्ठे निवसति। पुष्टिस्थो गोकुले निवसति। 'तानि परे तथाह्याह' ४।२।१५ इति ब्रह्मसूत्रस्थाणुभाष्ये व्यापिवैकुण्ठाद् गोकुलस्य माहात्म्याधिक्यं वर्णितम्। मर्यादास्थ-पुरुषोत्तमदर्शने शुद्धाद्वैतज्ञानिनोऽधिकारः। पुष्टिस्थपुरुषोत्तमदर्शने रसिकभक्तस्याधिकारः। मर्यादास्थभक्तानामक्षरब्रह्मणि लयः। पुष्टिस्थभक्तस्तु न लीयते। अपितु पुष्टिस्थपुरुषोत्तमः स्वयं प्रादुर्भूय लीलां करोति, एवं स्वान्तःस्थभक्ताननुगृह्य स्नेहेन स्वलीलारसमनुभावयति

पुष्टिभक्तिभेदः—श्रीवल्लभाचार्यमते पुष्टिभक्तिश्चतुर्विधा भवति। तथाहि-प्रवाहपुष्टिः, मर्यादापुष्टिः, पुष्टिपुष्टिः, शुद्धपुष्टिश्चेति[1]। तत्रावस्थितस्य संसारे गृहस्थजीवनं यापयतश्च साधकस्य श्रीकृष्णभक्तिः 'प्रवाहपुष्टिभक्तिः', संसारस्य वैषयिकसुखेभ्यः पराङ्मुखस्य साधकस्य सदा हरिगुणगान-चिन्तन-कीर्त्तन-प्रभृतिरूपा मर्यादापुष्टि-भक्तिः, यत्रादावीश्वरकृपया भक्तस्तदनुग्रहं लब्ध्वा ब्रह्मज्ञानस्य हरिभक्तेश्चाधिकारी ज्ञाता च भवति तदा तस्य भक्तिः 'पुष्टिपुष्टिभक्तिः'। शुद्धपुष्टिमार्गस्य साधको भगवतः परानुरक्तिं विहाय न किमपि जानाति। स सर्वतोभावेन कृष्णमयो जायते। तस्या भक्तेः प्रेम, आसक्तिः, व्यसनं चेति सोपानत्रयं भवति। तस्याः साधको गोपिकेव सायुज्यमुक्तिमपि विहाय भगवतो रासलीलामेव परमां मुक्तिं मन्यते। निखिलरसानन्द-मूर्तिः श्रीकृष्णः सर्वेषां रसानां तत्रापि भक्तिरसस्य प्रकाशको वर्तते। स भक्तेषु संयोगवियोगोभयविधस्य भक्तिरसस्याभिव्यक्तिं करोति। प्रपत्त्या भक्त्या वा करुणा-वत्सलो भगवान् स्वयमेव भक्तेभ्यः पुष्टिं प्रयच्छति।

जीवः—पुष्टिभक्तिदर्शने जीवस्त्रिविधो भवति तथाहि-पुष्टिजीवः, मर्यादाजीवः, प्रवाहजीवश्चेति। तत्र परमेश्वरस्य कृपापात्रं भूत्वा तेन सहानन्यानुरागयुक्तः साधकः पुष्टिजीवः, विहितमार्गेण भगवतः सेवको वेदाध्ययनशीलश्च साधको मर्यादाजीवः, तथा संसारप्रवाहे प्रवहणशीलो वैषयिकसुखभोगैरान्दोलितो निरुद्देश्यजीवननिर्वाहकः प्राणी प्रवाहजीव इति कथ्यते। भक्तिरससाधनादृष्ट्या श्रीवल्लभाचार्यस्य राधाकृष्णभक्ति-

---

१. द्रष्टव्यः श्रीवासुदेवशास्त्रिलिखितः 'पुष्टिभक्तिस्वरूपम्' नामको लेखः। सारस्वतीसुषमायाः २०१३ वि० सं०, ११ वर्षे, ३–४ अङ्कयोः प्रकाशितः।

मार्गीयस्य महत्त्वपूर्णं तत्त्वत्रयमित्थं वर्णितम्-गोपगोपीनां भक्तेरनुकरणम्, सांसारिकजीवने राधाकृष्णयोर्भक्तिलीलारसेन स्वात्मनः सेचनम् गोपीनामिव श्रीकृष्णस्य प्रेम्णो वास्तविकाधिकारित्वप्राप्तिरिति ।

श्रीरामानुजाचार्यादिभिः स्वस्वदार्शनिकसाम्प्रदायिकसिद्धान्तानुसारेण या भक्तिरससाधनोद्भाविता सा सर्वप्रथमं भक्तिकाव्यक्षेत्रे प्रगल्भतया महाकविजयदेवेन प्रवाहिता, अत एव वल्लभाचार्यात् पूर्वमपि राधाकृष्णयोर्युगलोपासनायाः प्रचारो विपुलरूपेणाऽऽसीत् । तस्मादेव कारणात् तदा भक्तिरसस्य त्रिपथगाऽजस्रप्रवाहेण प्रवाहिता । तत्र प्रेमलक्षणाभक्त्या श्रीवल्लभाचार्येण गतिः समारोपिता पश्चात् श्रीकृष्णभक्ताष्टछापकविभिस्तत्रापि महाकविसूरदासेन समस्तभारते राधाकृष्णयोः प्रेमलक्षणाभक्तिः प्रचारिता, येन भक्तिरसस्य प्रेमोज्ज्वला पयस्विनी प्रगल्भतया प्रवहिता, यया सर्वा निर्गुणसगुणोभयविधभक्तिसाधनाः परिप्लाविताः ।

दार्शनिकदृष्ट्या तत्त्वतः श्रीवल्लभाचार्येणाद्वैतमेव प्रतिपादितम्, किन्त्वद्वैतमिदं शाङ्कराद्वैतात् सर्वथा भिन्नमेव । अस्य मते शाङ्कराद्वैतं मायावादोऽस्ति, अर्थात् तत्र ब्रह्मणि अविद्यावरणात् तदद्वैतमशुद्धमेव, वस्तुतो मायासम्बन्धरहितं कार्यकारणरूपं ब्रह्म शुद्धमेव, न तु मायिकम् । शाङ्कराद्वैतमते 'ब्रह्म सत्यं जगन्मिथ्या' इत्यनेन केवलं ब्रह्मतत्त्वमेव सत्यम्, तद्भिन्नं प्रतीयमानं सर्वं मिथ्यैव । एतत्स्वीकारे भक्तानां कृते भगवतः स्वीयधामलीलाभक्तिप्रभृतयः सर्वे मिथ्यात्वमुपगच्छन्ति । अत एव श्रीवल्लभाचार्यमते मायाऽपि तस्य परब्रह्मण एका शक्तिस्तदधीनैव । श्रुतिषु ब्रह्मणो निर्गुणत्वेन प्राकृतगुणगणराहित्यमेव विवक्षितम् । विश्वस्य ब्रह्मण्याविर्भावस्तिरोभावश्च भवति । ब्रह्मांशी जगज्जीवाश्चांशा इति । ब्रह्म नित्यमेकमपि सदाविर्भावतिरोभावाभ्यामनेकरूपेषु दृश्यते । सच्चिदानन्दस्य परब्रह्मणः सिसृक्षायां जातायां सदंशेन प्रकृतिः, चिदंशेन जीवाः, आनन्दांशेनान्तर्यामिरूपञ्च जगदिदं जातम् ।

## श्रीमहाप्रभुचैतन्यदेवस्य सिद्धान्तः ( अचिन्त्यभेदाभेदवादः )

पूर्वप्रकरणे श्रीरामानुजाचार्यादिचतुर्वैष्णवदार्शनिकानां सिद्धान्ताः, तैः प्रवर्तिताः श्रीरुद्रब्रह्महंसादिसम्प्रदायाश्च वर्णिताः, तेषु यथागौडीयवैष्णवपरम्परा ब्रह्मसम्प्रदायान्तर्गता तथा श्रीचैतन्यदेवसिद्धान्तो मध्वसिद्धान्तान्तर्गतो विद्यते । भेदश्चानयोः स्वल्प एव । यद्यपि श्रीचैतन्यदेवो मध्वपरम्परायां दीक्षितो बभूव तथापि मध्वस्य द्वैतवादादस्य मतं भक्त्युपासनास्वरूपादिभेदेन किमपि वैशिष्ट्यं बिभर्ति । तथाहि-श्रीमध्वाचार्यस्योपास्यदेवः श्रीकृष्णः ( विष्णुः ), उपासनैश्वर्यमयी, दार्शनिकसिद्धान्तश्च द्वैतवादः किन्तु चैतन्यमते महाभावरसराजरूपौ राधाकृष्णावुपास्यौ, उपासना माधुर्यमयी, भक्तिः

परमपुरुषार्थः, दार्शनिकसिद्धान्तश्च 'अचिन्त्यभेदाभेदवादः' इति भेदोऽपि तत्र तत्र विद्यत एव।

## अचिन्त्यभेदाभेदवादस्य स्वरूपम्

अचिन्त्यभेदाभेददार्शनिकसिद्धान्तस्य प्रवर्तकः श्रीचैतन्यमहाप्रभुरासीत्। एतत् साम्प्रदायिकानां मान्यता यत् श्रीचैतन्यदेवो महाभावरसराजस्वरूपयोः श्रीराधाकृष्णयोः सम्मिलितयोरवतार एव। अवतारप्रयोजनं च कलिजीवेभ्यः स्वीययोः (राधाकृष्णयोः) रसमयभक्तेः प्रदानमेव। प्रमाणं चात्र श्रीरूपगोस्वामिविरचितं विदग्धमाधवनाटकमिति[1]। श्रीचैतन्यदेवेन रागमयीभक्तिः प्राधान्येन स्थापिता। यथा परपुरुषानुरक्ता नारी गृहकार्येषु व्यस्ता सत्यपि स्वहृदयस्थावैधानुरागस्याऽऽनन्दानुभूत्यर्थं सर्वदा व्यग्रतया तिष्ठति, तथैव भक्तोऽपि लौकिककार्येषु संलग्नोऽपि प्रियतमप्रभोः रसमयध्यान एव सर्वदा निमज्जति[2]। इत्थं भूता परकीयाभावसमन्विता भक्तिस्तेन स्वीकृता, तस्य दार्शनिकसिद्धान्तस्तु 'अचिन्त्यभेदाभेदः' इति नाम्ना प्रसिद्धिमुपगतः। तदनुसारेण जीवब्रह्मणोर्भेदाभेदौ वर्तेते। चिदात्मकत्वेन तयोरभेदस्तथापि ब्रह्मांशी जीवस्त्वंशोऽस्ति। ब्रह्म विभु, चिच्च, जीवस्तु अणुरचिदेव वर्तते। ब्रह्म सर्वज्ञं सर्वशक्तिमच्च, जीवस्त्वल्पज्ञो लघुशक्तिमाँश्चाऽस्ति। ब्रह्म सच्चिदानन्दघनविग्रहम्, जीवस्तु मायाग्रस्तः सुखदुःखभोक्ता चास्ति। अत एव जीवब्रह्मणोर्भेदोऽपि वर्तते। तयोर्भेदाभेदस्तु सर्पकुण्डलीन्यायेन, कस्तूरीगन्धन्यायेन, अग्निस्फुलिङ्गन्यायेन वा सम्प्रदायशास्त्रेषु स्पष्टतया प्रतिपादितः। तयोः सम्बन्धप्रतिपादका गीताभागवत-विष्णुपुराणादिग्रन्थाः प्रमाणभूताः सन्ति सम्प्रदायतत्त्वविदां मते[3]। तात्पर्यमिदं

---

१. अनर्पितचरीं चिरात्करुणयावतीर्णः कलौ,
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम्।
हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः,
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः॥
—विदग्धमाधवनाटके १।२

२. परव्यसनिनी नारी व्यग्रापि गृहकर्मणि।
तदेवास्वादयत्यन्तः परसङ्गरसायनम्॥
—पञ्चदश्याम् ६।८४।

३. ईश्वरेर तत्त्वयेन ज्वलित ज्वलन। जीवेर स्वरूप येन स्फुलिङ्गेर कण।
जीवतत्त्वशक्ति कृष्णतत्त्वशक्तिमान। गीता विष्णुपुराणादि ताद वादे प्रमाण॥
—चै० च० आ० ली० ७।१६-१७

यत् श्रीकृष्ण एव सर्वशक्तिमान् परं तत्त्वं च, जीवस्तु तस्य शक्तिरस्ति। ब्रह्म सजातीय विजातीय स्वगतभेदशून्यं परमस्ति। तत्तु स्वयमेव सिद्धम्। जीवः प्रकृतिश्च तस्याधीनावेव। इत्थं च दृश्यते जीवब्रह्मणोश्च भेदोऽप्यभेदोऽपि विद्यते। अत एवेश्वरतत्त्वस्य जीवतत्त्वस्य च विलक्षणसम्बन्धोऽयं भेदाभेद इति संज्ञां लभते। यतो हि शक्तिशक्तिमतोश्च परस्परं भेदमभेदं वा वक्तुं न शक्यते। अत एव जीवब्रह्मणोश्चायं 'भेदाभेदः' तर्कैरचिन्त्यः। श्रीरूपगोस्वामिना प्रतिपादितं यदचिन्त्यानन्तादिशक्तिमत्वेनैकस्मिन्नेव परमात्मनि एकत्वमपि बहुत्वमपि (पार्थक्यम्), अंशत्वमप्यंशित्वमपि यद् वर्तते तन्नायुक्तम्[1]। कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थे परमात्मनि सर्वं सम्भाव्यते। अपि च श्रीजीवगोस्वामिमतानुसारं श्रीकृष्णस्य स्वरूपादीनां शक्तित्वेनाभिन्नतया चिन्तनमशक्यम्, अत एव भिन्नतया प्रतीयते। एवमेव तस्य भिन्नतया चिन्तनमप्यशक्यम्, अत एवाभिन्नतया प्रतीयते। वस्तुतः शक्तिशक्तिमतोश्च भेदाभेदावेव प्रतीयेते, उभौ चाचिन्त्यशक्ती, अत एव सिद्धान्तोऽयम् 'अचिन्त्यभेदाभेदः' इति कथ्यते संप्रदायविद्भिः[2]। अपि च जीवगोस्वामिना सर्वसम्वादनामके स्वविरचिते ग्रन्थे[3]–'अपरे' तु 'तर्काप्रतिष्ठानात्'[4] इत्यनेन भेदेऽप्यभेदेऽपि निर्मर्याददोषसन्ततिदर्शनेन भिन्नतया चिन्तयितुमशक्यत्वादभेदं साधयन्तः तद्वदभिन्नतयापि चिन्तयितुमशक्यत्वाद् भेदमपि साधयन्तोऽचिन्त्यभेदाभेदवादं स्वीकुर्वन्तीत्यभिहितम्।

भक्तेः रसत्वस्थापने चैतन्यदेवस्य गौडीयसम्प्रदायस्यैव महान् प्रयत्नो विद्यते। भक्तिरसामृतसिन्धुरुज्ज्वलनीलमणिरित्युभयोः प्रसिद्धयोर्भक्तिरसग्रन्थयोः कर्त्ता श्रीरूपगोस्वामी श्रीचैतन्यदेवस्य साक्षाद् शिष्य आसीत्। श्रीरूपाग्रजेन श्रीसनातनगोस्वामिना स्वगुरोश्चैतन्यस्याऽऽज्ञया बृहद्भागवतनाम्नि ग्रन्थे सरसकथाद्वारा राधाकृष्णयोर्भक्तिरसस्य श्रेष्ठत्वमचिन्त्यभेदाभेदो नाम दार्शनिकसिद्धान्तश्चेति सर्वं स्थापितम्। पश्चाद् जीवगोस्वामिना षट्सन्दर्भे भक्तिरसो तदनुरूपा दार्शनिकसिद्धान्ताश्च सुदृढतया पल्लविताः। सम्प्रदायेऽस्मिन् बहवो विद्वांस आचार्याः कवयश्च जाताः, यैः स्वकृतिभि-

---

१. एकत्वं च पृथक्त्वं च तथांशत्वमुतांशिता।
तस्मिन्नेकत्र नायुक्तमचिन्त्यानन्तशक्तितः॥　— लघुभागवते १।५०।

२. स्वरूपाद्यभिन्नत्वेन चिन्तयितुमशक्यत्वात् भेदः, भिन्नत्वेन चिन्तयितुमशक्यत्वादभेदश्च प्रतीयत इति शक्तिशक्तिमतोर्भेदाभेदावङ्गीकृतौ। तौ चाचिन्त्यौ। स्वमते तु अचिन्त्यभेदाभेदावेव अचिन्त्यशक्तित्वात्॥
जीवगोस्वामिविरचिते भगवत्सन्दर्भे। –पृष्ठे १४५

३. श्रीजीवगोस्वामिविरचिते　—सर्वसम्वादग्रन्थे　—पृष्ठे १४५

४. ब्रह्मसूत्रे २।१।११

र्भक्तिरसप्रचारः संस्कृतसाहित्यविकासश्च सममेवाकारि। संस्कृतसाहित्ये रचितपुस्तकैस्तु सम्प्रदायोऽयं चतुर्भ्योऽपि वैष्णवसम्प्रदायेभ्यो विशिष्यते। सम्प्रदायेऽस्मिन् विद्वद्गणेन विश्वामित्रेणेव नूतना साहित्यसृष्टिर्विहिता। तथाहि—हरिनामामृतादिव्याकरणशास्त्रम्, हरिभक्तिविलासादिस्मृतिशास्त्रम्, षट्सन्दर्भगोविन्दभाष्यप्रभृति दर्शनशास्त्रम्, भक्तिरसामृतसिन्धुप्रभृतिकाव्यशास्त्रं च प्रणीतम्। लक्ष्यकाव्यग्रन्थेषु तु काव्यनाटकचम्पूपदावलीदूतकाव्यस्तोत्रप्रभृतिविरचनेन पूर्वकविप्रवर्तिताः प्रायः सर्वे मार्गास्तैःप्रवर्द्धिताः।

श्रीकृष्णतत्त्वम्—श्रीचैतन्यमते श्रीकृष्णतत्त्वस्यैव प्राधान्यमस्ति। तन्मते श्रीकृष्णस्तु स्वयमेव भगवान्, पूर्णज्ञानस्वरूपः, पूर्णानन्दः, परमेश्वरः, परमतत्त्वभूतश्च वर्तते। श्रीकृष्णाद्भिन्नाः सर्वेऽवताराः प्रथमपुरुषमहाविष्णोः कला अंशा वा सन्ति किन्तु श्रीकृष्ण एव स्वयं भवान्, अवतारेषु शिरोमणिश्च वर्तते[1]। यतो ह्यन्यावतारापेक्षया श्रीकृष्णे लीलाविलासोपयोगिनीशक्तिरपूर्णरूपेण विकसिता बभूव। मतेऽस्मिन् श्रीकृष्ण एव पूर्णं ब्रह्मास्ति, तस्यानन्तशक्तयः सन्ति। तासु चिच्छक्तिर्जीवशक्तिर्मायाशक्तिश्चेति तिस्रः प्रधानाः। तत्र भगवतः श्रीकृष्णस्य पवित्रधामादयश्चिच्छक्तिनाम्नान्तरङ्गशक्तिनम्ना स्वरूपशक्तिनाम्ना चापि कथ्यते। तस्यैवांशभूता जीवशक्तिस्तटस्था शक्तिः। जडरूपा बहिरङ्गशक्तिर्मायाशक्तिरिति। श्रीकृष्णे ब्रह्मण ऐश्वर्यशक्तिर्मायाशक्तिश्च पूर्णतयाऽभिव्यक्ता। स्वप्रकाशवैशिष्ट्येन तदेव ब्रह्म परमात्मा-भगवानिति च समाख्यां लभते। भक्तिभावापन्नानां भक्तानां कृते श्रीकृष्णस्य भगवद्रूपमेव सर्वाधिकं ग्राह्यं वर्तत इत्यादि प्रपञ्चितं सर्वं विशदतया ब्रह्मसंहितायां भागवतादिषु[2] च। एवं च सः श्रीकृष्ण आनन्दस्वरूपः, रसस्वरूपः, भावनिधिः, लीलामयश्चास्ति। स आनन्दार्थं रसास्वादनस्य स्पृहया च लीलां करोति, तस्य समस्तलीलासु नरलीलैव श्रेष्ठतमा निगद्यते भक्तैः। परमतत्त्वस्य श्रीकृष्णस्य ऐश्वर्यरूपं माधुर्यरूपं चेति रूपद्वयं विद्यते। तस्यैश्वर्यरूपं तु परात्परं ब्रह्मैव। यस्य प्राप्तिश्च ज्ञानमार्गेण भवति। माधुर्यरूपस्तु स भगवान् मानवविग्रहेण मानवोचितं कार्यं करोति। स एव साधकैः स्वस्वभावानुसारेण शान्तदास्यसख्यवात्सल्यमधुरादिभावेनोपास्यते। चैतन्यमते भगवतो मधुररूपस्यैव प्राधान्यम्।

---

१. एते चांशाः कलाः पुंसः श्रीकृष्णस्तु भगवान् स्वयम्। —भागवते १।३।२८

२. ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।
अनादिरादिर्गोविन्दः सर्वकारणकारणः॥ ब्रह्मसंहितायाम् ५।१।
वासुदेवपरा वेदा वासुदेवपरा मखाः। वासुदेवपरा योगा वासुदेवपराः क्रियाः॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः। वासुदेवपरो धर्मो वासुदेवपरा गतिः॥
—भागवते १।२।२८-२९

तत्रापि परकीयकान्ताभावः सर्वश्रेष्ठः स्वीक्रियते । मतेऽस्मिन् साधको भगवन्तं प्रियतमरूपेणाऽऽराधयन्नलौकिकानन्दमास्वादयति । स एवालौकिकानन्दश्चैतन्यमते 'पञ्चमपुरुषार्थः' इति कथ्यते । यश्चतुर्विधपुरुषार्थेभ्योऽपि श्रेष्ठतमो गण्यते साधकैः । मतेऽस्मिन् श्रीकृष्णस्य मधुरभावस्यातिशयोद्रेकः, प्रेमोन्मादनमेव चोज्ज्वलरसत्वेन ( मधुररसत्वेन ) संज्ञायते । एवं वैष्णवभक्तिरससाधनायां मधुरभक्तिरस एव रसराजरूपेण स्वीकृतश्चैतन्यानुयायिभिः साधकैः ।

चैतन्यमते निर्विशेषनिर्गुणचैतन्यराशिर्ब्रह्मपदवाच्यः, सविशेषसगुणचैतन्यराशिश्च भगवत्पदवाच्यः । तत्रापि सूर्यबिम्बस्थानीयो भगवान्, सूर्यप्रभास्थानीयं च ब्रह्मेति प्रोच्यते, तत्कृतेऽपि बहुशः प्रमाणानि सन्ति ब्रह्मसंहितादिषु[1] । श्रीमद्भगवद्गीतायाश्च 'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य' चेति श्लोकस्य व्याख्याने विश्वनाथचक्रवर्तिनो व्याख्या तु–हि यस्मात् परमप्रतिष्ठात्वेन प्रसिद्धं श्रुतौ यद् ब्रह्म तस्याप्यहं प्रतिष्ठा—— तत्प्राप्यस्य ऐकान्तिकस्य सुखस्य प्रेम्णश्च प्रतिष्ठा अतः सर्वस्यापि मदधीनत्वात् कैवल्यकामनया कृतेन मद्भजनेन ब्रह्मणि लीयमानो ब्रह्मधर्ममपि प्राप्नोतीति' इत्यनेन ब्रह्मणोऽपेक्षया भगवतः श्रीकृष्णस्यैव वैशिष्ट्यं व्यज्यते । एवं सिद्धान्तं मन्यमानेन कृष्णदासकविराजेन चैतन्यचरितस्यादौ वन्दनाप्रकरणे 'यदद्वैतं ब्रह्मोपनिषदि तदप्यस्य तनुमा, य आत्माऽन्तर्यामी पुरुष इति सोऽस्यांशविभवः षडैश्वर्यैः पूर्णो य इह भगवान् स स्वयमयं न चैतन्यात् कृष्णाज्जगति परतत्त्वं परमिह[2]' इत्यनेन, तथा च श्रीरूपगोस्वामिना माधुर्यादिगुणगणविशिष्टत्वेन ब्रह्मणोऽपेक्षया भगवतो श्रीकृष्णस्य वैशिष्ट्यं प्रतिपादितम्[3] ।

ब्रह्म ( ईश्वरः )—मतेऽस्मिन् हरिरेव सर्वश्रेष्ठो भगवान्, ईश्वरो वा वर्तते । तस्याङ्गकान्तिरेव निर्विशेषं ब्रह्म विद्यते । परमात्मा तु तस्यैकांशमात्रमेव, यः संसारेऽन्तर्यामी । एवं च हरिरंशी, परमात्मा तु तस्यांशो वर्तते । हरिशब्दस्य ब्रह्मशब्दस्य वा मुख्यार्थस्तु परब्रह्म स्वयं भगवानेवास्ति, यः षडैश्वर्यपरिपूर्णो वर्तते । एवं च भगवान् शुद्धसत्त्वमयः सच्चिदानन्दस्वरूपोऽस्ति, तत्सदृशमेव तस्य धाम, तत्सदृशा

---

१. यस्य प्रभा प्रभवतो जगदण्ड-कोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् ।
तद् ब्रह्म निष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि ॥
—ब्रह्मसंहितायाम् ४४।४३

२. चैतन्यचरितामृते–१।३ ।

३. इति प्रवरशास्त्रेषु तस्य ब्रह्मस्वरूपः ।
माधुर्यादिगुणाधिक्यात् कृष्णस्य श्रेष्ठतोच्यते ॥ लघुभागवते ६५ ।

एव तस्य परिकरवर्गाश्च सन्ति । स्वपरिपूर्णतायां हरी राधाकृष्णरूपयुगलमूर्तिरूपेणैक एव । उभौ च परस्परं भक्तेः प्रेम्णश्चापरिहार्यबन्धने सर्वदा बद्धौ तिष्ठतः । स हरि शुद्धसत्त्वः, अनन्तः, सर्वव्यापकश्चास्ति । यतो हि पूर्वोक्तगुणा एव तस्याचिन्त्यशक्तेर्लक्षणानि सन्ति । तया शक्त्यैव हरिर्विभुत्वेन ज्ञायते । तस्य सर्वा विभूतयोऽप्राकृता एव ( चिन्मयाः ) सन्ति । तस्यानन्तशक्तयो विकासप्रभृतीनि सर्वाणि कार्याणि च नित्यानि सन्ति । ब्रह्मणः शक्त्यैव निर्विशेषपदार्थोऽपि सविशेषत्वं प्राप्नोतीति ।

ब्रह्मणः शक्तिः—ब्रह्मणोऽचिन्त्याकारशक्तिषु स्वरूपशक्तिः, तटस्थशक्तिः, मायाशक्तिश्चेति तिस्रः प्रमुखाः सन्ति । तत्रापि सच्चिदानन्दस्वरूपात्मकत्वेन भगवत एकात्मकस्वरूपशक्तेरपि संधिनी, संवित्, ह्लादिनी चेति रूपत्रयं भवति । तत्र संधिनीशक्त्या भगवान् स्वयमेव सत्तां गृह्णाति तथाऽन्येभ्यश्च सत्तां प्रयच्छति । संवित् शक्त्या भगवान् स्वयमेवाऽऽत्मानं जानाति, भक्तेभ्यश्च ज्ञापयति । ह्लादिनीशक्त्या च भगवान् स्वयमेवाऽऽनन्दितो भवति, भक्तांश्चाऽऽनन्दयति । विष्णुपुराणानुसारं प्रोक्तशक्तित्रयं केवलं भगवत्येव भवति, न तु जीवे । किन्तु ह्लादकरी सात्त्विकशक्तिः, तापकरी तामसीशक्तिः, उभयमिश्रितसुखदुःखकरी राजसीशक्तिस्तु केवलं जीवेष्वेव न तु भगवति । अत एव भगवान् त्रिगुणातीत इति कथ्यते[1] । सा स्वरूपशक्तिरेव चिच्छक्तिरित्यन्तरङ्गशक्तिरिति वा कथ्यते, यतो हि तयैव शक्त्या लीलापुरुषोत्तमः श्रीकृष्णोऽन्तरङ्गविलासं विरचयति । स्वरूपशक्तिक्रियया ब्रह्म यत् समस्तविशेषत्वं धारयति तदपि परमानन्दवैचित्र्यमेव । स चानन्दः स्वयमेवाऽऽस्वाद्यः, तस्याऽऽस्वादनं ब्रह्मणः स्वरूपशक्त्या साधितं भवति । तात्पर्यमिदं यद् ब्रह्म आनन्दस्वरूपमेव । अतो ब्रह्म स्वयमेवाऽऽस्वाद्यं वर्तते, तत् स्वयमेव रसः, स्वयमेव च स्वरूपशक्त्या समास्वादयति । इत्थं च ब्रह्म स्वयमेवं आस्वाद्यं तथा स्वयमेवास्वादकं चाप्यस्ति । अतो यद् ब्रह्म स एव रसः, यो रसस्तदेव ब्रह्म वर्तते । 'रसो वै सः' इति श्रुत्या ब्रह्मरसयोर्भेदो नास्ति ।

भगवतस्तटस्थशक्तिस्तु परिच्छिन्नस्वभावशीलानामणुस्वरूपात्मजीवानामाविर्भावस्य कारणं विद्यते । अत एव सा जीवशक्तिरित्यपि कथ्यते । सा शक्तिरन्तरङ्गचिच्छक्तौ बहिरङ्गमायाशक्तौ वा कुत्रापि नान्तर्भवति । मायाशक्तिस्तु प्रकृतेर्जगतश्चाविर्भावस्य कारणं वर्तते । तस्याः कार्यं तु प्राकृतब्रह्माण्डमेवास्ति । सा स्वरूपशक्तेर्विपरीता वर्तते । जीवशक्तौ स्वरूपशक्तेर्मायाशक्तेश्च गुणः समावेश्यते । अतो जीवः साक्षात्

---

१. ह्लादिनी संधिनी संवित्त्वय्येका सर्वत्र संस्थितौ ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ।। विष्णुपुराणे ६।१२।६६

सच्चिदानन्दोऽप्यस्ति, तद्भिन्नोऽप्यस्ति । त्रिगुणात्मिकामायाशक्तिर्गुणमायेत्यपि कथ्यते । या परमेश्वरशक्त्या जगति गौणोपादानरूपेण परिणमते । मायाशक्त्याऽविद्याग्रस्तो जीवो भगवता सह स्वसम्बन्धं विस्मरति । स एव जीवमायेति कथ्यते । तदतिरिक्ता योगमायाशक्तिरपि श्रीकृष्णस्य वर्तते । सा च चिच्छक्तेर्मूर्तविग्रहो वर्तते । तस्याः कार्यं च चिन्मयभगवल्लीलायां भक्तजनेषु परिकरेषु च मुग्धत्वं समुत्पाद्य तेभ्यः समास्वादनस्य लीलारसवैचित्र्यस्य प्रदानमेवास्ति ।

पूर्वोक्तिविवेचनस्य तात्पर्यमिदं यद् तद् ब्रह्म जगतोऽभिन्ननिमित्तोपादानकारणम् । अविचिन्त्यशक्त्या जगद्रूपेण परिणतोऽपि स्वरूपतोऽविकृत एव तिष्ठति । जगदिदं सत्यं नित्यं च वर्तते । मुक्तावस्थायामपि जीवो ब्रह्मणः पृथगेव भवति । तस्य ब्रह्मसान्निध्ये ( मुक्तौ ) आनन्दभोगे समानत्वं स्यात् परन्त्वणुत्वात् सर्वथाऽसमानोऽप्यस्तीति सर्वं प्रतिपादितं सुविशदं गोविन्दभाष्ये[1] ।

मुक्तेरुपायः—मतेऽस्मिन् भगवत्प्राप्तिरेव मुक्तिः । सा गोविन्दभाष्यानुसारेण साध्यं तत्त्वम् । तस्याः प्रधानसाधनं भक्तिः । सा सर्वनिरपेक्षा जीवस्य पुरुषार्थप्रापिका, ह्लादिनीसंवितोः शक्त्योः सारभूता च । साधनायां सर्वप्रथमं सतां सङ्गः सेवा च, ताभ्यामेव स्वपरात्मस्वरूपस्य ज्ञानं भवति, ततस्तद्विपरीतविषये च वैराग्यं जायते, ततो भगवद्भक्तिः समुदेति । तया भक्त्यैव प्रेष्ठत्वेन वरणम्, ततो भगवत्साक्षात्कारो भवति[2] । एवं च भगवदुपासनया भगवत्सान्निध्योपलब्धिरिति ( मुक्तिः ) गोविन्दभाष्यानुसारेण साधनसाध्यतत्त्वम् । एवं च वेदान्तभाष्यानुसारेण भगवत्प्राप्तिरूपामुक्तिः साध्यत्त्वेन भक्तिश्च साधनत्वेन प्रतिपादिता, परन्तु मतान्तरे भक्तेरेव साध्यत्वं प्रतिपाद्यते, धर्मार्थकाममोक्षेभ्योऽपि 'प्रेमा पुमर्थो महान्' इति प्रेमभक्तेः पञ्चमपुरुषार्थत्वं मन्यते । रूपगोस्वामिना भक्तेः षट्सु विषयेषु एका 'मोक्षलघुताकृत्' इति विशेषतापि स्वीकृता । सुखोपलब्धिविषयेऽपि 'ब्रह्मानन्दो भवेदेष चेत्परार्धगुणीकृतः । नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि[3]' इति प्रतिपादितम् ।

भक्तेः रसत्वस्थापने गौडीयवैष्णवाचार्यैर्महान् प्रयासो विहितः । वस्तुतो भक्तेः रसत्वस्थापनं तेषां न सर्वथा नूतनोद्भावना, अपि तु लक्ष्यरूपेण तद् भागवतादिपुराणेषु संहितासु काव्यग्रन्थेषु च प्राप्यत एव । तेषु भक्तेः रसत्वस्थानबीजं प्रायोऽस्पष्टरूपेण वर्णितम् । लक्षणरूपेणापि बोपदेवेन मुक्ताफले, लक्ष्मीधरेण भगवन्नामकौमुद्यां

---

१. ब्रह्मसूत्रे ४।४।२०–२१ गोविन्दभाष्ये पृष्ठे ३२४ ।

२. ब्रह्मसूत्रे ३।३।५४ गोविन्दभाष्ये पृष्ठे २५७ ।

३. भक्तिरसामृतसिन्धौ १।१।१६ ।

प्रतिपादितं वर्तते। भक्तेः रसत्वस्थापनकारणेन गौडीयवैष्णवसम्प्रदायस्तु कृष्णभक्तिरससम्प्रदाय इत्येव वक्तुमुचितः। यथा दार्शनिकत्वेन पूर्वप्रदर्शितानां चतुर्णां वैष्णवसम्प्रदायानां वैशिष्ट्यं तथैव भक्तिरसप्रवर्त्तकत्वेन गौडीसम्प्रदायस्य वैशिष्ट्यं विद्यते। चैतन्यमतसमर्थकगोविन्दभाष्यानुसारम्—ईश्वरः, जीवः, प्रकृतिः, कालः, कर्म चेति पञ्चतत्त्वानि स्वीकृतानि। श्रीकृष्ण एव परतमं निखिलवेदान्तवेद्यं तत्त्वम्, जगत् सत्यम्, ब्रह्मजगतोर्भेदः सत्यः, जीवोऽणुश्चैतन्यरूपो नित्यश्रीकृष्णदासः, साधनभेदैर्जीवानां भेदोऽनिवार्यः। श्रीकृष्णचरणोपलब्धिरेव जीवस्य मोक्षः। श्रीकृष्णभक्तिरेव तस्य साधनम्। प्रत्यक्षानुमानशब्दास्त्रयः प्रमाणमिति। एवं गोविन्दभाष्यानुसारेण चैतन्यमते पञ्चतत्त्वानि नवप्रमेयाणि च स्वीकृतानि। 'शास्त्रयोनित्वात्' इति ब्रह्मसूत्रस्य भूमिकायां "जगज्जन्मादिहेतुः पुरुषोत्तमो विचिन्त्यत्वाद् वेदान्तेनैव बोध्यो न तु तर्कैः[1]" इत्यादिना ब्रह्मणो शास्त्रैकबोध्यत्वमपि प्रतिपादितम्।

यद्यपि परम्परया सम्प्रदायोऽयं मध्वसम्प्रदायान्तर्गत एव तथापि केवलद्वैतवादी नास्ति, किन्तु उभयोः सम्प्रदाययोः सामञ्जस्यार्थं गोविन्दभाष्ये तत्त्वप्रमेयादीनां प्रतिपादनं तदनुसारेणैव कृतम्। मध्वाचार्येणापि बीजरूपेणाचिन्त्यभेदाभेदसिद्धान्तः स्वीकृत इति ब्रह्मसूत्रगोविन्दभाष्ये प्रमाणितम्[2]।

---

१. ब्रह्मसूत्रे १।१।२ श्रीबलदेवाचार्यविरचितेन गोविन्दाभाष्ये पृष्ठे ६।

२. अवयव्यवयवानां गुणानां गुणिनस्तथा।
शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा॥
स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने।
भेदो जीवस्वरूपेषु तथैव प्रकृतावपि॥
चिद्रूपायामतोऽनंशा अगुणा अक्रिया इति।
हीना अवयवैश्चेति कथ्यन्ते च त्वभेदतः॥
पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि।
विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम्॥
क्रियादेरपि नित्यत्वं व्यक्त्यव्यक्तिविशेषणम्।
भावाभावविशेषेण व्यवहारश्च तादृशः॥
विशेषस्य विशिष्टस्याप्यभेदस्तद्वदेव तु।
सर्वं चाचिन्त्यशक्तित्वाद् युज्यते परमेश्वरे॥
तच्छक्त्यैव तु जीवेषु चिद्रूपप्रकृतावपि।
भेदाभेदो तदन्यत्र ह्युभयोरपि दर्शनात्॥
कार्यकारणयोश्चापि निमित्तं कारणं विना॥
गोविन्दभाष्यस्यावतरणिकाम्—पृष्ठे १६।

पञ्चतत्त्वानि—चैतन्यमते गोविन्दभाष्यानुसारमीश्वर-जीव-प्रकृति-काल-कर्मेति पञ्चतत्त्वानि स्वीक्रियन्ते। तत्रेश्वरः सर्वतन्त्रस्वतन्त्रः, कर्त्तुमकर्त्तुमन्यथाकर्त्तुं सर्वथा समर्थः, सर्वज्ञः, मुक्तिदाता, विज्ञानस्वरूपः, एकश्च विद्यते। स च स्वातन्त्र्येण प्रकृत्यादिष्वनुप्रविश्य नियामको जीवानां भुक्तिमुक्तिप्रदाता चास्ति। अनन्तगुणवानपि प्राकृतसत्वादिगुणगणराहित्यान्निर्गुणः। अप्राकृतदिव्यगुणगणसाहित्यात् सगुणः, शक्तीनामानन्त्येऽपि संवित्, संधिनी, ह्लादिनी चेति तस्य तिस्रः शक्तयः प्रधानाः। जीवः— नियामकस्य परमात्मनो नियम्या अणुचैतन्या जीवा अनन्ताः, नानावस्थापन्नाश्च। परमात्मवैमुख्यमेव तेषां बन्धनकारणम्। मोक्षकाले गुणतो ब्रह्मणः साम्येऽपि अणुस्वरूपत्वादल्पशक्तिमत्वाच्च सर्वदा ब्रह्मणः पार्थक्यमेव तेषाम्। प्रकृतिः—परमात्मनः शक्तिः, सत्त्वरजस्तमोगुणानां साम्यावस्था। ईश्वरस्येक्षणेनोद्बुद्धा सति विचित्रजगतः उत्पादिका वर्तते। कालः—भूतभविष्यद्वर्तमानयुगपच्चिरक्षिप्रप्रभृतिशब्दव्यवहारकारणम्, । क्षणादिपरार्धपर्यन्तं चक्रवत्परिवर्तमानः। सर्गस्थितिनाशहेतुभूतो जडतत्त्वम्। तच्च सर्वदा परमात्माधीनम्। **कर्म**—अदृष्टादिशब्दव्यपदेश्यो जडपदार्थस्तदनादि सान्तं च विद्यते।

जीवस्वरूपम् —

श्रीचैतन्यमते परमतत्त्वं श्रीकृष्णः स्वांशेन स्वभिन्नांशेन चानन्तरूपं गृह्णाति, वैकुण्ठे ब्रह्माण्डे च लीलाविस्तारं करोति जीवानां कल्याणाय। तत्र स्वांशास्तु वासुदेवादिचतुर्व्यूहाः, सर्वेऽवतारगणाश्च, तस्य च भिन्नांशस्तु जीवोऽस्ति। एवं श्रीकृष्णस्य प्रत्येकांशस्य विस्तारस्वरूपमेव जीवतत्त्वं वर्तते। एवं च सूर्यरश्मिसदृशो जीवः श्रीकृष्णस्य भिन्नांशो वर्तते। यथा सूर्यात् सूर्यरश्मिः न भिन्नो न चाभिन्नो यथा शब्देऽर्थे च तरङ्गे जले च भिन्नाभिन्नत्वं[1] तथैव तयोर्जीवकृष्णयोर्भेदाभेदः सम्बन्धोऽस्ति। एवञ्च श्रीकृष्णस्य तस्य भिन्नांशस्य जीवस्य च परस्परं भेदाभेदसम्बन्धो वर्तते। नित्यबद्धो नित्यमुक्तश्चेति रूपद्वयं जीवस्य भवति। तत्र नित्यमुक्ता जीवास्तु नित्यं श्रीकृष्णोन्मुखाः पार्षदगणाः सन्ति। येऽहर्निशं श्रीकृष्णस्य सेवां कुर्वन्तः परमानन्दं लभन्ते। श्रीकृष्णविमुखा जीवा नित्यबद्धा एव, ते चिरकालपर्यन्तं जन्ममरणसंसारसागरे 'पुनरपि जननं पुनरपि मरणमि'तियुक्त्यनुसारं तापत्रयं सहन्ते। पुनस्ते मायाग्रस्ता नित्यबद्धजीवाः श्रीकृष्णस्य शरणागत्या साधुसङ्गत्या च भवसागरमनायासेन तरन्ति। पुरुषार्थचतुष्टयं तु सर्वजीवैरेव काम्यम्, किन्तु नित्यमुक्तजीवास्तमुपेक्ष्य श्रीकृष्णस्य प्रेममहाधनमेव कामयन्ते। चैतन्यमते तदेव पञ्चमः पुरुषार्थः' कथ्यते, तदेव भक्तिरसस्य आत्मा वर्तते।

---

१. सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥—शङ्कराचार्यस्य

जगत्स्वरूपम्

चैतन्यमते जगत्सत्यं न त्वाविद्यिकम् ( मायिकम् )। यतो हि जगदिदं सत्यसङ्कल्पस्य हरेर्बहिरङ्गशक्तेर्विलासो वर्तते। इदं समर्थयितुं निम्नलिखितानि श्रुतिपुराणादिवचनान्युपस्थाप्यन्ते। यथाहि—

कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ —ईशावास्योपनिषदि–८

तथा च जगदिदमाविर्भाव-तिरोभाव-सर्ग-स्थिति-प्रलयादिविकल्पैः समन्वितमपि नित्यमक्षञ्च वर्तते। यथा च—

'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ —विष्णुपुराणे–१।२२।६०

अपञ्च—

ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः।
सत्याद् भूतानि जातानि सत्यं भूतमयं जगत् ॥
—महाभारतेऽश्वपर्वणि ३५।३४

एवञ्च यथा रात्रौ विपिने खगानां मौनसत्ता तिष्ठति तथैव प्रलये जगतां सत्ताऽव्यक्ते ब्रह्मणि बीजरूपेण तिष्ठति।

समासेन पूर्वप्रपञ्चितस्य चैतन्यमतस्य निर्गलितोऽयं सारो यदस्मिन् मते नन्दनन्दनः श्रीकृष्ण एव परमाराध्यः, तस्य लीलायाः परमधामवृन्दावनादिरेव सेव्यः, गोपिकाभिः कृता रमणीयमधुरोपासना एवोपासना ( भक्तिः ), तयैव मोक्षः, श्रीभागवतपुराणमेव परमं प्रमाणम्, प्रेमैव च परमपुरुषार्थो वर्तते[1]।

श्रीचैतन्यस्याचिन्त्यभेदाभेदवादेन कान्ताभावपरकमधुरभक्त्या च पश्चात्वर्तिनः सर्वे वैष्णवाचार्याः सम्प्रदायाश्च पूर्णरूपेण प्रभाविताः दृश्यन्ते। भगवद्प्रेमोन्मादः, अनन्यपरमेश्वरप्रेमा, दिव्यप्रेमानुभूतिः, भगवल्लीलारसस्य समास्वादनम्, भक्तिरसस्वरूपस्य परमानन्दस्य प्राप्तिश्चेति चैतन्यमतस्य सर्वोपरि वैशिष्ट्यं वर्तते। यत् पश्चात्वर्त्तिषु भक्तिसम्प्रदायेष्वनुस्यूतं विलोक्यते।

---

१. आराध्यो भगवान् व्रजेशतनयस्तद्धामवृन्दावनम्,
रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता।
श्रीमद्भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्,
श्रीचैतन्यमहाप्रभोर्मतमिदं तत्राग्रहो नापरः ॥
—चैतन्यमत और व्रजसाहित्ये पृष्ठे ११०

पूर्वोक्तेषु वैष्णवदार्शनिकसिद्धान्तेषु यद्यपि स्पष्टतया मतवैभिन्न्यं दृश्यते, तथापि सूक्ष्मेक्षिकया दर्शने तु तेषु मौलिकैकवाक्यतैव, तथाहि–वैष्णवदार्शनिकभक्तैः पौराणिकी बहुदेवोपासना त्यक्ता, केवलं व्यापकदृष्ट्या विष्णोरेवोपासना स्वीकृता। तस्यैवांशभूता रामकृष्णादयश्चेति। अपि च सर्वैः शङ्कराचार्यप्रतिपादितस्याद्वैतस्य मायावादस्य चाव्यवहारिकताङ्गीकृता। ईश्वरावतारः, भक्तेरनिवार्यता, अनन्यशरणागतिः सदाचारः, नाममाहात्म्यम्, नामरूपोपासना, लीलामाहात्म्यञ्च स्वीकृतम्। वैष्णवदर्शनस्य लीलातत्त्वमेव भक्तिरसस्य जननी विद्यते। प्रोक्तानि सर्वाणि तत्त्वानि सगुणोपासकानां कृते भक्तिरसस्योदगमस्थली वर्तते। तत एव भक्तिरसस्य निःसृताभिः प्रवाहिताभिः परमप्रेमोज्ज्वलधाराभिश्चिरकालादद्यावधिर्मुमुक्षवः साधवोऽनुरञ्जिताः परिप्लाविताश्च सन्ति। तत एव भक्तितत्त्वम्, नाममाहात्म्यम्, प्रपत्तिम्, अनन्यशरणागतिम्, अनन्यप्रेमासक्तिप्रभृतितत्त्वञ्च च गृहीत्वा कबीरादयो निर्गुणोपासका भक्तवराः सिद्धाः सन्तो निर्गुणोपासनां प्रचारितवन्तः। परमात्मानञ्च प्रियतमरूपेण, जीवात्मानञ्च प्रियतमारूपेण परिकल्प्य भक्तिरसस्य मर्मस्पर्शिणी अभिव्यञ्जना कृता तैः। सा च काव्यगतसौन्दर्येण, भावप्रवणतादृष्ट्या, हृदयग्राहितादृष्ट्या, सरसतादृष्ट्या च सर्वतोभावेनाद्वितीया श्रेष्ठा च वर्तते।

## साधकस्य हि सिद्ध्यर्थं ब्रह्मणो रूपकल्पनम्

प्रतिपादितं च पूर्वं निर्गुणं निराकारं निरुपाधि निर्विकारं च ब्रह्म विद्यते। तदेव ब्रह्म केवलं सत्यम्, अन्यच्च सर्वं मिथ्या परिकल्पितम्, किन्तु व्यावहारिकदशायां तदेव ब्रह्म चिदचिदीश्वरेति रूपत्रयं प्राप्नोति। अपि च निष्पादितं यदाध्यात्मिकसाधनाया सर्वाधिकः सरलः सहजबोधगम्यश्च राजमार्गो भक्तिसाधनैवास्ति। यतो हि भक्तिरेव भगवन्तं प्रति भक्तस्य मधुरमनोरागो विद्यते। भक्तिरससाधनायां भगवन्तं प्रति भक्तस्य तन्मयताऽऽत्मनिवेदनासक्तिश्च चरमोत्कर्षं प्राप्नोति, किन्तु तादृशी भक्तिर्निर्गुणोपासनायां न सम्भवति। यतो हि स्वयमेव भगवता श्रीकृष्णेन प्रोक्तं गीतायाम् 'अव्यक्तपरब्रह्मणि चित्तं समावेशितुं महत्कष्टमनुभूयते, यतो हि देहिभिरव्यक्ततत्त्वं महत्क्लेशेन[1] प्राप्यते। अत एव ये साधका नैरन्तर्येण ऐकाग्र्यबुद्ध्या श्रद्धया च भगवति मनः समावेशयन्तः सगुणपरमेश्वरं भजन्ते, ते योगिष्वपि सर्वश्रेष्ठाः परिगण्यन्ते। तादृशान् भक्तान् भगवान् त्वरितमेव जननमरणरूपसंसारसागरात् समुद्धरति[2]। तदेव कारणं प्रतीयते सगुणोपासनां प्रति भक्तानामौन्मुख्यस्य।

---

१. क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतषाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ श्रीमद्भगवद्गीतायाम् १२।५
२. श्रीमद्भगवद्गीतायाम्–१२।७।

भक्तिसमापन्नभक्तहृदयस्य सात्त्विकाऽनन्यासक्तिस्तु सगुणं साकारं भगवन्तं प्रत्येव सम्भवति। यतो हि भक्तिभावे मनस ऐकाग्र्यमावश्यकमेव, तत्तु श्रद्धया प्रेम्णैव शक्यतेऽधिगन्तुम्। अत एव ऐश्वर्यसौन्दर्यबोधः, प्रेम्ण उद्बोधनाय नितान्तमपेक्ष्यते। उद्बोधितानुरागस्य स्थैर्याय च कस्यापि आश्रयस्याऽऽवश्यकताऽनुभूयते। भक्तिसाधना-क्षेत्रे तस्या आवश्यकतायाः परिपूर्त्तय एव सगुणस्य साकारस्य ब्रह्मणः कल्पना जाता, यत्र साधकः स्वस्वभावानुसारेण स्वोपास्यस्य चयनं करोति। वचसाऽप्रकाश्यं मनसा बुद्धया चाग्राह्यं परमात्मतत्त्वं यदा भक्तस्य मनोमन्दिरे प्रकटी भवति तदा तत्तद्-भक्तहृदयस्य मधुरभावबन्धनं स्वीकृत्य तस्य भक्तस्य भावगृहीतरूपेऽभिव्यज्यते तत्परमात्मतत्वम्। ब्रह्मणस्तदेव भावगृहीतरूपं भक्तिरससाधनाया मूलाधारो विद्यते।

भारतीयतत्त्वविदां मनीषिणां मते भगवतो ज्ञानाश्रितं भावाश्रितं चेति रूपद्वयं भवति। तत्र ज्ञानाश्रितं रूपं कल्पनातीतमनिर्वचनीयं च। किन्तु भावाश्रितरूपस्य सम्बन्धस्तु भक्तानां हृद भावेन यस्य सह भवति। अतिसूक्ष्मं परमात्मतत्त्वं भक्तानां भावानुसारेण भक्तमनोमन्दिरे प्रकटतामेति। तेषां च मनोभावस्य मधुरभावबन्धने च स परमात्मा निबद्धयते। साधकस्य मनोवृत्त्यनुसारेण स्वामि-सखि-कान्तादिभावे-ष्वभिव्यज्यते स परमात्मा।

भक्तिकाले साधका भगवतो भावाश्रितरूपमतिमनोहरतया चित्रितवन्तः। मनोवाग्भ्यामगम्यस्य, अगोचरस्य, अचिन्त्यस्य परमात्मनो नाम्नः रूपस्य च कल्पनया रागमयभक्तिभावस्य दिव्यभावभूमिर्भक्तैः संस्थापिता, यस्यां सम्पूर्णं चराचरं जगत् सन्निवेश्यते। आत्मपरमात्मनोश्च दाम्पत्यप्रेमसम्बन्धस्य चोद्भावनया जीवब्रह्मणोश्च तादात्म्यस्य मधुररूपदर्शनार्थं भावितद्वैतेऽद्वैतस्य साक्षात्काराय लौकिकानुरागस्य चा-लौकिकानुरागरूपेण प्रकाशनायेयं मधुरभावयोजनाऽभूतपूर्वाऽद्भूता च परिज्ञायते। वैष्णवसाधनायां भगवतो नामरूपस्य चोपासनाया एतदेव रहस्यं ज्ञायते। यस्य प्रचुरप्रभावो निर्गुणोपासनायामपि दृष्टिगोचरी भवति। भक्तिकालस्य सर्वासु प्रेमसाधनासु येन केनापि प्रकारेण नामोपासनाया रूपोपासनायाश्च महत्त्वं स्वीकृतमेव, यतो हि निर्गुणं निराकारं ब्रह्म यावद् नामरूपयुक्तो न भवति तावद् तद् ब्रह्म सर्वजन-सुलभं बोधगम्यं सर्वलोकग्राह्यञ्च भवितुं नार्हति। भगवतो नामस्मरणस्येदमेव तात्पर्यं यत्तस्य भावाश्रितरूपस्य सततमनुचिन्तनमेव। भगवतो रूपं ज्ञानं च तस्य नामाधीन-मेव,। भगवतो रुपमेनं द्वारीकृत्यैव साधका अनादि, अचिन्त्यम्, अगोचरञ्च ब्रह्म जानन्ति। ते च प्रेमाञ्जनच्छुरितभक्तिरूपलोचनाभ्यामहर्निशं ब्रह्म साक्षात्कुर्वन्ति प्रेमाञ्जनेनानुरञ्जितं च कृत्वाचिन्त्यगुणगणप्रकाशं निरूपं ब्रह्म स्वमानसमन्दिरे

सततमनुपश्यन्ति[1]।

## भगवतो नामरूपयोश्चोपासना

पूर्वोक्तविवेचनानुसारेण दृश्यते यत् नामरूपयोश्चोपासनाया मौलिकविशेषता परिलक्ष्यते भक्तिसाधनायाम्। सौगतानां प्रज्ञोपाय—(अद्वयत्व) शून्यता-करुणा-युगनद्ध-मुद्रासाधनासु, जैनानां शक्तिकल्पनासु, शैवानां नाथानां च शिव-शक्तिसामरस्ये बीजाक्षरमन्त्राणां जजादिप्रसङ्गेषु प्रकारान्तरेण नामसाधनाया रूपसाधनायाश्च किमपि रूपं लक्ष्यते। धर्मप्राणभारते नामरूपोपासनायाः कल्पना नार्वाचीना, अपि तु तस्य महती परम्परा शास्त्रेषु लभ्यते। छान्दोग्योपनिषदि नामरूपयोश्चोपासना बहुलतया प्राप्यते[2]। श्रीमद्भगवद्गीतायाम् 'यज्ञानां जपयज्ञोऽस्मि' इत्यादिना श्रीकृष्णेन नामजपस्य महिमा प्रतिपादितः। किन्तु साधारणतया नामविशेषस्यैव मन्त्रविशेषस्यैव) जपो भवति। तदानीं भगवतो नामैव महामन्त्रः, तस्य स्मरणमेव जपनमिति मान्यताविद्यते। तेनैव सर्वाः सिद्धयः सिध्यन्ति। अत एव तदानीं भगवतो भावाश्रितरूपमुद्भावितं साधकैः। भगवतः सगुणोपासनाया मूले तदेव भावगृहीतं रूपं परिज्ञायते। किन्तु भावगृहीतं रूपं तु भगवतः पूर्वनिर्धारितस्य यस्य कस्यापि रूदस्याऽऽश्रयो भवति। अत एव सूरदासस्य श्रीकृष्णे हितहरिवंशस्य भावगृहीतरूपे च यद्यपि यत् किञ्चित् पार्थक्यं सम्भाव्यते तथापि तच्छास्त्रसमर्थित श्रीकृष्णस्यैव मधुररूपमेवाऽऽश्रितमस्ति। वस्तुतो निर्गुणोपासनायामपि निर्गुणोपासको भगवतस्तादृशभावगृहीतं गुणगणविशिष्टमेव रूपं ध्यायति। किन्तु तस्य भावगृहीतं रूपं न कस्यापि पूर्वनिर्धारितं शास्त्रसमर्थितं वा रूपमाश्रयति।

निर्णीतमेतत् पूर्वं यद् भक्तिभावापन्नसाधकस्य चेतसि श्रद्धायाः प्रेम्णश्चोद्भावनाय तस्य स्थैर्याय चानन्तसौन्दर्येणानन्तशक्त्यऽनन्तशीलेन च युक्तस्योपास्यस्याश्रयस्य वा महत्यावश्यकतेति। अत एव साधकैराश्रयत्रयमुद्भावितम्—

१—परमात्मनोः मनोमय साकारविग्रहः।

२—परमात्मनः प्रतीकमयं साकारस्वरूपम्

३—परमात्मनो भावनाविनिर्मितो विग्रहश्च

---

१. प्रेमाञ्जनच्छुरितभक्तिविलोचनेन, सन्तः सदैव हृदयेऽप्यवलोकयन्ति।
यं श्यामसुन्दरमचिन्त्यगुणप्रकाशं, गोविन्दमादिपुरुषं तमहं भजामि॥
—ब्रह्मसंहितायाम्—

२. कृष्णाय देवकीपुत्राय　　　　—छान्दोग्योपनिषदि—३।१७।६।

मनोमयविग्रहः—तत्र परमात्मनो मनोमयसाकारविग्रह ऋग्वेदस्य पुरुषसूक्तेषु समुपलभ्यते। तत्र विराट्पुरुषस्य स्वरूपं प्रतिपादितं यत् तस्य परमात्मनः सहस्त्रं शिरांसि, सहस्त्रं नेत्राणि, सहस्त्रं पादांश्च वर्तन्ते। यद्यपि समग्रपृथ्वी तेन परिव्याप्ता तथापि स केवलं दशाङ्गुलमात्रमेव विद्यते[1]। एवमेव श्रीमद्भगवद्गीतायामपि भगवत आश्चर्यकराणि नानाविधानि दिव्यानि स्वरूपाणि वर्णितानि सन्ति[2]। अपि च श्वेताश्वतरोपनिषदि वर्णितं यत् जगतः सर्गस्थितिनाशरूपकार्यत्रयसम्पादनायैकस्यैव ब्रह्मणो ब्रह्म-विष्णु-शङ्कराख्यरूपत्रयं भवति[3]। अर्थादेकमेव ब्रह्म रजोगुणाश्रयत्वेन जगत्सृजति, सत्त्वगुणाश्रयत्वेन तत्पालयति तमोगुणाश्रयत्वेन च तद् विनाशयति। अत एव तद् ब्रह्म त्रिगुणात्मकं कथ्यते[4]। एवमेव निर्गुणोपासकैरपि भगवतोऽनन्त-शक्तिः, अनन्तकमनीयसौन्दर्यम्, परमप्रकाशश्चेति वर्णितानि। इत्थञ्च तैरपि तस्य विश्वरूपदर्शनायैव परमात्मनो महिमा वर्णितः।

**भगवतः ( ब्रह्मणः ) प्रतीकमयं साकाररूपम्**

वैदिकसंहितासु ब्रह्मणः प्रतीकस्य कल्पना मूर्तामूर्तरूपेण दृश्यते। तत्र तैत्तिरीयोपनिषदि ब्रह्मणः स्वरूपमन्नमयम्, प्राणमयम्, मनोनयम्, विज्ञानमयम्, आनन्दमयं चापि प्राप्यते[5]। बृहदारण्यके चोपदिष्टं यदादित्ये, चन्द्रमसि, विद्युति, आकाशे, वायौ, अग्नौ, दिक्षु च समवस्थितः पुरुष एवोपासनीय इति[6]। एवं च दृश्यते प्रतीकीकरणं तु मनुष्याणां स्वभाव एव विद्यते। तेषां सम्पूर्णजीवनमेव प्रतीकमयम्। अत एव मानवजीवनस्य सर्वेषु क्षेत्रेषु प्रतीकोपासनाया बाहुल्यं वर्तते। धर्मसाधनासु भक्तिसाधनासु वा प्रतीकीकरणस्य सर्वाधिकं महत्त्वं दृष्टिगोचरी भवति। हिन्दूधर्मे

---

१. सहस्त्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥—ऋग्वेदे १०।६०।१

२. पश्यादित्यान् वसून् रुद्रानश्विनो मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत॥ श्रीमद्भगवद्गीतायाम् ११।६

३. एको हि रुद्रो न द्वितीयाय तस्थुर्य इमांल्लोकानीशत ईशनीभिः।
प्रत्यङ्जनास्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः॥
—श्वेताश्वतरोपनिषदि ३।२

४. रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः॥ कादम्बर्याम् १

५. तैत्तिरीयोपनिषदि— — — — — — — —भृगुवल्ल्याम् ३।५।

६. बृहदारण्यकोपनिषदि ३।१-१२ तथा मानसोल्लासे ३।२७-३१।

धार्मिकसंस्कारस्य, कर्मकाण्डस्य, मन्दिराणां निर्माणस्य, रूपकल्पनायाश्च विशेषमहत्त्वं परिलक्ष्यते। परमात्मा निराकारोऽस्ति, नाम प्रतिमा च तस्य तु प्रतीकं विद्यते। ओङ्कार-स्वयम्भू-विश्वकर्मा-प्रजापति-सच्चिदानन्देत्यादयः शब्दास्तस्य शाब्दिकानि प्रतीकानि सन्ति। भक्तिकालिकाऽऽस्तिकमूलकभावधारा तु ब्रह्मणः प्रतीकमयैः साकारस्वरूपैः परिपूर्णा वर्तते। निर्गुणभक्तिधारायां तु सर्वं प्रतीकद्वारेणैवाभिहितम्। साधकैः परमात्मनः प्रतीकानि स्वस्वभावानुसारीणि परिकल्प्यन्ते। सामान्यतयाऽनिर्वचनीयत्वेनोपास्यस्य दिव्यानुभूतिविषयकः सर्वोऽपि व्यवहारः प्रतीकात्मक एव दृश्यते।

ईदृशमुपासनं द्विविधमिति सायणाचार्येणोक्तम्-एकम् अहङ्ग्रहयुक्तम्, अपरं प्रतीकविषयकम्। आद्यस्योदाहरणं यथा—हृदयाकाशवर्ती परमात्माख्यः पुरुषः मनोमयत्वादिगुणयुक्त उपास्यते। द्वितीयस्योदाहरणं—यथा पृथिवीपूर्वरूपम् (तैत्तिरीयारण्यके ७ ३) इत्यत्र भूदेवदृष्ट्या संस्कृतं पूर्ववर्णस्वरूपमुपास्यते। एतत् तैत्तिरीयारण्यकभाष्ये श्रीसायणेन सुस्पष्टं प्रत्यपादि[२]।

## भगवतो (ब्रह्मणः) भावनाविनिर्मितस्वरूपम्

उपासनायाः परमं लक्ष्यं भगवत्प्रीत्या भगवत्सान्निध्यप्राप्तिरेव। अत एव भक्तिभावापन्नैः साधकैः स्वोपास्ये सर्वोत्तममानवीया गुणाः समारोप्यन्ते। यतो हि तैरेव गुणगणैर्विशिष्टः साधकः साध्यस्य सान्निध्यं प्राप्नोति। सामान्यतो दृश्यते सर्वे मनुष्याः पञ्चविधरसैर्भावैर्वा परस्परं सम्बद्धा भवन्ति। ते च पञ्चरसाः–शान्तभक्तिरसः, दास्यभक्तिरसः, सख्यभक्तिरसः, वात्सल्यभक्तिरसः, मधुरभक्तिरसश्चेति। तत्र विलोक्यते कैश्चिदात्मीयजनैः स्वसम्बन्धी सर्वतोभावेन सत्क्रियते। स्वजन च विलोक्य श्रुत्वा वा

---

२. द्विविधान्युपासनानि। अहंग्रहयुक्तानि प्रतीकविषयाणि चेति। येषु परमात्मा सगुणः सन्नुपास्यते तान्यहंग्रहयुक्तानि। तद्यथा–'स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मय' इति (तै० आ० ७।६) अत्र हृदयाकाशवर्ती परमात्माख्यः पुरुषो मनोमयत्वादिगुणयुक्त उपासितव्यः परमात्माहमिति। परमात्मा व्यतिरिक्तानि लौकिकानि वस्तून्युत्कृष्टदेवतादृष्ट्या ब्रह्मदृष्ट्या वा संस्कृत्य यत्रोपास्यन्ते तानि प्रतीकविषयाणि। तद्यथा–'पृथिवी पूर्वरूपम्' (तै० आ० ७।३) इत्यत्र भूदेवदृष्ट्या संस्कृतं पूर्ववर्णस्वरूपमुपास्यम्। 'मनो ब्रह्मेत्युपासीत' (छा० उ० ३।१८।१) इत्यादौ ब्रह्मदृष्ट्या संस्कृतं मनः प्रभृतिकमुपास्यम्। तच्च प्रतीकमुपासकेन न स्वात्मतया ग्रहीतव्यम्। प्रतीकस्य ब्रह्मकार्यत्वेनोत्कृष्टदृष्टिप्रत्यालम्बनत्वात् प्रतीकमित्युच्यत इति–तैत्तिरीयारण्यके ७।३

यद्यप्यानन्दोऽनुभूयते तथापि तं स्वजनं प्रति तस्य तादृशी ममत्वबुद्धिर्नोदेति, यया सः स्वसर्वसुखं विहाय नैरन्तर्येण सम्बन्धिनः सुखार्थं यत्नं कुर्यात् । अत एव सम्बन्धिनं प्रति तस्य प्रीतिः पूर्णतः क्रियाशीला न भवति, अर्थात् सम्बन्धिनं प्रति तेन सर्वदा औदासीन्येन स्थीयते । अत एव साधकैस्तत्र शान्तरसोऽनुभूयते । तदतिरिक्तजनस्तु दिवानिशं स्वजनं सुखयति निःस्वार्थभावेन । सम्बन्धिनं प्रति तस्य सर्वदा ममतामयी वृत्तिः कार्यं करोति, या वृत्तिः शान्तरसाश्रयजनेषु न प्राप्यते । तत्र साधकैर्दास्यरसः स्वाद्यते । तद् भिन्नो जनः कौतुकक्रीडया सहयोगेन च स्वजनाय प्रगाढप्रीतिं प्रकरोति । शान्त-दास्यापेक्षया तत्राऽऽन्तरिकभावस्य प्राधान्यं भवति । अत एव तत्र सख्यरसः समनुभूयते । जननीजनकयोर्ममताया आधिक्यं यत्र भवति, यत्र च पितरौ वात्सल्यरस-द्वारा पाल्यबुद्ध्याऽनुशासनबुद्ध्या च सख्यरसापेक्षयाऽधिकप्रगाढस्नेहेन पुत्रं पालयतः, तत्र रसज्ञैर्वात्सल्यरसोऽभिधीयते । पूर्वोक्तसर्वापेक्षया सर्वोपरि ममता, प्रीतेः प्रगाढता, अनन्यभावस्य तादात्म्यभावस्य वा पुरिपुष्टता, कान्ताया माधुर्यमधुवेष्टितौज्ज्वल्यञ्च च यत्र भवति तत्र मधुररसो रसज्ञैरास्वाद्यते । यतो हि स्वीयं सर्वस्वं प्रदानेऽपि तादृशी बलिष्ठा, संभ्रमरहितमधुररसभयी सेवा कुत्रचिदपि केष्वपि सखिसम्बन्धेषु नोपलभ्यते। तत्रापि सा प्रीतिर्यदि परकीयाभावेनानुष्ठीयेत तदा रसास्वादने सर्वोत्तममाधुर्यस्य पराकाष्ठा जायते । यद्यपि सा प्रीतिर्लौकिकदृष्ट्या निन्दनीयैव, अत एव सर्वसामान्यानां कृते वर्जनीयैव । किन्तु भक्तिसाधनायां सैव साधकैश्चीरसाधनीया विद्यते । तादृशोपा-सनायां दत्तचित्तः साधको मुक्तिमपि नाभिलषति । यतो हि माधुर्यरसज्ञानां साधकानां चरमं लक्ष्यं तु तादात्म्यभावेन भगवत्प्राप्तिरेव । तेषां कृते तदुपायस्तु भक्तिरेवोभिधेया। तेषां साधकानां प्रेममहाधनमेव परमप्रयोजनं भवति । इत्थं च भगवत्प्रेमा एव साधकानां निःश्रेयसकरो विद्यते[1] । एवं च भक्तिरसाधनायामपि कान्ताभावोपासनाया एव वैशिष्ट्यं विद्यते । अन्यापेक्षया सा कान्ताभावोपासना एव भक्तिरसज्ञानां कृते परमा-दरणीया, अन्ते प्राप्तव्या च विद्यते । अस्यां पद्धत्यां साधकैः परमात्मा पतिरूपेण स्वीक्रियते, आत्मानश्च साधकास्तस्य पत्नीत्वेनाभिमन्यन्ते । अर्थात् स्वभावनया जीवात्मरूपसाधकाः परमात्मरूपसाध्य पतिरूपेणोपासते ।

---

१. किन्तु प्रेमैकमाधुर्यभुजः एकान्तिनो हरौ ।
नैवाङ्गीकुर्वते जातु मुक्तिं पञ्चविधामपि ॥
तत्राप्येकान्तिनां श्रेष्ठा गोविन्दहृतमानसाः ।
येषां श्रीशप्रसादोऽपि मनो हर्तुं न शक्नुयात् ॥
सिद्धान्ततस्त्वभेदेऽपि श्रीकृष्णश्रीशरूपयोः ।
रसेनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः ॥

—भक्तिरसामृतसिन्धौ १।२।१६-१८ ।

## भक्त्यर्थं कल्पितं द्वैतम्

भक्तिरससाधनायां यद्यपि मूलेऽद्वैतं किन्तु भगवत्प्रीत्या सान्निध्येन च प्राप्तानन्दस्य रसास्वादनाय भावितं द्वैतमप्यस्ति। यत्र निराकारः साकारो भवति, यत्र च निर्गुणं ब्रह्म स्वाचिन्त्यशक्त्याऽप्राकृतगुणगणान् स्वीकरोति। यत्र च वैषयिकसुखं सुखस्वरूपस्य परमात्मनोऽ शायते, यत्र च सर्वव्यापकः परमात्मा परमप्रेमास्पदीभूय रसमयः प्रेममयो जायते, यत्र च प्रीतिः प्रभोः स्वभावतया दृश्यते, यत्र च रसमयः परमात्मा रसं लब्ध्वाऽऽनन्दितो भवति, एवं च यत्र भावितं द्वैतमद्वैतादपि श्रेष्ठतया समनुभूयते। एवं च भक्तिरसास्वादनाय वस्तुतोऽद्वैततया वर्तमानस्य ब्रह्मणो द्वैततया कल्पना आवश्यक्यैव विद्यते।

भारतीयतत्त्वविदां मते नारीनरयोः प्रकृतिपुरुषयोरात्मपरमात्मनोश्चैक्यमेव विद्यते, परस्परमुभौ उभयोः पूरको स्तः[1]। अत एवोभयोः परस्परमुभौ लब्ध्वा पूर्णता प्राप्तेमधुर-जिज्ञासा तिष्ठति। तयोः पूर्णमिलनं तु दाम्पत्य-माधुर्यभाव एव सम्भवति। तदेव भक्तिरसस्य परमं तत्त्वमस्ति। अपि च पारमार्थिकसत्तापेक्षया भजनोपयोगिनी किञ्चिन्न्यूनसत्ताऽपि सत्यतया स्वीक्रियते साधकैः, येन पारमार्थिकचरमसत्ताया अद्वैते न कापि क्षतिर्भवति। अद्वैतज्ञाने सति यदि भजनोपयोगितया द्वैतं परिकल्प्य भगवति भक्तिर्विधीयते तदा तादृशी भक्तिर्मुक्तिशतादपि श्रेष्ठतमा भवति साधकानां तत्त्वविदां कृते। प्रत्यक्चैतन्याभिन्नब्रह्मणो विज्ञानात् पूर्वं द्वैतज्ञानं जीवबन्धनस्य कारणं भवति, किन्तु ब्रह्मविज्ञानानन्तरं भेदमोहस्य नाशे सति भक्त्यर्थं भावितं द्वैतमद्वैतादपि श्रेष्ठतममनुभूयते साधकैः[2]। एवं च ज्ञायते सगुणोपासकानां मधुरोपासना, निर्गुणोपा-सकानां च माधुर्यमयरहस्यवादश्चाद्वैतज्ञानानन्तरं भावितद्वैतस्य मधुराभिव्यक्तिर्वर्तते। तद्द्वारा भक्तिरसधारा भक्तान् साधकान् च परिप्लावयति दिवानिशम्।

---

१. पुमानर्द्धं पुमांस्तावद् यावद् भार्यां न विन्दति। भविष्यपुराणे ७ अध्याये,
अर्धो हवा एष आत्मनो यज्जाया तस्माद् यावज्जायां न विन्दते, नैव
तावत् प्रजायते तथा च असर्वो हि तावद् भवति। अथ यदैव जायां विन्दते
ऽथ प्रजायते तर्हि हि सर्वो भवति। ————शतपथब्राह्मणे ५।२।१।१।१०
स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नीचाभवताम्———
बृहदारण्यकोपनिषदि १।४।३

२. द्वैतं मोहाय बोधात् प्राक् जाते बोधे मनीषया।
भक्त्यर्थं भावितं द्वैतमद्वैतादपि सुन्दरम्॥ ४२॥
पारमार्थिकमद्वैतं द्वैतं भजनहेतवे।
तादृशी यदि भक्तिः स्यात् सा तु मुक्तिशताधिका ॥ ४६॥ बोधसारे

# सांख्यदर्शने भक्तिरसस्वरूपम्

सांख्यदर्शनस्य परिचयः–सांख्यदर्शनस्य प्रतिष्ठापकः कपिलाचार्य आसीत्। सम्यक् ख्यानं संख्या संख्यैव सांख्यं प्रकृतिपुरुषविवेकात्मकं विशिष्टं ज्ञानं सांख्यमिति व्युत्पत्त्या सम्यक्प्रकारेण प्रकृतिपुरुषमहदहङ्कारमनः पञ्चज्ञानेन्द्रिय-पञ्चकर्मेन्द्रिय-पञ्चतन्मात्रा-पञ्चमहाभूतरूपपञ्चविंशतितत्त्वानां यथार्थज्ञानं सांख्य[1]मित्यहिबु[2]-घ्न्यसंहिता[2]-ब्रह्मपुराण[3]-भागवत[4]-मत्स्यपुराण[5]-चरकसंहिता[6]दिषु प्रतिपादितमिति। प्राचीनकाले दोषगुणमीमांसायां दार्शनिकतत्त्वविवेचनार्थे वा सांख्यशब्दस्य प्रयोगो दृश्यते[7]। श्वेताश्वतरोपनिषद[8]नुसारेण सांख्यशब्देन परमात्मा परिज्ञायते।

भारतीयतत्त्वविदां मते प्रकृतिपुरुषयोः पारस्परिकभेदस्याज्ञानेनैव दुःखमयस्य जगतः सत्ता विद्यते। तज्ज्ञाने सति तु आधिभौतिकाऽऽधिदैविकाऽऽध्यात्मिकदुःखस्याऽऽत्यन्तिकनिवृत्तिर्भवति। तत्र विवेकः कारणम्, दुःखनिवृत्तिस्तु कार्यं विद्यते। तादृशज्ञानस्य पारिभाषिकी संज्ञा तु 'प्रकृतिपुरुषान्यथाख्यातिः' अर्थात् प्रकृतिपुरुषयोः सम्यक्विवेक इति। संख्याद्वारा प्रकृतिपुरुषयोर्ज्ञानम्, ततो दुःखस्याऽऽत्यन्तिकनिवृत्तिरिति प्रतिपादितमत्र। अत एव दर्शनमिदं 'सांख्यदर्शन' मिति कथ्यते[9]। सांख्यदर्शनस्थपञ्चविंशतितत्त्वज्ञानानन्तरमेव जटी, मुण्डी, शिखी वा कोऽपि संसारबन्धनात् विमुच्यते[10]।

सांख्यसिद्धान्तानुसारेण प्रकृतिपुरुषौ आद्यन्तरहितमूलतत्त्वरूपेण वर्तेते।

---

१. पञ्चविंशतितत्त्वज्ञानं सांख्यम्–कृत्यकल्पतरौ मोक्षकाण्डे पृष्ठे १६५।

२. संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते–अ० बु० सं०–प्राकृतखण्डे

३. सांख्यदर्शनमेतावत् परिसंख्यानमुच्यते —ब्रह्मपुराणे

४. प्रसंख्यानाय तत्त्वानां समन्तादात्मदर्शने —भागवते

५. सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते —मत्स्यपुराणे

६. साख्यैः संख्यातसंख्येयैः —चरकसंहितायाम्

७. दोषाणाञ्च गुणानाञ्च प्रमाणं प्रविभागतः।
किञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम्॥ —महाभारते

८. श्वेताश्वतरोपनिषदि ६।१३।

९. भारतीयदर्शने पृष्ठे ३१० श्रीबलदेवोपाध्यायस्य।

१०. पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥ ६।११
—श्रीशङ्कराचार्यकृतसर्वदर्शनसिद्धान्तसङ्ग्रहे।

श्रीमद्भगवद्गीतायामपि तदेव समर्थितं भगवता श्रीकृष्णेन[1]। पुरुषस्य संयोगेन प्रकृतेः साम्यावस्था नश्यति। येन सा वैषम्यावस्थां प्राप्नोति, अपि च सा क्रियाशक्तियुक्ता जायते। यस्य परिणामस्वरूपेण महदादिक्रमेण पञ्चविंशतितत्त्वानि जायन्ते। पुरुषः स्वभावतः प्रकृतावनासक्तः किन्तु जगति प्रकृतेः क्रियाकलापेन सह सम्बद्ध इव प्रतिभाति। स्वसत्तायाः सम्यक्ज्ञानेमेव पुरुषस्य कैवल्यम् (मोक्षः)। सांख्यदर्शनस्य सत्कार्यवादसिद्धान्तानुसाणाभिव्यक्तेः पूर्वमपि कारणे कार्यस्य सत्ता विद्यत एव। सांख्यदर्शनानुसारेण कस्यापि पदार्थस्य नोद्भवो न च विनाशो भवति। किन्तु केवलं कर्त्तृव्यापारेणाव्यक्तवस्तु व्यक्तं भवति, पुनः क्रियाशैथिल्ये सति तत्स्थूलवस्तु सूक्ष्मत्वं प्राप्नोति। अपि च सर्वे लौकिकाः पदार्थाः गुणत्रयसम्पन्नाः सन्ति। अतस्तेषु साम्यभावो वर्तते। जगतो मूलकारणं प्रकृतिमात्रमेव। तस्माद् महत्तत्त्वम्, तस्मादहङ्कारः, तस्मान् मनः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चतन्मात्रा, पञ्चमहाभूतानि च जायन्ते।

**सांख्यसृष्टिक्रमः**

(१) पुरुषः (उदासीनः)

(२) प्रकृतिः

(३) महान्

(४) अहङ्कारः

| सात्त्विकोऽहङ्कारः | राजसोऽहङ्कारः | तामसोऽहङ्कारः |
|---|---|---|
| (५) मनः, पञ्चज्ञानेन्द्रियाणि | पञ्चकर्मेन्द्रियाणि | पञ्चतन्मात्राः |
| (६) चक्षुः | (११) वाक् | (१६) शब्दतन्मात्रा |
| (७) श्रोत्रम् | (१२) पाणिः | (१७) स्पर्शतन्मात्रा |
| (८) घ्राणम् | (१३) पादः | (१८) रूपतन्मात्रा |
| (९) जिह्वा | (१४) पायुः | (१९) रसतन्मात्रा |
| (१०) त्वक् | (१५) उपस्थः | (२ ) गन्धतन्मात्रा |

—तेभ्यः पञ्चमहाभूतानि

१. प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥ श्रीमद्भगवद्गीतायाम् १३।१९।

(२१) आकाशः
(२२) वायुः
(२३) तेजः
(२४) जलम्
(२५) पृथिवी[1]

## सांख्यदर्शनस्य 'पुरुषः'

सांख्यसिद्धान्तानुसारेण पुरुषो निर्गुणो निर्लेपश्च वर्तते। प्रकृतिपुरुषयोः संसर्ग एव जगत्कारणम्। पुरुषस्य सत्ता सिद्धयर्थं सांख्यशास्त्रे निम्नाङ्किता युक्तयः स्थापिताः सांख्यतत्त्वज्ञैः

पुरुषारिरिक्त पूर्वोक्तचतुर्विंशतिपदार्थानां सत्ताऽन्यस्य प्रयोजनाय। एतेभ्योऽन्यो यः, सः पुरुषः। एतस्य पुरुषस्य कृत एव प्रकृतिमण्डलम्[2]। स च पुरुषो जन्ममरणकारणानां प्रतिनियमात्, अयुगपद् प्रवृत्तेः, त्रैगुण्यविपर्ययाच्च नानाविधः, अर्थात् प्रतिशरीरं भिन्नो वर्तते[3]। तत्सर्वं प्रतिपादितं श्रीगौडपादाचार्यकृतभाष्ये[4]। स च पुरुषः चैतन्यस्वरूपो विद्यते। अयमेव योगे 'पुरुषविशेष ईश्वरः' इत्युच्यते[5]।

## प्रकृतिः

सांख्यदर्शने सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति कथ्यते। सैव प्रकृतिः प्रधानम्, माया, परमेश्वरीशक्तिः, जडप्रपञ्चोपादानमित्यादिपदैर्दर्शनान्तरेषु व्यवह्रियते[6]।

---

१. प्रकृतेर्महांस्ततोऽहङ्कारस्तस्मात् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥ सांख्यकारिकायाम् २२

२. सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावाद् कैवल्यार्थं प्रवृत्तेश्च ॥ सांख्यकारिकायाम् १७

३. जन्ममरणकारणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ सांख्यकारिकायाम् १८

४. सांख्यकारिकायाम् १७ कारिकाया गौडपादभाष्ये।

५. क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः—योगसूत्रे १।२४।

६. प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था शङ्कराचार्यः—
प्रधानशब्देन मायाशक्तिरुच्यते आनन्दगिरिः—
प्रकृतेः परमेश्वर्याः सत्त्वरजस्तमोगुणात्मिकायाः देवात्मशक्तिं स्वगुणैर्निगूढामिति श्रुतिप्रसिद्धायाः शक्तेर्गुणैः कार्यकारणसङ्घात्मकैः—नीलकण्ठाचार्यः

## जगत्स्वरूपम्

सांख्यदर्शने यद्यपि पुरुषः प्रकृतिश्च चेतनत्वजडत्वाभ्यां परस्परं भिन्नौ, किन्तु पङ्ग्वन्धपुरुष[1]योरिव तयोः सृष्ट्यर्थं संयोगस्तेन जगदाविर्भवति। अयमेव सांख्ययोगयोः सत्कार्यवाद[2] इति कथ्यते। तत्र पुरुषः कूटस्थः, अकर्ता चास्ति। प्रकृतिश्चानादिस्तथा जगतश्चोपादानकारणमस्ति। पुरुषसंयोगाज्जडापि प्रकृतिः चैतन्यवतीव

---

प्रकृतिर्माया सत्त्वरजस्तमो गुणमयी मिथ्याज्ञानात्मिका परमेश्वरी शक्तिः--

—श्रीमधुसूदनाचार्यः

'प्रकृतेः क्रियमाणानि' श्रीमद्भगवद्गीतायाः ३।२७ तत्तद्भाष्ये प्रयुक्तप्रकृतिशब्दार्थः।

प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः—

श्रीमद्भगवद्गीतायाः ३।३३ शाङ्करभाष्ये।

मायाख्या परमेश्वरी शक्तिरनिर्वचनीयस्वभावा त्रिगुणात्मिका-

श्रीमद्भगवद्गीतायाः ७।४ मधुसूदनीटीकायाम्।

जडप्रपञ्चोपादानभूता—श्रीमद्भगवद्गीतायाः ७।४ नीलकण्ठीटीकायाम्

'प्र' प्रकर्षेण वैषम्यावस्था परिहारेण धीयन्ते निधीयन्ते विद्यन्ते सत्त्वादिगुणा यस्मिंस्तत्प्रधानं सत्त्वरजस्तमोरूपम्। सांख्यकारिकायाः

८, बालरामोदासीनकृतायां विद्वत्तोषिणीटीकायाम्।

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता॥

—देवीभागवते ६।१।५, ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे १।३।

सत्त्वरजस्तम इति गुणत्रयमुदाहृतम्। साम्यावस्थितिमेतेषामव्यक्तप्रकृतिं विदुः॥
सैव मूल प्रकृतिः स्यात् प्रधानं पुरुषोऽपि सः। यामलतन्त्रे

१. पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ सांख्यरिकायाम् २१

२. असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥ सांख्यरिकायाम् ६।

प्रतिभाति[१]।

प्रकृतिपुरुषयोश्च शाश्वतमधुरोऽयं सम्बन्धो जडविषयके सति लौकिकश्रृङ्गाररस-रूपेण चिज्जगद्विषयके सति तु अलौकिकभक्तिरसरूपेण परिणमते।

## सांख्यशास्त्रं निरीश्वरं सेश्वरं वा

सामान्यतया सांख्यशास्त्रं निरीश्वरत्वेन ज्ञायते। किन्तु षड्दर्शनसमुच्चयस्य कर्त्तुर्हरिभद्रस्य 'सांख्याः निरीश्वराः केचित् केचिदीश्वरदेवताः[२]' इति कथनेन केषांचिन्मते सांख्यशास्त्रं निरीश्वरं केषाञ्चिन्मते च सेश्वरं वा विद्यते। उपनिषत्सु प्रतिपादित-सांख्यसिद्धान्तानुसारेण सांख्यं तु सेश्वरमेव प्रतीयते। यतो हि तत्र प्रकृतिपुरुषयोः परं ब्रह्मसत्ता स्वीक्रियते, एवं च तत्र सांख्यपुरुषा ब्रह्मांशभूता एव स्वीकृताः। एवमेव महाभारत-भागवतादिपुराण[३]-गीता-मनुस्मृत्यादिशास्त्रेषु सेश्वराः सांख्यसिद्धान्ता एव प्रतिपादिताः। अश्वघोषस्य बुद्धचरितानुसारेण अराडाचार्यात् गौतमबुद्धेनापि सेश्वरमेव सांख्यमधीतम्। किन्तु सांख्यकारिकायामीश्वरकृष्णेन प्रतिपादितं सांख्यं निरीश्वरमेव वर्तते। सांख्यप्रवचनभाष्ये तु विज्ञानभिक्षुणा सेश्वरं सांख्यं प्रतिपादितम्। एवं च सांख्यसूत्रस्य व्याख्यातुरीश्वरकृष्णस्यानुसारेण सांख्यदर्शनं निरीश्वरं तथा विज्ञानभिक्षु-मतानुसारेण सांख्यंदर्शनं सेश्वरं वर्तते। इत्थं च सांख्यदर्शनं निरीश्वरं सेश्वरञ्चेति

१. तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः॥ सांख्यरिकायाम् २०
जडाहं तस्य संयोगात् प्रभवामि सचेतना।
अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा॥
यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥
सारस्वती सुषमा २३ वर्षे १ अङ्के पृष्ठ ७७, वि० सं २०२५।

२. षड्दर्शनसमुच्चये-३५ श्लोके, 'मीमांसाशास्त्रं योगशास्त्रं च द्विविधं सेश्वरं निरीश्वरं च'॥ ललितासहस्त्रनामभाष्ये पृष्ठे ६३ प्रपञ्चितवान्।

३. प्रधानं गुणवैषम्यात् सर्गकाले प्रवर्तते।
ईश्वराधिष्ठितात् पूर्वं तस्मात् सदसदात्मकम्॥ —वायुपुराणे १।५।२२
प्रभातायां शर्वर्यां प्रधानपुरुषावुभौ।
प्रविश्य क्षोभयामास मायायोगान्महेश्वरः॥
ततः पुनरशेषाणां भूतानां प्रभवाव्ययात्।
अव्यक्तादभवत्सृष्टिराज्ञया परमात्मनः॥
—शिवपुराणस्य वायवीयसंहितायां पूर्वार्द्धे ६।२२,२३

द्विविधं प्राप्यते। तत्र सेश्वरसांख्यदर्शने पञ्चविंशतितत्त्वातिरिक्तं पृथक्तया ईश्वर-तत्त्वमपि स्वीक्रियते, अत एव मतेऽस्मिन् षड्विंशतितत्त्वानि सन्ति। चरकसंहितायां तु चतुर्विंशत्येव तत्त्वानि निरूपितानि। तन्मते तु प्रकृतिपुरुषयोः स्थाने केवलमव्यक्तमेव स्वीकृतम्, न तु तयोः पार्थक्यं वरीवर्ति। अत एव चतुर्विंशत्येव तत्त्वानि सन्ति सांख्यसिद्धान्ते। षड्दर्शनसमुच्चयस्य भाष्यकर्त्तुर्गुणरत्नस्य मते मौलिकसांख्यम्, उत्तरसांख्यमितिभेदेन सांख्यदर्शनस्य सम्प्रदायद्वयं प्राप्यते। तत्र मौलिकसांख्ये पुरुषवत् प्रकृतिरप्यनेकाः, किन्तु उत्तर सांख्ये तु पुरुषा बहवः प्रतिपादिताः, प्रकृतिस्तु एकैव वर्तते।

भारतीयदार्शनिकतत्त्वविद्राधाकृष्णन्मतानुसारेण सांख्यसिद्धान्तानुसारेणैव भारतीयधार्मिकयुगे विभिन्नवैष्णवाचार्यैः शैववेदान्तिभिश्च विविधदार्शनिकधार्मिक-सम्प्रदायाः स्थापिताः। एवमेव निर्गुणोपासकैः साधकैरपि सांख्योक्तो विकासवादः स्वीकृतः। यत्राण्डादेव सृष्टिर्जायत इति स्वीक्रियते। एवमेव सूरदासादिसगुणोपासकैः भक्तकविभिः सेश्वरं सांख्यमतमेव स्वीकृतम्। तेषां मते सांख्यस्य प्रकृतिरेव त्रिगुणात्मिका माया। एवं च दृश्यते भक्तिकालिकसगुणोपासकैः सेश्वरसांख्यदर्शनस्यैव सृष्टिविकासक्रमः सम्यक्तया स्वीकृतो वर्णितश्च। एवमेव भारतीयभक्तिकालिकसाहित्ये निरीश्वरवादि-सांख्यदर्शनमपि बाहुल्येन निर्गुणोपासकैः स्वीकृतम्। भक्तिपरम्परायां प्रकृतिपुरुषयोः सिद्धान्तः, गुणसिद्धान्तः, तत्त्वसिद्धान्तः, संसारोत्पत्तिसिद्धान्तः, स्थूलसूक्ष्मदेहस्य सिद्धान्तः, इन्द्रियमनोबुद्धीनां च सिद्धान्तः स्पष्टतया प्रतिपादितः। एवं च कालान्तरे उपासनामार्गे सांख्यदर्शनस्य प्रकृतिपुरुषयोस्तत्त्ववादानुसारेणैव जीवात्म-परमात्मनोश्च, शक्तिशक्तिमतोश्च मध्ये दाम्पत्यप्रेमसम्बन्धस्यावतारणा बभूव। या साधनासाहित्यस्य भावात्मकरहस्यवादस्य भक्तिरससाधनायाश्च प्रेरकतत्त्वं वर्तते।

## निरीश्वरं सांख्यम्

सांख्यं निरीश्वरमितिमन्यमानानामाचार्याणां सिद्धान्तस्य सारोऽयम्–( १ ) नित्यः परन्तु अपरिणामी ईश्वरो जगतः कारणं भवितुं नार्हति। भवेच्चेत्तर्हि–उपादानकारणं निमित्तकारणं वा ? तत्रेश्वरो जगत उपादानकारणं भवितुं न शक्नोति, यतो हि स अपरिणामी वर्तते। कार्यं तु उपादानकारणस्य रूपान्तरमात्रमेव भवति।

( २ ) यदि निमित्तकारणत्वेन ईश्वरो जगतः कर्त्ता स्यादिति चेत्तदपि नोचितम्, यतो हि स ईश्वरो निरीहो विद्यते। जगदुत्पादने तस्य न किमपि प्रयोजनं विलोक्यते। 'निष्प्रयोजनं मन्दोऽपि न प्रवर्तते, इति वृद्धोक्तरीत्या चैतन्यपुरुषः ( ईश्वरः ) कथं निष्प्रयोजनं जगत्कार्ये प्रवर्तेत ?

( ३ ) यदि कोऽपि स्वार्थरहितोऽपीश्वरः पुरुषाणां हिताय कल्याणाय वा जगत्कार्ये प्रवर्तत इति वदेत्तदपि समीचीनं नास्ति, यतो हि जगदुत्पत्तेः पूर्वं शरीराभावे पुरुषाणां दुःखाभावात्। अतो मानवानां कल्याणाय जगद्रचनायामीश्वरस्य प्रवृत्तिरित्ययुक्तमेव। यदि पुरुषाणां कल्याणायैव ईश्वरस्य जगद्रचनायां प्रवृत्तिर्भवेच्चेत्तर्हि तस्य सृष्टिरियं केवलं सुखमय्येव भवेत्, किन्तु सृष्टिरियं दुःखमय्येव विलोक्यते। इत्थं च प्रतीयते यत् शशश्रृङ्गवत्, आकाशकुसुमवद् वा ईश्वरः कोऽपि पदार्थो नास्ति। प्रकृतिरेव जगतः कारणं विद्यते। यथा मात्रा भक्षितमन्नं दुग्धतया परिणतं भूत्वा शिशोः कल्याणाय स्वयमेव प्रवर्तते तथैव जडापि सा प्रकृतिः पुरुषहिताय स्वयमेव प्रवर्तत इति।

**सेश्वरं सांख्यम्**

सांख्यं सेश्वरमिति मन्यमानानां विदुषां मते प्रकृतिपुरुषयोः संयोगार्थमीश्वरस्य सत्ताऽवश्यमेव स्वीकर्त्तव्या। तेषां मते पुरुषो निरीहो विद्यते, प्रकृतिश्च जडैवास्ति, तयोः परस्परं संयोगः स्वयमेव भवितुं न शक्नोति। अतस्तयोः साक्षिमात्र ईश्वरः स्वीकर्त्तव्यः। ईश्वरस्य सन्निधानेनैव प्रकृतिः पुरुषेण सह मिलित्वा तथैव जगद्रचनायां प्रवर्तते यथा चुम्बकस्य केवलं सन्निधानेनैव लौहपदार्थे गतिशीलता भवति[1]। अत एव सांख्यशास्त्रे ईश्वरसत्ता स्वीकर्त्तव्या[2]।

## योगदर्शने भक्तिरसस्वरूपम्

**योगशब्दार्थः**

यद्यपि योगशब्दो युजिर् योगे इति धातोः 'युज्यते एतदिति योगः, युज्यते तस्मिन् योगः इत्यादिव्युत्पत्त्या संयोगार्थे प्रयुज्यते किन्तु योगदर्शने तु युज्यतेऽनेनेति योग इति व्युत्पत्त्यनुसारेण समाध्यर्थकयुज् धातोः करणे[3] भावे वा घञ्प्रत्ययानन्तः समाध्यर्थो

---

१. जडाहं तस्य संयोगात् प्रभवामि सचेतना।
   अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा॥

२. श्रीकृष्णमणिकृत 'पौराणिकदर्शनरहस्यविमर्शः' सा० सु० पृ० ७७, २०२५ वि०

३. करणे घञ्प्रत्यय इति सम्प्रज्ञातसमाधिवाचको योगस्तथा भावे प्रत्यय इति असम्प्रज्ञातसमाधिवाचको योगः। तत्र सम्प्रज्ञातसमाधौ निखिलचित्तवृत्तीनां न निरोधः, अपितु अनात्मविषयिकानर्थकारिणीवृत्तीनामेव निरोधो भवति, असम्प्रज्ञाते तु निखिलचित्तवृत्तीनां निरोधो भवतीति तयोर्भेदः।

योगशब्दो निष्पद्यते[1] । दार्शनिकदृष्ट्या जीवात्मपरमात्मनोश्चाभेदसम्बन्ध उभयोरैक्यं वा योग[2] इति । योगबीजग्रन्थानुसारेण जीवात्मपरमात्मनोरैक्यं जीवात्मपरमात्मनोश्च संयोगो वा योगः[3] । जीवात्मपरमात्मनोरेव निर्बीजसमाधिलक्षणः संयोगोऽपि योग[4] इत्युच्यते । एवमेव सर्वविषयकवृत्त्यवरोधपूर्वकं चित्तस्य परमात्मनि नियोजनमपि योग इति[5] । योगसूत्रस्य व्यासभाष्यानुसारेण तु 'योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्मः[6]' इति । इत्थं च परिज्ञायते जीवात्मपरमात्मनोः संयोगरूपो योगो भक्तिरसस्य मूलमिति पूर्वोक्तयोगशब्दस्य तात्पर्यं गृह्यते भक्तिरससाधनायां भक्तिरसज्ञैः साधकैः ।

## समाधेः स्वरूपम्

योगदर्शने समाधेर्महत्त्वपूर्णं स्थानं वर्तते । भक्तिरसस्य लक्ष्यभूतः परमप्रेमाधारः परमात्मा योगदर्शनानुसारेण समाधिना एव प्राप्यते । तत्र समाधिर्नाम यथा लवणं जलसंयोगात् सलिलरूपतां प्राप्नोति तथैवाऽऽत्ममनसोरैक्यं समाधिरिति, अथवा प्राणमनसो समरत्वं समाधिरिति, अथवा सर्वसङ्कल्परहितयोर्जीवात्मपरमात्मनोरैक्यमेव समाधिरिति[7]।

---

१. यथोक्तं वाचस्पतिमिश्रेण-युजसमाधौ इत्यस्माद् व्युत्पन्नः समाध्यर्थो, न तु युजिर्योगे इत्यस्मात् संयोगार्थ इत्यर्थः । न च समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम् । न चाङ्गमेवाङ्गीत्यत आह ॥
पा० यो० सू० १।१।१ व्यासभाष्ये वा० टी० अवतरणभाष्ये ।

२. परेण ब्रह्मणा सार्द्धमेकत्वं सन्नृपात्मज ।
स एव योगो विख्यातः किमन्यद् योगलक्षणम् ॥ विष्णुधर्मोत्तरपुराणे—
ऐक्यं जीवात्मपरमात्मनोराहुर्योगं योगविशारदाः ।
शिवात्मनोरभेदेन प्रतिपत्तिं परे विदुः ॥ षट्चक्रनिरूपणे पृष्ठे ८२

३. योऽपानप्राणयोर्योगः सरजो मनसस्तथा ।
सूर्याचन्द्रमसोर्योगो जीवात्मपरमात्मनोः ॥ योगबीजे

४. श्रीशिवानन्दविरचिते योगचिन्तामणौ पृष्ठे ३ ।

५. वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञपरमात्मनि ।
एकीकृत्य विमुच्येत योगयुक्तः स उच्यते ॥ स्कन्दपुराणे

६. पातञ्जलयोगसूत्रे- १।१।२ इत्यस्य वैयासिकभाष्यावतरणे ।

७. सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ ५
यथा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्त्वं च समाधिरभिधीयते ॥ ६
तत्समं च द्वयोरैक्यं जीवात्मपरमात्मनोः ।
प्रनष्टसर्वसंकल्पः समाधिः सोऽभिधीयते ॥ ७ हठयोगप्रदीपिकायाम्

सौगतानां मते तु चित्तस्यैकाग्रता एव समाधिरिति[१]। इत्थं च योगतत्त्वविदां मते समाधेः स्वरूपं[२] पार्थक्येन निरूपितं तत्तद् योगशास्त्रेषु[३]। समाधेरयमेवार्थोऽन्यत्रापि प्रतिपादितः[४]।

**योगस्य प्रभेदाः**

मुख्यतया मन्त्रयोगो, लययोगो, राजयोगो हठयोगश्चेति चतुर्विध एव योग इति कथितं तत्त्वदर्शिभिर्योगिभिर्योगशास्त्रे[५]। त एव चत्वारो मिलित्वा महायोग इत्युच्यते[६]। तदतिरिक्तो ब्रह्म-विष्णु-ईश्वर-शिवादिगीतासु ज्ञानयोग-कर्मयोग भक्तियोग-वैराग्ययोग-सांख्ययोग-प्रेमयोग-ध्यानयोगप्रभृतिषु प्रयुक्तयोगशब्दो

---

१. मज्झिमनिकाये १।५।८ २. श्रीमदुमेशप्रणीते सांख्ययोगदर्शने पृष्ट ६१।

३. ब्रह्मविष्णुशिवादीनां चिन्ताध्यानं प्रवक्ष्यते।
ध्यानाद् स्पन्दनं बुद्धेः समाधिरभिधीयते ॥ श्रीसुरेश्वराचार्यस्य
समाधिश्चित्तैकाग्र्यम्, परमेश्वराभिमुखत्वमिति गीतायाः ८।१० इति श्लोकस्य श्रीधरीटीकायाम्। सर्वथा विजातीयप्रत्ययान्तरितः सजातीयप्रत्ययप्रवाहः समाधिः। श्रीमद्भगवद्गीतायाः ४।४१ मधुसूदनीटीकायाम्। चित्तसमाधिर्वा योगः॥ गीतयाः ६।३३ नीलकण्ठीटीकायाम्
तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। यद् ध्यानालम्बनीकृतं वस्तु तदेव परमार्थमात्रनिर्भासं स्वरूपेणैव निःसन्दिग्धं सर्वात्मना परिपूर्णम्, अत एव सर्वविषयविहीनत्वात् सर्वस्वरूपशून्यमिव यस्यांभावनायां भासते स भावनाविशेषः समाधिरित्युच्यते॥ पातञ्जलयोगसूत्रे ३।३।

४. एकाकारः समाधिः स्याद् देशालम्बनवर्जितः।
प्रत्ययोह्यर्थमात्रेण योगसाधनमुच्यते ॥ कूर्मपुराणे
तस्यैव कल्पनाहीनं स्वस्वरूपग्रहणाय सत्।
मनसाध्याननिष्पाद्यं समाधिः सोऽभिधीयते॥ विष्णुपुराणे
यत् समत्वं द्वयोरत्र जीवात्मपरमात्मनोः।
स नष्टसर्वसंकल्पः समाधिरभिधीयते ॥ स्कन्दपुराणे
समाधिस्तु समावस्था जीवात्मपरमात्मनोः।
निस्तरङ्गपदप्राप्तिः परमानन्दरूपिणी ॥ शैवधर्मे

५. मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा।
योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः॥ हठयोगप्रदीपिकायाम्॥

६. मन्त्रो हठो लयो राजयोगस्ते भूमिका क्रमात्।
एक एव चतुर्धाऽयं महायोगोऽभिधीयते ॥ योगबीजे

'जीवनसाधन' इत्यत्र जीवनशब्दप्रयोगवत् लाक्षणिकतया प्रयुज्यते[१]। पातञ्जलयोगसूत्रे मुख्यतयाऽष्टाङ्गयोगो[२] राजयोगश्चेति वर्णितम्। तद्भिन्नस्य हठयोगस्य सम्बन्धः तान्त्रिकपरम्परायां स्वीक्रियते। जैनबौद्धसाधनायां तु पतञ्जलिनिरूपिताऽष्टाङ्गयोगापेक्षया प्रत्याहार-धारणा ध्यान-प्राणयाम-स्मृति-समाधिप्रभृतिषडङ्गयोग एव स्वीकृतः।

यौगिकभक्तिरसस्वरूपप्रसङ्गेऽस्मिन् योगभेदानां साङ्गोपाङ्गविवेचनं विहाय केवलं तस्यैव विवेचनं क्रियते यस्य येन केनापि प्रकारेण भक्तिरसेन सह सम्बन्धः प्रतीयते। अतएवात्र केवलं भक्तिरसेन सह सम्बद्धो योगाङ्ग एव वर्ण्यते। राजयोगो नाम निर्बीजसमाधिरेव[३] प्रयत्नपूर्वकं वायुमनसो निरोधो वा[४] विद्यते।

राजयोगः

संसारस्य स्थितिविनाशयोश्च विलोक्य लोलदोलाचलचित्तवृत्तेरेकाग्रं कृत्वा परमात्मन आनन्दस्वरूपमनुचिन्तयन् आत्मसमाधिस्थतया परब्रह्मणा सह तादात्म्यमेव राजयोग इति कथ्यते। राजयोगस्य साधना बहिर्जगदभ्यन्तरेऽन्तर्जगतो मानसिकप्रत्यक्षीकरणं विद्यते, यतो हि राजयोगस्य साधकदृष्ट्या बहिर्जगत्तु सूक्ष्मजगतः स्थूलविकासमात्रमेव वर्तते। संक्षेपतया योगेऽस्मिन् मनस एकाग्रता, तदनन्तरं मनसो गम्भीरतमप्रदेशस्थविभिन्नकार्याणामुद्बोधनम्, पश्चात् साधारणसत्यापेक्षया स्वोत्तमसिद्धान्ते दृढविश्वासप्रभृतय एव राजयोगस्य तात्पर्यमिति। अनया साधनया एव शक्त्या सह रममाणः शिवो विषयविकारेभ्योऽसम्पृक्तः तिष्ठति[५]। राजयोगस्य साधको भोगमयसंसारे वर्तमानेऽपि तस्मादनिर्लिप्तः सन् 'पद्मपत्रमिवाम्भसा' इति न्यायेन तिष्ठति। अत एव राजयोगे भक्तिज्ञानयोश्च समन्वयो दृश्यते। योगाङ्गतया राजयोगे ईश्वरप्रणिधानरूपा भक्तिर्निवेशिता। परमप्रेमस्वरूपाया भक्तेः समावेशेन योगेऽस्मिन् स्वभावत एव भक्तिरसः समनुभूयते। तत्र प्रेमयोगयोश्च सरसं सामञ्जस्यं विलोक्यते।

लययोगः

योगसाधनायां पिण्डब्रह्माण्डयोरभिन्नता स्वीक्रियते। पिण्डब्रह्माण्डयोश्च सर्वेषां पदार्थानां स्थितिः समानमेवास्ति। अत एव पिण्डरहस्यज्ञानमेव ब्रह्माण्डरहस्यज्ञानम्। लययोगो नामसम्प्रज्ञातसमाधिः। यस्यां भावनायां परमात्मनि लीनस्य योगिनो ब्रह्मानन्दाविर्भावो

---

१. योगचिन्तामणौ पृष्ठे १०।  २. यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि। पातञ्जलयोगसूत्रे २६ साधनापादे २।

३. शिवानन्दसरस्वतीविरचिते योगचिन्तामणौ पृष्ठे ११।

४. राजयोगो मनोवायू स्थिरौ कृत्वा प्रयत्नतः॥ सांख्यसारे १।३।२

५. श्रीसुन्दरदासविरचिते सुन्दरदर्शने पृष्ठे ६५।

जायते। सा भावना सम्प्रज्ञातसमाधिर्नाम, सैव लययोगः। नवसु चक्रेषु महन्मनसोर्लयो लययोग इति। तत्राऽऽत्मपरमात्मनोरैक्यं जायते, तेन सानन्द परमानन्दं पदं प्राप्यते। योगसाधनया सुषुप्तामात्मशक्तिं कुण्डलिनीमुत्थाप्य ( प्रबोध्य ) पुरुषवासस्थाने सहस्रारचक्रे चलक्रिया एव लययोगः। लयक्रिया च ध्येये मनसः संयोजनेन सर्वतोभावेन तदतिरिक्तविषयविस्मृतिरेव। अनया साधकः सूक्ष्मशरीरस्य ज्ञानं प्राप्य ब्रह्मणि विलीयते।

मेरुदण्डस्य निम्नभागादारभ्य शिरस ऊर्ध्वभागपर्यन्तं स्थितानां सप्तचक्राणां साहाय्येन साधकः सहस्रारचक्रे प्रकृतिशक्तेः शिवशक्तेश्च संयोगद्वारा जन्ममरणबन्धनात् प्रमुच्यते। शक्तिशिवयोश्च पूर्णमिलनमिदमपूर्वम्, अनिर्वचनीयञ्चास्ति। तदेव यौगिकभक्तिरसवादस्य प्रतिपाद्यविषयो योगसाधनायाश्च चरमं लक्ष्यमिति। शक्तिशिवयोश्च मिलनजन्या या भक्तिरसधारा प्रवहति सा त्वलौकिकी, अखण्डा, अनुत्तमा च भवति। लययोगे यथा चातकस्य सततं स्वध्येयस्य रटनम्, कूर्मस्य ध्यानेन स्वाण्डसेवनम्, मृगस्य वेणुनादश्रवणजन्यात्मविस्मरणं भवति तथैव साधकोऽहर्निशं स्वध्येये परमात्मन्यवस्थितो जायते। सः तमेव सततमनुचिन्तयति, तं विना क्षणमपि न तिष्ठति, तमेव सर्वत्र पश्यति, शृणोति, लीयते च। इत्थं च लययोगे भक्तिरसः स्पष्टतया प्रयीयते, समास्वाद्यते च।

मन्त्रयोगः

स्ववैशिष्ट्यार्थेषु मन्त्रशब्दः कतिपयसाधनासु प्रयुज्यते। 'तस्य वाचकः प्रणवः' इति योगसूत्रेण मन्त्रयोगो निर्दिश्यते। मन्त्रयोगे साधकः गुरूपदेशात् सुषुम्नायां विपरीतक्रमेण 'सोऽहम्, सोऽहम्' इति सर्वदा जपति[1], जपात् सिद्धिर्जायते। योगशास्त्रदृष्ट्या नामरूपात्मिका सृष्टिरियं वर्तते, अत एव नामरूपयोश्चालम्बनेनैव साधकैर्भवबन्धनात् विमुच्यते। नामरूपात्मकैर्विषयै मानवा भवबन्धने आबद्धयन्ते, नामरूपात्मकैः प्रकृतिवैभवैश्च जीवोऽविद्याग्रस्तो जायते। अत एव स्वसूक्ष्मप्रकृतिं प्रवृत्तिं चानुसृत्य नाममयशब्दस्य भावमयरूपस्य चावलम्बनेन या साधना साध्यते, सा एव मन्त्रयोगः। सांसारिकरागैरेव जीवा भवबन्धने आबद्धयन्ते, किन्तु परमात्मविषयकरागैस्तु भवबन्धनात् विमुच्यते। अनया रीत्या एव साधनाक्षेत्रेषु मन्त्रयोगः, साध्यते। योगसाधनायां भक्तिरससाधनायाः रहस्यमिदमेव परिलक्ष्यते[2]।

---

१, गुरुवाक्यात् सुषुम्नायां विपरीतो भवेज्जपः।
सोऽहं सोऽहमिति प्रोक्तो मन्त्रयोगस्तदुच्यते॥ योगबीजे

२. नामरूपात्मिका सृष्टिर्यस्मात्तदवलम्बनात्।
बन्धनात् मुच्यमानोऽयं मुक्तिमाप्नोति साधकः॥

## हठयोगः

व्युत्पत्तिमूलकपारिभाषिकार्थदृष्ट्या हकारस्यार्थः सूर्यस्तथा ठकारस्यार्थश्चन्द्रो वर्तते[1]। तयोः सूर्यचन्द्राख्योः प्राणाऽपानयोरैक्यरूप प्राणायामो हठयोगः[2]। सूर्यः चन्द्रश्चः क्रमशो दक्षिणवामयोश्च स्वरस्य प्रतीकौ। तयोः सम्मेलनमेव हठयोगः। अथवा प्राणापानयोः वायोः समीकरणं हठयोगः। अथवा श्वासप्रश्वासयोः, शरीरावयवानाञ्चाभ्यासेन वशी कृतस्य चित्तस्य एकाग्रता, तस्य च परब्रह्मणि नियोजनमेव हठयोगः। बाह्यशक्तेः प्राधान्येन लोकस्य सृष्टिस्तथाऽन्तः शक्तेः प्राधान्येन तस्य संहारो जायते। तयोः साम्यावस्था स्थितिरिति। शिव-शक्ति-पुरुष-प्रकृतिप्रभृतिशब्दाः तस्यैव द्वन्द्वस्य परिचायका वर्तन्ते। जीवे सा मिथुनशक्तिः प्राणापानरूपेणावतिष्ठते। तयोर्द्वन्द्वं परिहृत्य समता स्थापनमेव हठयोगाभ्यासस्य लक्ष्यं विद्यते।

हठयोगे मद्य-[3]मांस-[4]मत्स्य-[5]मुद्रा-[6]मैथुना[7]दिपञ्चमकारादीनां महत्त्वं विद्यते

---

तामेव भूमिमवलम्ब्य स्खलनं यत्र जायते।
उत्तिष्ठति जनः सर्वोऽध्यन्त्वेणैतत्समीक्ष्यते ॥
नामरूपात्मकैर्भावैर्बध्यन्ते निखिलाजनाः।
अविद्याग्रसिताश्चैव तादृक् प्रकृतिवैभवात् ॥
आत्मनः सूक्ष्मप्रकृतिं प्रवृत्तिं चानुसृत्य वै।
नामरूपात्मनोः शब्दभावयोरवलम्बनात् ॥

—सुन्दरदासविरचितसुन्दरदर्शने पृष्ठे १३४।

१. हकारेणैव सूर्योऽसौ ठकारेणेन्दुरुच्यते।
सूर्याचन्द्रमसोश्चैक्यं हठ इत्यभिधीयते ॥ योगबीजे

२. अपानश्चन्द्रमा देहमाप्याययति बाह्यतः।
प्राणः सूर्योऽथवा बह्निः पचत्यन्तमिदं वपुः ॥ योगवाशिष्ठे

३. सोमधाराक्षरेद् यातु ब्रह्मरन्ध्रात् वरानने।
पित्वानन्दमयीं तां यः स एव मद्यसाधकः ॥

४. मांशब्दात् रसना ज्ञेया तदंशान् रसनाप्रियान्।
सदा यो भक्षेद् देवी स एव मांसभक्षकः ॥

५. गङ्गायमुनयोर्मध्ये मत्स्यौ द्वौ चरतः सदा।
तौ मत्स्यौ भक्षयेत् यस्तु स भवेत् मत्स्यसाधकः ॥

६. सहस्रारे महापद्मे कर्णिका मुद्रिका चरेत्।
आत्मा तत्रैव देवेशि केवलं पारदोपमम् ॥
अतीव कमनीयं च महाकुण्डलिनीयुतम्।
यत्र ज्ञानोदयस्तत्र मुद्रासाधक उच्यते ॥

७. मैथुनं परमं तत्त्वं सृष्टिस्थित्यन्तकारणम्।
मैथुनात् जायते सिद्धिर्ब्रह्मज्ञानं सुदुर्लभम् ॥ आगमसारे

आगमसारानुसारेण । ते पञ्चमकारास्तु गूढार्थाः पारिभाषिकाश्च, न तु लोके प्रतीयमानपञ्चमकाराः । एवं च लौकिकप्रतीकार्थैःगूढालौकिकप्रक्रियां गूढरहस्यांश्च समुद्घाट्यालौकिकभक्तिरसस्य सृष्टिः कृता । योगिभिर्मनः प्राणयोर्लयावस्थायास्तथा तज्जन्याऽऽनन्दस्य चातीव मनोरमं चित्रं चित्रितम् । अपि च तैः परमशक्तिकुण्डलिनी-परमपुरुषयोश्च मधुरमिलनस्य तज्जन्याऽऽनन्दस्य चातीव प्रगल्भोद्भावना कृता, याऽ नायासेनैव भगवद्रसरसिकानां मनो मोहयति ।

**भक्तियोगः**

यथा भक्तिशास्त्रेषु भवबन्धनाद् विमोचिका जीवात्मपरमात्मनोस्तादात्म्यहेतुः भक्तिः स्वीक्रियते तथैव योगदर्शनेऽपि निरतिशयसुखप्राप्तिहेतुः समाधिः स्वीक्रियते । समाधिप्राप्तिहेतुश्च 'ईश्वरप्रणिधानाद् वा' इति सूत्रानुसारेण ईश्वरप्रणिधानमेव वर्तते । तत्र प्रणिधानं नाम भोजवृत्त्यनुसारेण भक्तिविशेषो विशिष्टमुपासनं वास्ति । तत्र साधकैः सकलसांसारिकविषयसुखादिकानां फलाशां विहाय निष्कामभावनया भगवत्प्रीत्यर्थं सर्वाः क्रियाः परमात्मनि समर्प्यन्ते । तत्साधनमेवेश्वरप्रणिधानं भक्तिरुपासना[1] वेतिनिगद्यते । व्यासमतेऽपि प्रणिधानं नाम भक्तिरेवास्ति, तन्मते विशिष्टभक्त्या प्रसन्नः परमात्मा साधकमनुगृह्णात्यभिध्यानमात्रेण[2] । अनन्तानन्दानुसारेण ईश्वर प्रणिधानं नाम 'श्रवणं कीर्त्तनं विष्णोः' इति लक्षितदिशानवधारूपेष्वन्यतमेनानुध्यानमेवास्ति । तेनैव जीवो भवबन्धनाद् विमुक्तो भूत्वा परमात्मनस्तादात्म्यमश्नुते[3] ।

**नाडीविज्ञानम्**

योगदर्शने नाडीविज्ञानस्य सर्वाधिकमहत्त्वं वर्तते । प्राणायामस्याभ्यासेन शरीरस्थाः नाड्यश्चक्राणि चोत्तेजितानि गतिशीलानि च भवन्ति, यैः साधके यौगिकक्रियाः परिस्फुरन्ति । कठोपनिषद्-शिवसंहिताहठयोगप्रदीपिकाप्रभृतियोगग्रन्थेषु

---

१. ईश्वरप्रणिधानाद् वा ॥ पा० यो० द० समाधिपाद २३, भोजदेववृत्तौ- 'तत्र प्रणिधानं भक्तिविशेषो विशिष्टमुपासनं सर्वक्रियाणां तत्रार्पणम्, विषयसुखादिकं फलमनिच्छन् सर्वाः क्रियास्तस्मिन् परमगुरावर्पयति, तत्प्रणिधानं समाधेस्तत्फललाभस्य च प्रकृष्ट उपायः' पृष्ठे १३,

२. ईश्वरप्रणिधानाद् वा । पा० यो० द०, समाधिपाद २३ व्यासभाष्ये- 'प्रणिधानाद् भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण'

३. ईश्वरप्रणिधानाच्च भगवद्धर्मपालनात् ।
आचार्यसंश्रयाच्चैव जीवो बन्धनाद् विमुच्यते ॥ १६ सिद्धान्तदीपके किरणावलीवृत्तिसहिते पृष्ठे १८, मातृभूमि प्रेस, जयपुरतः प्रकाशिते

मानवशरीरे यद्यपि एकाधिकशतानि[1] पञ्चत्रिंशत्सहस्त्राणि ( ३५ ) द्वासप्ततिसहस्त्राणि[2] वा नाड्यो वर्णिताः सन्ति तथापि तासु नाडीषु इडा-पिङ्गला-सुषुम्ना-कुण्डलिन्याख्या नाड्यः प्रमुखाः सन्ति । तत्र इडानाडी मानवशरीरे मेरुदण्डस्य वामभागे भवति । सा च सुषुम्नां समाश्लिष्य दक्षिणनासापुटे संचरति[3] । पिङ्गला मेरुदण्डस्य दक्षिणभागे भवति, सा च सुषुम्नां समाश्लिष्य वामनासिकापुटे संचरति[4] । तयोर्मध्ये षट्स्थानेषु षट्शक्तिसमन्विता सिद्धिदायिनी[5] शांभवीशक्तिरूपा सुषुम्नानाडी सर्वासु मुख्या भवति[6] । केषाञ्चिन्मते शीतस्वभावत्वेन इडा चन्द्रनाडीरूपेण, उष्णस्वभावत्वेन पिङ्गलासूर्यरूपेण, तयोर्मध्यवर्तित्त्वेन त्रिगुणात्मकतया सुषुम्ना तु चन्द्रसूर्याग्निरूपेत्युच्यते । यदि सूर्याचन्द्रमसौ प्रकृतिपुरुषयोः प्रतीकरूपेण स्वीक्रियेते तर्हि कथयितुमिदं शक्यते यत् प्रकृतिपुरुषयोरालिङ्गनेनैव मध्यस्था सुषुम्ना जागर्ति । एवमेव इडापिङ्गलयोः संमिलनेन जागरिता कुण्डलिनी यदा षट्चक्रं परिभिन्दन्ती क्रमशउपरिगत्वा सहस्त्रारचक्रस्थितपरमशिवस्याऽऽलिङ्गनार्थमग्रे परिसरति तदा शिवशक्त्योश्चेदमालिङ्गनं महानन्दमुत्पादयति । सा दशा एव साधकैर्युगलोपासनेति कथ्यते, सैव भक्तिरसस्योद्गमभूमिर्विद्यते ।

## षट्चक्रविज्ञानम्

हठयोगसाधनायां चक्रविज्ञानस्यापि महत्त्वपूर्णं स्थानं वर्तते । प्राणायामादियौगिकक्रियाभिर्जागरिता कुण्डलिनीशक्तिरूर्ध्वमुखीभूय इडापिङ्गलयोर्मध्यस्थां तां सुषुम्नाभ्यन्तरस्थां सूक्ष्मतमां ब्रह्मनाडीं समाश्लिष्य षट्चक्राणि भित्त्वा च यदा सहस्त्रारचक्रे प्रयाति तदैव साधकानां समस्तयौगिकक्रियाः सिध्यन्ति । तत्रैव च

---

१. शतं चैका च हृदयस्य नाड्यः, तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति, विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥—कठोपनिषदि

२. द्वासप्ततिसहस्त्राणि नाडीद्वाराणि पञ्जरे ॥ हठयोगप्रदीपिकायाम् ४। १८
द्विसप्ततिसहस्त्राणि नाडीनां देहवर्तिनाम् ॥ अ बु० सं० ३।१२ ।२

३. इडा नाम्नी तु या नाडी वाममार्गे व्यवस्थिता ।
सुषुम्नायां समाश्लिष्य दक्षिणनासापुटे गता ॥ शिवसंहितायाम् २।२५

४. पिङ्गला नाम्नी या नाडी दक्षिणभागे व्यवस्थिता ।
मध्यनाडी समाश्लिष्य वामनाशापुटे गता ॥ शिवसंहितायाम् २।२६

५. इडा वामे स्थिता नित्यं पिङ्गला दक्षिणे तथा ।
सुषुम्ना मध्यगा ज्ञेया योगसिद्धिप्रदायिनी ॥ योगरसायने

६. इडापिङ्गलयोर्मध्ये सुषुम्णाया भवेत् खलु ।
षट्स्थानेषु च षट्शक्तिः षटपद्मं योगिनो विदुः ॥ —शिवसंहितायाम् २।२७

कुण्डलिनीशक्तिपरमपुरुषशिवयोश्च मधुरमिलनं भवति। स्वपूर्वस्थानमूलाधारचक्रादारभ्य गन्तव्यसहस्रारचक्रस्थितब्रह्मरन्ध्रस्थानपर्यन्तं कुण्डलिनीशक्तिः सुषुम्णायाः येषु स्थानेषु अग्रे परिसरति, त एव षटचक्रतया कथ्यन्ते साधकैः योगिभिः।

## षट्चक्रस्वरूपम्

षट्चक्रेषु प्रथमं चक्रं मूलाधारनामकम्, यत् मेरुदण्डान्नीचैः गुदालिङ्गमूलयोर्मध्यस्थिते सुषुम्णामुखे संलग्नम्, चतुर्दलकमलाकृति पीतवर्णञ्च भवति[1]। तच्च शरीरविज्ञाने 'बेसिकप्लेक्स' इति कथ्यते। तत्रैव प्राणशक्तिरूपाकुण्डलिनी त्रिकोणाकारग्निचक्रे स्थितेन स्वयम्भूलिङ्गेन सह सार्द्धत्रिवलयाकारेण निश्चेष्टतया स्थिता। द्वितीयं षड्दलकमलाकृतिस्वाधिष्ठानचक्रं लिङ्गमूले तिष्ठति[2]। तच्च शरीरविज्ञानानुसारेण "हाइयोगास्टिक् प्लेक्सस' इति कथ्यते। तृतीयं दशदलकमलाकृति हेमवर्णं मणिपूरकचक्रं नाभिमूले भवति[3]। तच्च शरीरविज्ञानदृष्ट्या 'सालर प्लेक्सस' इत्युच्यते। चतुर्थं द्वादशदलकमलाकृति रक्तवर्णमनाहतचक्रं हृदये तिष्ठति। तच्च शरीरविज्ञानदृष्ट्या 'कारडियकप्लेक्सस इति कथ्यते[4]। पञ्चमं षोडशदलकमलाकृति सुहेमाभं विशुद्धाख्यं चक्रं कण्ठे भवति[5]। तच्च शरीरविज्ञानानुसारेण 'फेरिंगीलप्लेक्सस' कथ्यते। षष्ठं द्विदलकमलाकृति शुक्लवर्णमाज्ञाचक्रं भ्रुवोर्ममध्ये भवति[6]। तच्च शरीरविज्ञानदृष्ट्या 'केवरनस प्लेक्सस' इति कथ्यते। एतत्साम्येन षट्चक्रमन्यत्रापि निरूपितम्[7]।

---

१. शिवसंहितायाम् ५।५।

२. द्वितीयं तु सरोजं च लिङ्गमूले व्यवस्थितम्।
परिभास्वरषड्दलम् ॥ शिवसंहितायाम् ५।७५

३. तृतीयं पङ्कजं नाभौ मणिपूरकसंज्ञकम्।
शोभितहेमवर्णकम् ॥ शिवसंहितायाम् ५।७६

४. हृदयेऽनाहतं नाम चतुर्थं पङ्कजं भवेत्।
द्वादशारसमन्वितम् ॥ ॥ शिवसंहितायाम् ५।८३

५. कण्ठस्थानस्थितं पद्मं विशुद्धं नामपञ्चमम्।
सुहेमाभं स्वरोपेतं षोडशस्वर संयुतम् ॥ शिवसंहितायाम् ५।९०

६. शिवसंहितायाम् ५।९६।

७. मूलाधारमधिष्ठानं मणिपुरमनाहतम् ॥
कण्ठदेशे विशुद्धिः स्यादाज्ञाभ्रूमध्यसंस्थिता।
चतुष्कोणोऽयमाधारः स्थितिः षट्कोणरूपिणी ॥

प्रोक्तषट्चक्रातिरिक्तं सहस्रदलकमलाकृति सप्तमं सहस्त्रारचक्रं तालुमूले भवति[1]। योगतत्त्वविदनुसारेण सहस्त्रदलकमलकर्णिकास्थद्वादशदलकमलस्योर्ध्वभागे पश्चिमाभिमुखयोनिमण्डले बिन्दुरूपसुषुम्णाया विवरो विद्यते। तस्य मूले शून्याकारो ब्रह्मरन्ध्रो वर्तते। तत्रैव ब्रह्मणः स्थानमस्ति। तत्रैव जीवात्मनःसमुनयनमेव साधकानां साध्यमस्ति। तत्रैव ब्रह्मरन्ध्रे आध्यात्मशक्तिरूपाकुण्डलिनी परमात्मपुरुषशिवेन सह मिलति। तयोस्तन् मिलनं जगन्मायिकविकारेभ्योऽसम्पृक्तस्य जीवात्मतत्त्वस्य परमात्मतत्त्वेन सह तादात्म्यस्य कारणं वर्तते। एवं च कुण्डलिनीशक्ति-परब्रह्मणोः पूर्णमिलनपरिकल्पनेन योगसाधकैरपि भक्तिरसस्य सम्यग् निष्पत्तिः कृतेति ज्ञायते।

## कुण्डलिनीविज्ञानम्

योगशास्त्रानुसारेण यद् ब्रह्माण्डे तदेव पिण्डे वर्तते। अत एव ब्रह्माण्डसदृशपिण्डे विविधब्रह्माण्डानि ( चक्राणि ) परिकल्पितानि। तेऽवन्यतमा कुण्डलिनी विद्यते। कुण्डलेऽस्याः स्त इति कुण्डलिनी। हठयोगदृष्ट्या सा च महाशक्तिरूपा कुण्डलिनीसम्पूर्णभुवने परिव्याप्ता वर्तते। सा च इडापिङ्गलारूपकुण्डलद्वयसमन्विता, सार्द्धत्रिवलयाकारा ससुप्तभुजगोपमा, मूलाधारचक्रे संस्थिता महाशक्तिरूपा विद्यते। तयैव शिवांशो जीवो ब्रह्मजगद्भ्यां भेदमश्नुते। तस्याः स्वप्नमेवाज्ञानम्, बन्धनञ्च। योगाभ्यासेनोत्थितायां तस्यां सा षट्चक्राणि भिन्दन्ती ब्रह्मलोकं गत्वा शिवेन सह तादात्म्यं भजते। तच्च मिलन समस्तदृश्यजगतां समग्रमायाविकाराणां विसर्जनस्य जीवात्मपरमात्मनोश्च साम्यस्य प्रतीकमस्ति। सा च कुण्डलिनी संसारस्य सृजनात्मिकाशक्तिः,

---

मणिरर्द्धेन्दुसंकाशस्त्रिकोणः स्यादनाहतम्।
विशुद्धचक्रं पूर्णेन्दुसदृशं परिकीर्त्तितम्॥
विशुद्धिः स्फटिकप्रख्यः स्यादाज्ञासर्ववर्णभाक्॥
केचिद् वदन्ति शोणाभं स्वाधिष्ठानारविन्दकम्॥
आज्ञादिव्यशिखाकारा श्रृणु चातः परं प्रिये।
आधारः पीतवर्णः स्यात् स्वाधिष्ठानं जलात्मकम्॥
मणिर्नीलाञ्जनाप्रख्यो रक्तवर्णस्त्वनाहतम्।
तथा च पङ्कजं शुक्लं परमात्मप्रकाशनम्॥

—षट्चक्राणि सांख्ययोगे

१. अत ऊर्ध्वं तालुमूले सहस्त्रारं सरोरुहम्।
अस्ति यत्र सुषुम्णाया मूलं सविवरं स्थितम्॥

—शिवसंहितायाम् ५।१२०।

शब्दातीता वाग्देवी[1], भुजङ्गोपमा स्वयं प्रभासमुज्ज्वला च विद्यते[2]।

घेरण्डसंहितानुसारेण आत्मशक्तिरूपा, सार्द्धत्रिवलयाकारा, परदेवतारूपा कुण्डलिनीशक्तिर्मूलाधारे संसुप्ता तिष्ठति। तस्याः तादृशावस्थायां जीवः पशुवदावरणैराच्छाद्यते। तदा कोटिशो योगाभ्यासैरपि ज्ञानं न प्राप्यते। यथा कुञ्जिकया कपाटः समुद्घाट्यते तथैव कुण्डलिनीशक्तिप्रबोधे ब्रह्मद्वारमुद्घाट्यते[3]। आत्मशक्तिस्वरूपा कुण्डलिनी प्रकृतेः प्रतीकभूता, परमात्मा च शिवस्वरूपस्य सहस्रपद्मस्थेश्वरस्य प्रतीकरूपोऽस्ति। यतो हि योगसाधनया मूलाधारस्थितां सुषुप्तां कुण्डलिनीशक्तिं प्रबोध्य शून्यगगनस्थिते (सहस्रारचक्रे) सहस्रदलकमले समुन्नयनमेव साधकानामुद्देश्यं वर्तते। इत्थं च प्रकृतिपुरुषयोः, शक्तिशिवयोश्च मधुरमिलनमिदमद्भुतमपूर्वमनिर्वचनीयं वर्तते। आत्मपरमात्मनोरिदमेव मधुरमहामिलनमेव भक्तिरसमुद्भावयति।

**नादविज्ञानम्**

हठयोगसाधनायां कुण्डलिनीप्रबोधनक्रियायाः विशिष्टं स्थानं विद्यते। तस्या अप्रबोधने जीवो जरामरणबन्धनैर्बध्यते, प्रबोधे सति बन्धनैर्विरहितो भूत्वाऽमृतत्त्वं प्राप्नोति[4]। यदा सा प्रबुध्योर्ध्वमुखी भवति तदा स्फोटरूपो नादः प्रतीयते। शारदातिलकानुसारेण सच्चिदानन्दात् परमेश्वरात् शक्तिस्ततो नादस्तस्माद् बिन्दुः समुद्भवति[5]। स च नादः पिण्डब्रह्माण्डेषु च सततं परिव्याप्तः तिष्ठति किन्तु

---

१. जगत्संसृष्टिरूपा सा निर्माणे सततोद्यता।
वाचामवाच्या वाग्देवी सदा देवैर्नमस्कृता॥ शिवसंहितायाम् २।२४

२. सुप्तानागोपमा ह्येषा स्फुरन्ती प्रभया स्वया॥ शिवसंहितायाम् ५।५८

३. मूलाधारे आत्मशक्तिः कुण्डलिनी परदेवता।
शयिता भुजगाकारा सार्धत्रिवलयान्विता॥
यावत्सा निद्रिता देहे तावज्जीवः पशुर्यथा।
ज्ञानं न जायते तावत्कोटियोगं समभ्यसेत्॥
उद्घाट्यते कपाटं च यथा कुञ्जिकया हठात्॥
कुण्डलिन्याः प्रबोधेन ब्रह्मद्वारं प्रभेदयेत्॥
—घेरण्डसंहितायाम् ३।४६–५१।

४. तयोर्ध्वमायन्नमृतत्त्वमेति–श्रुतौ, सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः॥ —हठयोगप्रदीपिकायाम् ३।१०८।

५. सच्चिदानन्दविभावात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥ १।१।५, राघवभट्टीये च

मोहाविष्टैर्जनैर्नानुभूयते । स च नादः साधनाक्रमे विविधरूपेण श्रूयते साधकैः[1] । मकरन्दं पिवन्तो भ्रमरा यथा गन्धं न वाञ्छन्ति तथैव नादासक्तं चित्तं स्रक्चन्दनवनितादिरूपलौकिकविषयं न कामयते[2] । नादानुसन्धानात् चैतन्ये ब्रह्मणि चित्तं विलीयते । अपि च नादानुसन्धाने सति साधका आत्मज्योतिषो दर्शनमनहदनादश्रवणञ्च कुर्वन्ति । अत एव सर्वचिन्तां सर्वविधलौकिकचेष्टां च विहाय नादानुसन्धानद्वारा स्वचित्तं नाद एव स्थापयेत्[3] । तत्र चित्तस्थैर्यानन्तरमेव परमानन्दरूपो भक्तिरसः समास्वाद्यते साधकैः । तत्रैव साधकैर्भगवच्चरणारविन्दस्य भक्तिरसो निपीयते । आत्मशक्तिरूपा, स्वयं नादस्वरूपा, ज्योतीरूपा, शक्तिस्वरूपा कुण्डलिनी साधकानां भावानुसारेणानुभूयते । इत्थं च भक्तिरससाधनायां नादश्रवणस्यातीव महत्त्वं वर्तते ।

हठयोगसाधनायां कुण्डलिनीसाधनाया अतीवमहत्त्वं वर्तते । किन्तु म० म० पं० गोपीनाथकविराज[4] सम्पूर्णानन्द[5] प्रभृतियोगतत्त्वविदो वदन्ति यद् वैदिकवाङ्मये कुण्डलिनीसाधनैव नोपलभ्यते, तदभिधायकः शब्दोऽपि तत्र नास्ति । पातञ्जलयोगदर्शने प्राचीनजैनबौद्धवाङ्मयेऽपि कुण्डलिनी-षट्-चक्रादिनां वर्णनं नोपलभ्यते । वस्तुतो-विषयोऽयं नाथसिद्धसाधकैः शक्तितन्त्रेभ्यः स्वसाधनायां समानीतः । नाथसम्प्रदाये साधकैः समाधिदशायां कुण्डलिनीरूपाऽऽत्मशक्तेः सहस्रारचक्रस्थितपरमशिवस्य च

---

१. आदौ जलधिजीमूतभेरीझर्झरसंभवाः ।
मध्येमर्दलशंखोत्था घण्टाकाहलजास्तथा ॥ ४।८५
अन्ते तु किङ्किणीवंशवीणाभ्रमरनिःस्वनाः ।
इति नानाविधा नादाः श्रूयन्ते देहमध्यगाः ॥ ४।८६
—हठयोगप्रदीपिकायाम्

आदौ मत्तालिमालाजनितरवसमस्तारसंस्कारकारी,
नादोऽसौ वांशिकस्यानिलभरितलसद्वंशनिःस्वानतुल्यः ।
घण्टानादानुकारी तदनु च जलधिध्वानधीरो गभीरो,
गर्जन्पर्जन्यघोषः पर इह कुहरे वर्तते ब्रह्मनाड्याः ॥ त्रिपुरसारसमुच्चये

२. मकरन्दं पिवन्भृङ्गो गन्धं नापेक्षते यथा ।
नादासक्तं तथा चित्तं विषयं नहि कांक्षते ॥ ४।७० हठयोग प्रदीपिकायाम्

३. सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः ।
नादमेवानुसन्दध्यान्नादे चित्तं विलीयते ॥ नादबिन्दूपनिषदि ४१

४. कुण्डलिनीशक्तिः, द्विवेदी अभिनन्दनग्रन्थमाला पृष्ठे १७१ ।

५. डा० सम्पूर्णानन्दकृत 'योगदर्शने' पृष्ठे १४८, हिन्दीसमिति, सूचना विभाग, उत्तरप्रदेश १९६५ ।

तान्त्रिकबौद्धसाधकैः समाधिदशायां प्रज्ञोपाययोश्चाद्वयमिलनस्योदात्तपरिकल्पना कृता। अन्यैश्च साधकैः समाधिरयं जीवात्मपरमात्मनोः मधुरमहामिलनस्य प्रतीकमित्यभिहितम्। एवं च तैराध्यात्मिकपरिणयस्य परियोजनया भक्तिरससाधनाया हृदयस्पर्शिवर्णनं कृतम्। इत्थं च योगदर्शनेऽपि आत्मशक्तिरूपायाः कुण्डलिनीशक्तेस्तथा परमात्मरूपशिवस्य च मधुरमिलनस्योद्भावना द्वारा यौगिकभक्तिरससाधनाया व्यापिका सरसा च पृष्ठभूमिर्निर्मिता साधकैः। तामेवावलम्ब्य कालान्तरे बौद्धसाधकैः प्रज्ञोपायस्य, अद्वयस्य, शैवसाधकैः सामरसस्य, भक्तसाधकैर्जीवात्मपरमात्मनोश्च पावनपरिणयस्य चाभिनवपरिकल्पनयाऽलौकिकभक्तिरसस्य अवतारणा कृता।

श्रीसम्पूर्णानन्दमते 'सार्द्धत्रिवलयाकारा' कुण्डलिनी वागपरनामधेया शरीरे वर्तते। शरीरे तु वागेव पराशक्तिरस्ति। तस्याः कुण्डलिन्याः (पराशक्तेः) पश्यन्ती-मध्यमा-वैखरीरूपभेदत्रयेऽपि सूक्ष्मतमं परारूपं विद्यते। सा च परावाक् ओङ्कारस्वरूपा, तस्याश्च मात्रात्रयं सौविध्येनोच्चार्यते, किन्तु तस्या अर्द्धमात्रा 'यानुच्चार्या[1] विशेषतः' इति वचनानुसारेण सौविध्येन नोच्चार्यते। इत्थं च सार्द्धत्रिमात्रास्वरूपा पराशक्तिः, ओङ्कारो वा यौगिकप्रक्रियायां सार्द्धत्रिवलयाकारा कुण्डलिनीत्युच्यते[2]।

श्रीहरिशङ्करजोशीमहोदयेन[3] तु ऋग्वेदे[4] वर्णितदेवासुरसङ्ग्रामः कुण्डलिनीयोगस्य रूपकमात्रमेवेत्यनुसंहितम्। तन्मते प्रतिकूलमुखाः प्राणा नागतुल्याः, तस्य दैवं मुखं स्वपक्षाय मन आकर्षति, आसुरं मुखं स्वपक्षाय चाकर्षति। ततो देवस्य जये दैवं मनः, आसुरस्य जये आसुरं मनः, तदाकारमुभयमुखं प्राणसूत्रं कुण्डलाकारं कृत्वोभयोस्तयोर्मुखे समीकृत्यासुरमुखे दैवीमुखस्य समुत्थापनमेव कुण्डलिनीयोग इति। एवं च तयोर्दैवासुरीप्रवृत्त्योः सर्परूपं प्राणमुभयमुखं 'य एवं वेद' स एव वेदान् योगं, कुण्डलिनीयोगं वेत्ति, स एव ब्रह्मविद् ब्रह्मैव भवतीति नात्र विचिकित्सालेशोऽपि। तयोः प्राणयोर्द्वन्द्वमेव ऋग्वेदे देवासुरसङ्ग्रामरूपतया वर्णितम्।

## सांख्ययोगयोश्च परस्परं भेदाभेदः

सांख्यं योगश्च परस्परं सर्वथा भिन्नौ न स्तः। 'साङ्ख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः' इति गीतोक्तसिद्धान्तानुसारेण तयोः परस्परं पार्थक्यं न समनुभूयते विदुषां मते। साङ्ख्ये प्रतिपादितानि पञ्चविंशतितत्त्वानि योगदर्शनेऽपि स्वीकृतानि सन्ति। उभयत्र प्रत्यक्षादिप्रमाणत्रयं समानरूपेण स्वीकृतम्। अपि च प्रकृतिपुरुषयोः

---

१. दुर्गासप्तशती–रात्रिसूक्ते ३ श्लोके।

२. डा० सम्पूर्णानन्दकृत योगदर्शने पृष्ठे १५०

३. हरिशंकरजोशीकृत 'वैदिकयोगसूत्रे' पृष्ठे ११५, २।४।३

४. ऋग्वेदे ७।६

संयोगात् संसारः, तयोर्वियोगात् मोक्ष इति सिद्धान्त उभयत्र तुल्य एव। किन्तु सांख्यं ज्ञानप्रधानम्, योगः क्रियाप्रधानम्। सांख्ये तत्त्वमीमांसा विद्यते, योगे च तदवाप्ति-साधनं चित्तवृत्तिनिरोधो वर्णितः। मोक्षप्राप्तिसाधनायां तयोर्मतभेदोऽस्ति। तत्र सांख्ये पञ्चविंशतितत्त्वानां सम्यग् ज्ञानमेव मोक्षस्य कारणम्, योगे तु चित्तवृत्तिनिरोधस्य पराकाष्ठायां पुरुषस्वरूपेऽवस्थानमेव मोक्ष इति। योगे ईश्वरनामधेयं षड्विंशतितमं तत्त्वमपि स्वीक्रियते। किन्तु सांख्ये ईश्वरो न स्वीक्रियते, अत एव सांख्ये पञ्चविंशति-तत्त्वान्येव स्वीकृतानि। चार्वाकदर्शनं विहाय प्रायः सर्वदर्शनेषु सर्वशास्त्रेषु च चित्तस्य शरीरस्य च परिशुद्ध्यर्थं यौगिकक्रियाया माहात्म्यं स्वीक्रियते।

## शैवदर्शने भक्तिरसस्वरूपम्

माहेश्वरसाधनामार्गे वामाचारस्योत्तरोत्तरह्रासेन शिवतत्त्वस्य क्रमिकविकासेन च माहेश्वराणां कापालिकः, कालदमनम्, पाशुपतः, शैवश्चेति मतचतुष्टयं प्रचलि-तम्। उपासनापद्धतेः पार्थक्येन तेषां मतानां दार्शनिकस्वरूपं भेदं लभते। शोधप्रब-न्धेऽस्मिन् तस्य साङ्गोपाङ्गविवेचनं विहाय केवलं भक्तिरसदृष्ट्यैव तस्य स्वरूपं निरूप्यते।

तत्र कापालकसाधना—तन्त्रसाधनायां वाममार्गिसाधकानां ( अघोरसाधकानां ) कृते कापालिकः शब्दः प्रयुज्यते। कपालं धरतीति कापालिक इति व्युत्पत्तेः। ब्रह्माण्ड पुराणादिषु वर्णितेन विष्णोः मोहिनीरूपं प्रति शिवस्योन्मत्ताऽऽचरणेन सह कापालिक-मतस्य सम्बन्धः प्रतिपाद्यते। सम्भवतोऽस्मादेव कारणात् कृष्णचतुर्दश्यां तिथौ काश्मीरशैवसाधकैर्नृत्य-गीत-सुरा-सुन्दरीणामुन्मुक्तविहारद्वारा शिवस्योन्मत्तता प्रद-र्श्यते। कापालिकसाधनायां साधकस्य शरीरमेव 'वज्रधरः', जगतः कापि स्त्री कपाल-वनिता 'सोऽहं' रूपमेव च हेरुकभगवद्मूर्तिः स्वीक्रियते[1]। कापालिकसाधनायां वज्र पद्म-मदनं चेति त्रिरत्नं स्वीक्रियते। वज्रयानसाधनायां शैवकापालिकसाधनायां च भोगपरकयोगसाधना स्वीकृत्य स्त्रीपुरुषयोः स्थूलशरीरसंयोग एव सामरस्यमिति कथ्यते। स्थूलशरीरसंयोगोऽयं पञ्चपवित्राऽऽकर्षणस्य तथा ऊर्ध्वचालनस्य साधनं वर्तते, येन शरीरं वज्रवदचलायते[2]। अस्मिन्नेव प्रसङ्गे अमरौली-वज्रौली-सहजौलीमुद्राणामुद्भावनाऽभूत्[3]।

नाडीषु चक्रेषु च विश्वासः, शिवजीवयोरभिन्नता, योगद्वारा इन्द्रियनिग्रहपूर्वकं कैवल्यरूपे समवस्थितस्य शिवरूपस्याऽऽत्मनः साक्षात्कारः, शक्तियुक्तशिवस्य प्रभविष्णु-

१. प्राणी वज्रधरः कपालवनिता तुल्यो जगत् स्त्रीजनः।
सोऽहं हेरुकमूर्त्तिरेष भगवान् यो नः प्रभिन्नोऽपि च॥ चर्याचर्यविनिश्चयस्य टीकायाम्, म० म० हरप्रसादशास्त्रिसम्पादितायाम्।

२. नाथसम्प्रदाये पृष्ठे ८६।

३. हठयोगप्रदीकायाम् पृष्ठे ६२।

तायां परमविश्वासः, पञ्चामृतविधानमित्यादिकापालिकमते प्रसिद्धम्। कापालिकमते शक्तिविवर्जितः शिवोऽपि शवतां प्राप्नोति[1]। शक्त्या युक्तः शिव एव कर्त्तुमकर्त्तुमन्यथाकर्त्तुञ्च समर्थो भवति[2]। शक्तिविरहितः शिवस्तु निष्क्रियो निरञ्जन एव, अत एव सोमसिद्धान्तिनां मते 'उमया सहितो रुद्रः' एव 'सोमः' कथ्यते। तन्मते उमाशिवौ मिथुनरूपावेव उपास्यौ भवतः। तन्मते प्रथमानन्दः, परमानन्दः, विरमानन्दः, सहजानन्दश्चेत्यानन्दस्य कोटिचतुष्टयं वर्तते। तत्र सहजानन्द एव परमसुखमस्ति। तदेव सुखराजः शून्यावस्था वा कथ्यते[3]।

कालदमनसाधना—आचारदृष्ट्या कालदमनसाधकोऽपि कापालिकसाधकसदृश एव वाममार्गी भवति। तन्मते रूद्ररूपेण परमेश्वरः स्वीक्रियते। तन्मतानुसारेण कपालभोजनं, चिताभस्मलेपनम्, चिताभस्मसेवनम्, दण्डधारणम्, सुरापात्रधारणम्, सुरापात्रे भैरवपूजनञ्चेति षडाचाराः सर्वेषां लौकिकपारलौकिककामानां प्रापणायामोघसाधनानि सन्ति।

पाशुपतसाधना—पाशुपतसाधकानां मते कार्यम्, कारणम्, योगः, विधिः, दुःखान्तश्चेति पञ्चपदार्थाः स्वीक्रियन्ते। तत्र जीवो जडश्च कार्यं परमात्मा च कारण वर्तते। मतेऽस्मिन् जीवः पशुरूपेण, जडः पाशरूपेण परमात्मा च पतिरूपेण स्वीकृतः। चित्तद्वारा पशुपत्योश्च संयोग एव योगः कथ्यते। पतिप्राप्त्युपायः, पतिपूजा, पतिप्रसन्नतायैनृ्त्य-गानप्रभृतिर्विधीयते। दुःखानामात्यन्तिकनिवृत्तिदुःखान्तो मोक्षो वा कथ्यते। एतत्सर्वं विशदरूपेण महेश्वरविरचिते 'पाशुपतसूत्रे वर्णितम्, यस्य कौण्डिन्यविरचितपञ्चमार्थिभाष्यं विद्यते।

शैवसाधना—शैवसाधनायां पशुः पतिः पाशश्चेति तत्त्वत्रयं परमतत्त्वरूपेण स्वीकृतम्। तत्रेश्वरः पतिरूपेण जीवश्च पशुरूपेण स्वीकृतः। तत्र पशुः (जीवः) अंशोऽणुरूपश्च वर्तते। जीवरूपपशुः कर्म-मल-माया-रोधशक्तिरूपेण पाशचतुष्टयेन निबद्धस्तिष्ठति। स च पत्युरनुग्रहेण बन्धनात् प्रमुच्यते। प्रोक्तपाशचतुष्टयराहित्यमेव जीवस्य मुक्तावस्था कथ्यते।

---

१. शिवोऽपि शवतां याति कुण्डलिनी विवर्जितः॥ देवीभागवते

२. शिवः शक्त्या युक्तो यदि भवतः शक्तः प्रभवितम्।
न च देवं देवी न खलु कुशलः स्पन्दितुमपि॥ सौन्दर्यलहर्याम्

३. जयति सुखराज एवं कारणरहितः सदोदितो जगताम्।
यस्य च निगदनसमये वचनदरिद्रो बभूव सर्वज्ञः॥
—नडपादस्य सेकोद्देशटीकायाम्

शैवदर्शनम्—शैवमते आगमशास्त्रम्, स्पन्दशास्त्रम्, प्रत्यभिज्ञाशास्त्रञ्चेति शास्त्रत्रयं प्रसिद्धं वर्तते । अपि च शैवदर्शनस्याभेदः, भेदः, भेदाभेदश्चेति पक्षत्रयमिति, परा अपरा परात्परा चेत्यवस्थात्रयमिति, वाञ्छा-ज्ञान-क्रिया चेति शक्तित्रयमिति, पश्यन्ती-मध्यमा-वैखरी चेति वाक् त्रयमिति त्रयस्त्रिकमिदं दर्शनेऽस्मिन् प्रसिद्धम् । तस्मादिदं त्रिकदर्शनमित्यप्युच्यते । अत्र सामरस्यस्य महत्त्वं वर्तते । यथा सांख्यदर्शने प्रकृतिः सर्वथा ईश्वरनिरपेक्षा तथा त्रिकदर्शने नास्ति, न चाद्वैतवेदान्तसदृशं निष्क्रियं ब्रह्म स्वीकृतम्, अपि तु तत्र मानवस्वभावस्य सर्वे पक्षाः प्रस्तूयन्ते । यतो हि तद्दर्शनानुसारेण चैतन्यस्वरूपः शिवः प्रत्येकवस्तुना सह तादात्म्य स्थापयित्वा ज्ञानं कारयति, स्वशक्त्या सह लीलारतत्वेन प्रीतिं प्रबोधयति, तथाऽऽप्रतिहतेच्छाशक्तिञ्चोत्पादयति जीवे । काश्मीरशैवसाधनायां भक्तिरसोपासनाया रहस्यमिदमेव वर्तते । संभाव्यते यत् काश्मीरशैवदर्शनस्य प्रोक्तसिद्धान्त एव भक्तिकालिकसाधनायां ज्ञान-कर्म-भक्तिरूपेण, शील शक्ति-सौन्दर्यरूपेण योग-ज्ञानभक्तिरूपेण परिणतो भूत्वाऽभिनवत्रिकदर्शन-रूपेण पल्लवितो बभूव । ज्ञानयोगाभ्यां सह भक्तेः शीलशक्तिभ्यां सह सौन्दर्यस्य सम्मिश्रणेन स्वभावतो भक्तिरससाधनायाः प्रशस्तमार्गः सिध्यति ।

शैवदर्शने भारतीयजीवन-कला-साहित्यादीनां दृष्ट्या द्वैतप्रतिपादकानां मालनी-विश्वास-स्वच्छन्द विज्ञानभैरवानन्दभैरव-मृगेन्द्र कामिकारुद्र-यामलादीनां शैवागमानां महत्त्वपूर्णं स्थानं वर्तते । शैवदर्शनानुसारेण ह्येकत्रिंशत्तत्त्वानि यथा—१-शिवः, २—शक्तिः, ३—सदाशिवः, ४—ईश्वरः, ५—विद्या,[1] ६—पुरुषः, ७—माया, ८—कालः, ९—नियतिः, १०—कला, ११—अविद्या,[2] १२—रागः,[3] १३—प्रकृतिरव्यक्तं वा, १४—महत्, १५—अहंकारः, १६—मनः, १७—२१—पञ्चज्ञानेन्द्रियाणि, २२—२६—पञ्च-कर्मेन्द्रियाणि, २७—३१—पञ्चतन्मात्राः, ३२—३६—पञ्चमहाभूतानीति[4] साकल्येन

---

१. एतत्पञ्चकं पतिरिति कथ्यते ।

२. महार्थमञ्जर्याम् पृष्ठे ५० । तत्त्वप्रकाशे ३।४ तु स्पष्टमेव विद्येति पठ्यते विव्रियते च टीकाकृता शुद्धविद्येति ( त्रिवेन्द्रम् संस्कृतग्रन्थमालातः प्रकाशिते )

३. ६—१२ तत्त्वानि पशुरिति कथ्यते ।

४ १३—३६ तत्त्वानि पाशनाम्ना प्रसिद्धानि । महार्थमञ्जर्याम् १३।२५ तथा तत्त्वप्रकाशे २।५—११, ३।४, १२ ( त्रिवेन्द्रमसंस्कृतग्रन्थमालातः प्रकाशिते ) तत्र इदं चिन्त्यम् तत्त्वप्रकाशे ४।२ अव्यक्तमहतोर्मध्ये गुण इत्यपरं तत्त्वं विलोक्यते । न पुनस्तन्महार्थमञ्जर्याम् । सर्वदर्शनसंग्रह—संकलिते शैवदर्शने पृष्ठे ८७ त्वपरः कश्चिद् भेदो द्रष्टव्यः ।

षट्त्रिंशत् । तथापि यथोक्तं महार्थमञ्जरी ( पृ० ५० ) टीकाकारेणाष्टमादीनि ( ८–१२ ) पञ्चतत्त्वानि केवलं मायाया विभूतिरूपाणीति शक्यानीहागणयितुमिति प्राप्यतेऽत्रापेक्षितैकत्रिंशत्संख्या । तत्र राग–शिव–शक्तिप्रभृतितत्त्वानामुद्भावनाद्वारा कालान्तरे विकासशीले भक्तिरसे शिवशक्त्योः सामरस्यस्य मनोहरः सन्निवेशः प्राप्यते ।

## काश्मीरशैवमतेश्वराद्वयवादः

वाममार्गिरुद्रोपासनायाः विभक्तपद्धतेर्विरुद्धत्वेन कश्मीरे यो धर्मः प्रादुर्भूतः स एव काश्मीरशैवमतम् , तस्य सिद्धान्तश्चेश्वराद्वयवाद इति कथ्यते । शाङ्कराद्वैतवादेन प्रभाविते मतेऽस्मिन् शिवस्य प्रधानता वर्तते, सत्यं शिवं सुन्दरमिति च सर्वमेकमेकाकारतयाऽद्वैतब्रह्मरूपेण शिवस्यावतारणा बभूव । तस्य प्रवर्त्तकश्च वसुगुप्ताचार्य आसीत् । स्वसिद्धान्तप्रतिपादकं शिवसूत्रं तेन रचितम् । काश्मीरशैवसिद्धान्तानुसारेण ईश्वरः सर्वस्वतन्त्रः कर्त्तृस्वरूपो वर्तते, मायातस्य स्वतन्त्रशक्तिरस्ति । ईश्वरः स्वेच्छया नटवल्लीलाविस्ताराय तां मायां नियोजयति । तस्याश्च माध्यमेन स्वस्फुरणं करोति । विमर्श आत्मनः स्वभाव आन्तरधर्मो वा विद्यते । तत्र ज्ञानक्रिययोश्च भेदो नास्ति । उभयोरुन्मुखतैवेश्वरस्य 'इच्छा' वर्तते । कालान्तरे शैवमतस्य दार्शनिकपक्षसंस्थापनाय वसुगुप्तस्य शिष्येण श्रीकल्लटेण 'स्पन्दशास्त्रम्' श्रीसोमानन्देन च 'प्रत्यभिज्ञाशास्त्र'मिति रचितम् । तत्र स्पन्दमते ईश्वराद्वयस्यानुभूतिसाधनं तु ईश्वरदर्शनं, तद्द्वारा मलनिवारणं च वर्तते । परन्तु प्रत्यभिज्ञादर्शने ईश्वररूपेण स्वात्मनः प्रत्यभिज्ञैव अर्थात् स्वस्वरूपप्राप्तिद्वारा ईश्वराद्वयस्यानुभूतिर्भवति ।

## स्पन्दशास्त्रस्य दार्शनिकसिद्धान्तः

काश्मीरशैवमते स्पन्दवादस्य प्रतिष्ठापकः कल्लटाचार्य आसीत् । स्पन्दस्य शाब्दिकार्थस्तु कम्पनम् , गतिः, स्फुरणादिकञ्च भवति । शिवस्य प्रथमं स्फुरणं स्पन्द एव वर्तते । यदा शिवेनानुभूयते यदहमेव शिवोऽस्मि तदा तस्मिन् प्रथमं स्पन्दनं भवति, तदेव स्पन्दनं शिवतत्त्वमिति कथ्यते । यदाऽऽनन्दस्य बोधो जायते तदा शक्तितत्त्वस्य प्रधानता भवति । 'कामकलाविलासे' शिवशक्त्योरुभयोः कृते बिन्दुशब्दः प्रयुज्यते । तस्य श्वेतं रक्तञ्चेति रूपद्वयं भवति[1] । बिन्दुरेव सृष्टेः कारणम् । 'शारदातिलकानुसारेण मानवशरीरेऽग्निः सोमश्चेति तत्त्वद्वयं भवति । तत्राग्निः सूर्यस्तथा सोमो निशाकरो वर्तते । सूर्यः दक्षिणभागे तिष्ठति, यः पिङ्गलेति कथ्यते, तथा सोमो वामपक्षे तिष्ठति, य इडेति कथ्यते । अत एव 'शारदातिलक' भाष्यकारेण

---

१. सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत् प्रसरम् । कामकलाविलासे

शुक्रमग्निरूपं रक्तं चन्द्ररूपम्' इत्यादिना बिन्दुनिरूपणं कृतम्[1]। एवमेव सदा शिवे इच्छाशक्तेः, ईश्वरे ज्ञानशक्तेः, शुद्धविद्यायां क्रियाशक्तेश्च प्रधान्यं भवति। शुद्धविद्यातः समारभ्य शिवतत्त्वपर्यन्तमूर्ध्वगामी जीवः प्राप्तव्यतत्त्वं स्वात्मरूपेण गृह्णाति। एवञ्च तत्त्वस्य पूर्णरूपेणाऽऽत्मगतत्वम्, विषयस्य विषयिणि तादात्म्यम्, विश्वस्मिन् व्यक्तौ च समरसता सम्पादनमेव स्पन्दवादः। शैवसाधनायां स्पन्दवादो नूतनदार्शनिकविचारधारारूपेण समायातः। स्पन्दवादेनानेन महान् समन्वयोऽजनि। ज्ञानेन सह भक्तेस्तथा दर्शनेन सह भावनायाः सम्मिश्रणेनैव भक्तिरसस्त्रोतः प्रवहति।

स्पन्दशास्त्रस्य परम्परायां वसुगुप्तकृत 'शिवसूत्र'स्य, भट्टकल्लटकृत 'स्पन्दकारिकायाः' स्पन्दवृतेश्च'. क्षेमराजकृत 'स्पन्दनिर्णय'स्य स्पन्दसन्दोह'स्य च, रामकाण्डकृत 'विवृत्तेः' उत्पलवैष्णवकृत' प्रदीपिकायाश्च महत्त्वपूर्णं स्थानं वर्तते। तेषु ग्रन्थेषु स्पन्दवादस्य सूक्ष्मातिसूक्ष्माः सिद्धान्ता निरूपिताः समुपलभ्यन्ते।

## प्रत्यभिज्ञादर्शनस्य सिद्धान्ताः

सामान्यतया प्रत्यभिज्ञाशब्दस्यार्थस्तु 'पुनः स्वस्वरूपस्य ज्ञानं प्राप्तिः परिचयो वा' वर्तते। प्रत्यभिज्ञादर्शनानुसारेण दुःखस्याऽऽत्यन्तिकनिवृत्तिर्निरतिशयाऽऽनन्दस्य (मोक्षस्य) प्राप्तिश्च न केवलं ज्ञानेन, न वा केवलं भक्त्या एव संभवति। अपि तु तयोः संयोगेन दुःखस्याऽऽत्यन्तिकनिवृत्तिर्भवति। यतो हि शुद्धभक्तौ द्वैतभावस्यापेक्षा भवति, तादृशावस्थायां मोहोदयस्य सम्भावना भवति, किन्तु ज्ञानिभक्तानां द्वैतभावे मोहोदयो न सम्भवति। अत एव मतेऽस्मिन् ज्ञानाश्रितभक्तितत्त्वस्यैव प्राधान्यं भवति। प्रत्यभिज्ञादर्शनानुसारेण साधको ज्ञातमेव वस्तु पुनर्ज्ञात्वा प्रसन्नो जायते। स गुरोः कृपयाऽद्वयेश्वरं सम्यग् ज्ञात्वा स्वाधीनीकरोति। तादृशावस्थायां तस्य सुमहानानन्दानुभवो भवति। इत्थञ्च प्रत्यभिज्ञादर्शनमद्वैते द्वैतस्य निर्गुणे सगुणस्य चाभिनवा मधुरकल्पना वर्तते। शैवमतस्य प्रत्यभिज्ञादर्शनमिदं वैष्णवानां द्वैताद्वैत-मतसदृशमेव विद्यते। वैष्णवानां द्वैताद्वैतवादस्येव शैवानां प्रत्यभिज्ञादर्शनस्य 'ईश्वराद्वयवाद' स्याभ्यन्तरे भक्तेर्द्वैतमूलकभावनां सन्निवेश्य शिवशक्त्योश्च सामरस्यस्य तादात्म्यस्य वाभिनवा सृष्टिरभूत्।

अस्मिन् मते जगदुपादानकारणं बिन्दुः। बिन्दुविषये च प्रत्यभिज्ञादर्शने-ऽविद्या,

---

१. अग्निषोमात्मको देहो बिन्दुर्यदुभयात्मकः।
दक्षिणांशः स्मृतः सूर्यो वामभागो निशाकरः॥ ३६
इडा वामे तनोर्मध्ये सुषुम्णा पिङ्गला परे॥ ४० शारदातिलके

रागः, कालः, नियतिश्चेति, चतुर्विधा कलाः प्रतिपादिताः[1]। ईश्वरप्रत्यभिज्ञाविमर्शिन्याम् ( ३।१।६ ) तदेव प्रतिपादितमभिनवगुप्तपादाचार्यैः सिद्धान्तागमे बिन्दुरूपाया महामायायाः पञ्चकलाः सन्ति। याः महामायारूपे बिन्दौ शुद्धाशुद्धजगदुपादानत्वमुपपद्यन्ते[2]।

प्रत्यभिज्ञादर्शने शैवागमस्य द्वैतभावेऽद्वैतवादस्य स्थापनाऽभूत्, अथवा प्रकारान्तरेण शाङ्कराद्वैतवाद एव नूतनरूपेण समुपस्थापितः। एवं च दृष्टिगोचरभूतस्य जगतश्च स्वीकृतिः, मायायामनिर्वचनीयसत्यत्वस्य स्वीकारः, शक्तेश्चिद्रूपस्वीकारः, मोक्षादपि परमश्रेष्ठः स्वविमर्शरूपपुरुषार्थस्य सिद्धान्त इत्याद्याः प्रत्यभिज्ञादर्शनस्याभिनवा उद्भावनाः सन्ति। सिद्धान्तेऽस्मिन् सर्वे मनुष्याः स्वजीवने स्वस्वरूपं पुनः ज्ञात्वा मोक्षस्य स्वातन्त्र्यस्य वाऽधिकारिणो भवन्ति।

वस्तुतः स्वातन्त्र्यं जनस्य सुमहानधिकारो वर्तते। स एव शक्तिपदेन विमर्शपदेन च व्यपदिश्यते। यदा शिवः शक्तौ प्रतिबिम्बितो भवति तदा एव सत्तया सह 'अहंविमर्शो' जागर्ति। स 'अहंविमर्शो' एव बिम्बोऽस्ति, तस्यैव प्रतिबिम्बरूपेणाऽऽभासरूपेण वा विश्वस्य प्रतिष्ठा स्थितिर्वा वतते। विश्वं ग्राह्यग्राहकोभयरूपेण वर्तते। एवञ्च शिवशक्त्योस्तादात्म्यसम्बन्धो वर्तते। शिवशक्त्योश्च पारस्परिकतादात्म्यसम्बन्ध[3] एव सामरस्यत्वेनाभिधीयते। तात्पर्यमिदं यत् तन्मयीभावस्य

---

१. महार्थमञ्जर्याः–अष्टादशगाथायां–परिमलव्याख्यायां– श्रीमत्स्वच्छन्देन प्रतिपादितम् पृष्ठे १५–१६।

मलप्रध्वस्तचैतन्यं कलाविद्यासमन्वितम्।
रागेण रञ्जितात्मानं कालेन कलितं तथा॥
नियत्या यमितं भूयः पुंभावेनोपबृंहितम्।
प्रधानाशयसम्पन्नं गुणत्रयसमन्वितम्॥
बुद्धितत्त्वसमासीनमहंकारसमन्वितम्।
मनसा बुद्धिकर्माक्षैस्तन्मात्रैः स्थूलभूतकैः॥

२. अघोरशिवाचार्यकृतायां तत्त्वत्रयनिर्णयवृत्तौ ३, रत्नत्रये ८६, रत्नत्रयव्याख्याम् ८५ शिवार्कमणिदीपिकायाम्
२।२।३८ मृगेन्द्रवृत्तौ, मृगेन्द्रवृत्तिदीपिकायां च—१।१०।१४।

३. अभिनवगुप्तमते शक्तिशक्तिमतोरभेदः सम्बन्धः स्वीकृतः, यथा—
शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं बह्निदाहकयोरिव॥ –बोधपञ्चदशिकायाम् ३।

सुखदस्थितिरेव समरसता, यत्र सम्पूर्णबाह्यविकल्पा विलयं प्रयान्ति, दृश्यं जगच्च प्रकाशितं भवति। समस्तसाधनायाश्चरमोपलब्धिस्तु समरसता प्राप्तिरेव वर्तते। मलिनः पाशबद्धोऽज्ञानी जीवः शिवत्वप्राप्तावेव मुक्तो भवति। शिवत्व प्राप्तयेऽनुपायः, शाम्भवः, शाक्तः, आणवश्चेति चत्वार उपाया निर्दिष्टाः सन्ति। इत्थं च प्रत्यभिज्ञादर्शनस्य मुख्यं लक्ष्यं तु क्षुद्रसीमां परित्यज्य विराट्पुरुषेण सह मनुष्यस्य मिलनमेव वर्तते। प्रत्यभिज्ञा दर्शनेन समस्तसंस्कृतशास्त्रं परिख्यातं परिलक्ष्यते। प्रत्यभिज्ञादर्शने शिवस्य यत् स्थानं तदेव रसशास्त्रे साहित्यशास्त्रे वा रसस्य स्थानं वर्तते। इत्थं च भक्तिरससाधनायाः सैद्धान्तिकनिरूपणदृष्ट्या शैवदर्शनस्य तत्रापि प्रत्यभिज्ञादर्शनस्य विशेषमहत्त्वं वरीवर्ति। प्रत्यभिज्ञादर्शनस्य सैद्धान्तिकपक्षप्रतिपादकाः सोमानन्दरचिता 'शिवदृष्टिः, उत्पलाचार्यकृता "ईश्वरप्रत्यभिज्ञाकारिकाविमर्शिणी, तन्त्रसारः, तन्त्रालोकः, परमार्थशास्त्र" च्चेत्यादयो ग्रन्थाः सन्ति। येषु प्रत्यभिज्ञादर्शनस्य सिद्धान्ताः विशदरूपेण प्रतिपादिताः तत्त्वज्ञैः।

## काश्मीरशैवमते योग-ज्ञान-भक्तीनां समन्वयः

यद्यपि काश्मीरशैवमतमद्वैतवादि वर्तते किन्तु शाङ्कराद्वैतवादात् सर्वथा भिन्नमेव तत्। यतो हि शांकरवेदान्तानुसारेण ब्रह्मणि निष्क्रियता विद्यते परन्तु काश्मीरशैवमतानुसारेण परमेश्वरे सक्रियता विद्यते। अपि च शैवमते ज्ञानेन सह भक्तेः सुन्दरः समन्वयोऽस्ति। काश्मीरशैवसाधकानां दृष्ट्या वास्तविकरहस्यस्य समुद्घाटनाय, प्रत्यक्षानुभूतये, तत्त्वज्ञानाय च योगसाधनस्याऽऽवश्यकतानुभूयते। तेषां मते योगसाधनाभिरेव मनुष्या मायाजन्याऽऽवरणं विमुच्य मोक्षं प्राप्नुवन्ति, मोक्षश्च ज्ञानभक्त्योश्चोन्मेषदशैव वर्तते। ज्ञानमूलाद्वैतभक्तिः सदैवाहैतुकी, आनन्दविधायिका च भवति। सा च स्वानुभूतेः पूर्णानन्दरसः, आत्मविश्वासस्याविचलशक्तिः तत्त्वज्ञानस्य लोकोत्तरशान्तिप्रदायिका चास्ति। अपि च यथा सृष्टेरादौ परमतत्त्वसदाशिवः पूर्णाकृत्रिमस्य 'अहंभावस्य' स्फुरणद्वारा विभिन्नलीलासु प्रवृत्तो भूत्वा स्वयमानन्दितो भवति, एवमेव 'अहं परमेश्वरः' इति भावस्यानुभावकः साधकोऽपि भक्त्यर्थं द्वैतभावं परिकल्प्य तत्रैव रमते। द्वैतभावस्यैव परिकल्पनाऽद्वैतादपि मनोहारिणी। अभिन्नहृदयमित्रयोरिवाथवाऽभिन्नहृदयदम्पत्योरिव जीवात्मपरमात्मनोः समरसानन्दे परिकल्पितद्वैतभावः सुधावदास्वाद्यते[1]।

---

एवमेव हरिणापि प्रतिपादितं वाक्यपदीये—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनैव वर्तते॥ १।२।

१. भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम्।
जातं समरसानन्दं द्वैतमप्यमृतोपमम्॥ बोधसारे ४२
मित्त्रोरिव दम्पत्योर्जीवात्मपरमात्मनोः॥ बोधसारे ४३

काश्मीरशैवमतस्येश्वराद्वयवादः, ज्ञानयोगमूलकभक्तिसिद्धान्तः, शिवशक्त्योः सामरस्यम्, ज्ञानमूलकाहैतुकीभक्तिपद्धतिः, आत्मानुभूतिपरकत्रिकदर्शनमित्येतेषां प्रभावेण भारतीयभक्तिकालिकविविधधर्मसाधना प्रभाविता परिलक्ष्यते। तथा प्रभावितै-र्निर्गुणसगुणोपासकैर्भक्तिरसस्य मार्मिकाभिव्यक्तिः कृता। अत एव भक्तिरसस्य दार्शनिक-स्वरूपविवेचनदृष्ट्या काश्मीरशैवसम्प्रदायस्य दार्शनिकसिद्धान्तस्य साधनापद्धत्याश्च महत्त्वं वर्तते।

## वीरशैवसिद्धान्ते भक्तिरसस्वरूपम्

काश्मीरशैवमतस्येश्वराद्वयवादस्य विरोधे शैवदार्शनिकेन श्रीवसवाचार्येण एकादशशताब्द्यां वीरशैवमतं प्रतिष्ठापितम्। स्वेष्टशिवलिङ्गधारकत्वेन मतमिदं लिङ्गायतसम्प्रदाय इति नाम्नापि कथ्यते तत्सम्प्रदायतत्त्वज्ञैः, तस्य मुख्यसिद्धान्तस्तु शक्तिविशिष्टाद्वैतवाद इति कथ्यते। इष्टलिङ्गधारणे जीवगतप्रारब्धादिकर्मप्राप्तजाड्य-निवारणद्वारा 'अयमहमेतज्जातिसंभवः' इत्यादिसंकोचभावान्निरस्य शिवांशोऽहं न मे यज्ञादिकर्मकाण्डोक्तकर्मभिः प्रयोजनमिति हेतोर्भगवतः शिवस्य भक्तैकपक्षपातितया तद्भक्तिरेव सकलकर्मबन्धनोद्धाराय प्रभवति, शिवस्य सर्वात्मसमवेतत्त्वात्। वस्तुतः सर्वान्तरात्मतत्त्वादात्मज्ञाने सर्वस्याप्यधिकृतत्त्वात् शिवधर्मानुसरणे लिङ्गधारणे च न कोऽपि जात्यादिकृतः प्रतिबन्धो वर्तते। शिवधर्माकांक्षा तु 'यमेषः वृणुते तेन लभ्यः' इति श्रुतिसिद्धान्तानुसारेण शिवानुग्रहादेव स्यादिति लिङ्गायतसिद्धान्तः। एतस्यात्र श्वेताश्वतराद्युपनिषदः कामिकाद्यागमोत्तरभागश्च प्रमाणत्वेन परिग्रहीताः। निगमाग-मसकलशास्त्रं सम्यग् समधीत्य संसारपारावारे निमग्नानां मानवानां समुद्धाराय श्रीवसवाचार्यः स्वोपदिष्टसिद्धान्तस्याष्टावरण-पञ्चाचाररूपं धर्मं प्राकटयत्। यथा हि-गुरु-लिङ्ग-जङ्गम-पादोदक-प्रसाद-भस्म-रुद्राक्ष-मन्त्रात्मकान्यष्टावरणानि लिङ्गाचार-शिवा-चार-सदाचार-भृत्याचार-गणाचारात्मकाः पञ्चाचाराश्चेति[1]।

श्रीवसवाचार्यमतानुसारेण सिसृक्षुर्भगवान् शिवः स्वात्मानं वासनानुरूपेण तत्तत्सुखदुःखनिःश्रेयसानुरूपामेकां सृष्टिं चिकीर्षति। कस्यचिद् रागादिदोषयुक्ता सा वासना स्तिमिताग्निरिव संतापगर्भा, अन्यस्य दयादिभावयुक्तस्याम्राद्यङ्कुरगतस्वा-दुत्वनिभा, ततोऽप्यन्यस्य भगवद्भक्तिरससनाथस्य कुमारीगतवल्लभानुरागतुल्याऽनुद्बुद्धा तिष्ठति। भगवतः कृते सृष्ट्युन्मेषे प्राप्तविकासा लब्धस्वाभिव्यक्तिसाधनाः सत्यः वासनाः सृष्टिं संतापमयीं सुखमयीमानन्दमयीं वाऽनुभावयन्ति। एवञ्च तन्मते शिवात्मनोरवि-

---

१. सारस्वतीसुषमायां प्रकाशितः 'लिङ्गायतसिद्धान्तबिन्दुः' निबन्धो द्रष्टव्यः, वि० सं० २०१३, एकादशवर्षे ३-४ अङ्कौ।

भज्यस्थितिः सृष्टिप्रसरश्चेति प्रतिपादितम् । अपि च भक्तशिवयोरनादिरनन्तः सम्बन्धः सामरस्यात्मकः, येनानादिरात्मा नवनवोल्लासं शिवं मनसि संस्थाप्यप्याऽऽदरेण संपश्यति । एवञ्च तत्र शिवभक्तयोरनादिः सम्बन्धः सामरस्यात्मकः प्रतिपादितः । भक्तस्य मुखदर्पणे शिवः प्रतिफलति, यतो हि शिवो भक्तदेहैकदेहो न क्षणमपि तस्माद् भिन्नस्तिष्ठति । साधकस्य वाग्विलासे देवः समेधते । एवञ्च तत्र भक्ताधिकरणे सर्वदा शिवस्य स्थितिः प्रतिपादिता । तत्र च भावाऽऽनुगुण्येनास्य लोकस्यैवानन्तलोकता वर्णिता ।

विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥

इत्यादिप्रमाणैरुपबृंहितमहिम्ना युक्तां प्रणवपूर्वां पञ्चाक्षरीमनुसृत्य तत्सम्प्रदायस्य स्थापना कृता । तत्र नमः शब्देन आत्मा, शिवशब्देन शिवः, आयांशेन च तयोरन्योन्ययोः सामरस्यात्मकः सम्बन्धः प्रतिपाद्यते । तत्त्वमस्यादिमहावाक्यानि चेममेवार्थं प्रतिपादयन्ति । अस्यार्थस्य सम्प्राप्तये शरीरे स्वेष्टलिङ्गधारणं हृदये शिवस्वरूपमनुसन्धानं भावे च तत् सामरस्यसमाहितिरित्येतत् साधनमिति । तत्र ज्ञानक्रिययोः पार्थक्यं न स्वीकृतम् । अपि तु तयोः सामरस्यमेव स्वीकृतम् । जानामीति व्यवहारे ज्ञानस्य क्रियाऽभिन्नत्वात् करोमीत्यत्र कर्तृताया अपि स्फुरद्रूपत्वाज्ज्ञानक्रिययोः सामरस्यम् । तेन केवलज्ञानानुष्ठानाय लब्धकर्मसन्यासेन यज्ञोपवीतत्यागवत् शरीरगृहीतशिवलिङ्गपरित्यागो न भवति ।

लिङ्गायतमतस्यास्य दार्शनिकसिद्धान्तस्तु शक्तिविशिष्टाद्वैतरूपो वर्तते । तत्र स्थूलचिदचिच्छक्तिविशिष्टजीवस्य सूक्ष्मचिदचिद्विशिष्टशिवस्य चाद्वैता स्वीक्रियते । मतेऽस्मिन् शिवः पूर्णाहन्तारूपः पूर्णस्वतन्त्ररूपो वा वर्तते । अपि च तत्र परमेश्वरोऽनन्तचैतन्यस्वरूपः । एवञ्च वीरशैवसाधकानां मते जीवस्य परमेश्वरेण ( शिवेन ) सह तादात्म्यं प्राप्य तेनैवाऽऽनन्दानुभूतिरेव परममुद्देश्यं वर्तते । जीवात्मपरमात्मनोश्चायं तादात्म्यभाव एव भक्तिरससाधनायाः स्रोतो विद्यते । तत एव भक्तिरसधारा भक्तानां मनसि सततं प्रवहति ।

# शाक्तदर्शने भक्तिरसस्वरूपम्

## शक्तितत्त्वम्

शक्तेरुपासकः शाक्तः, तस्य मतं शाक्तमतमित्यभिधीयते । तन्मते परमेश्वरः पराशक्तिरिति कथ्यते । तस्याः पराशक्तेरेवाऽऽनन्दभैरवी-महाभैरवी-त्रिपुरसुन्दरी-ललिताप्रभृतीनि नामान्तराणि सन्ति । वेदोपनिषत्पुराणादिषु च ब्रह्मणः त्रिगुणात्मिका प्रकृतिरेव शक्तिरित्युच्यते । ऋग्वेदस्य रात्रिसूक्ते, देवीसूक्ते, श्रीसूक्ते,

अथर्ववेदस्य देव्यथर्वशीर्षे च भगवत्याः ( शक्तेः ) आराधनायाः ( भक्तेः ) विकसित-स्वरूपमुपलभ्यते। वेदेषु परमरमणीया प्रकृतिर्वर्णिता महर्षिभिः। इयमेव प्रकृतिः पश्चादुपास्या शक्तिः स्वीकृता जनैरितित्याधुनिका मन्यन्ते।

## शिवतत्त्वम्

शिवरूपपरमपुरुषस्य ब्रह्म शक्तिश्चेति शक्तिद्वयमस्ति, यतो हि परमपुरुषः स्रष्टा विश्वनिर्माणचिकीर्षया स्वात्मानं ब्रह्म शक्तिरिति द्वेधा विभक्तवान्। ऋग्वेदानुसारं सम्पूर्णं जगदिदं शक्त्या निर्मितमस्ति। उपनिषत्स्वपि सरस्वती-गायत्री-सावित्रीप्रभृतिरूपेण विश्वरचयितृशक्तेर्महिमा वर्णित उपलभ्यते। तात्पर्यमिदं यत् प्रागैतिहासिककालादारभ्य प्रवर्तितायाः शक्तेरुपासनाया गौरवाशलिपरम्परया भारतीयमनीषा प्रभाविता संबभूव। अत एव परिणामस्वरूपतया परमपुरुषस्य ब्रह्मरूपेण सार्धं शक्तिरूपस्यापि प्राधान्यमभवत्। वस्तुतः परमपुरुषो ब्रह्म-शक्तिश्चेति रूपद्वयेन विभक्तोऽपि वस्तुतोऽविभक्त एव। ब्रह्मणः तस्याः शक्तेश्चेयं सम्पृक्तता दाम्पत्यभावद्वारा यदाऽभिव्यज्यते तदा भक्तिरसस्या-भिव्यक्तिर्भवति।

चराचरविश्वस्य सर्वेषां पदार्थानाभादावन्ते च सा एव महाशक्तिरस्ति। संसारस्य सर्वे पदार्थाः तस्या एव स्वरूपाणि सन्ति। सा एव महाशक्तिः परमेश्वररूपाऽपि विद्यते। सा एव सर्वभूतेषु मात्रादिसर्वरूपेण वर्तते[1]। शक्तिं विना सर्वे पदार्थाः निष्क्रिया एव। अतश्चराचरे विश्वस्मिन् तस्या एव रूपं प्रतिक्षणं विविधरूपेण दृष्टिगोचरी भवति। भौतिकविज्ञानानुसारेण प्रकाशः, विद्युत्, तापः, आकर्षणादयः सर्वे तस्या एव विविधरूपाणि सन्ति। यद्यपि शक्तिरदृश्यरूपा एव तथाऽपि सा विविधरूपैः स्वप्रभावं प्रदर्शयत्येव। शक्तिस्तु न शून्यादुत्पद्यते, न वा शून्ये विलीयत एव। अविनाशितत्त्वं त्वविनाशिशक्तेरेव रूपान्तरं वर्तते। अत एव समस्तचराचरस्य स्थूलः सूक्ष्मो वा पदार्थः शक्तेरेव परिवर्तितं रूपम्। उपासकैः सा महाशक्तिर्भवानी काली दुर्गादिरूपेण परिकल्पिता। सा परमेश्वरस्यैव शक्तिः, या भोगे भवानी, योगे कुण्डलिनी, कोपे काली, समरे च दुर्गा भवति। भारतीयदर्शनानुसारेण समस्तजगन्मूले एकमेव शक्तितत्त्वं विद्यते। तदेवानेकरूपेणाभिव्यज्यते[2]। सर्ग-स्थिति-नाशहेतुरपि शिवः शक्तिं विना किमपि कर्त्तुं न शक्नोति, यतो ह्याधारं विना शक्तेः प्रयोगो न

---

१. या देवी सर्वभूतेषु मातृरूपेण संस्थिता॥ दुर्गासप्तशत्याम् ५।७१–७३
या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता॥ दुर्गासप्तशत्याम् ५।३२–३४

२. अथ ह्येनां ब्रह्मरन्ध्रे ब्रह्मरूपिणीमाप्नोति, भुवनेश्वरी तूर्यातीताः॥
—भुवनेश्वर्युपनिषदि

सम्भवति । अत एव 'परिपालय देवि ! विश्वं सर्वोपकारकरणाय सदार्द्रचिता' इत्यादिरूपेण विश्वाधिष्ठात्री जगदम्बिका प्रार्थ्यते ।

## क्रियाभेदेन शक्तेः रूपद्वयम्

जगतः संहारकल्याणकारिण्यास्तस्याः शक्तेः रुद्रं कल्याणञ्चेति रूपद्वयं वर्तते । रूद्ररूपे रुद्रेण सह कल्याणरूपे शिवेन सह तस्याः सम्बन्धोऽस्ति । एवं च शक्त्या सह सम्पृक्तत्त्वेनैव शिवो रुद्रो वाऽर्द्धनारीश्वर इति कथ्यते । तन्त्राचारे शक्तिः सात्त्विक-राजसिक-तामसिकभेदेन रूपत्रयं लभते । तत्र सात्त्विकरूपाशक्तिः वैदिकपरम्परानुकूला, किन्तु राजसिकतामसिकरूपा तु मद्यमांसभक्षणादिवेदवाह्याऽऽचारे समाविश्यते । प्रोक्तशक्तित्रयानुसारेण शक्तेरुपासनायाः शिष्टपद्धतिः, भयङ्करपद्धतिः, भावात्मकपद्धतिश्च प्रचलिताः । शिष्टपद्धतिस्तु शक्तेरुपासनाया अहिंसात्मकपद्धतिर्वर्तते । भयंकरपद्धत्यां पशूनां मनुष्याणां च बलिविधानम् , मद्यमांसादिसेवनरूपाचारो भवति । भावात्मकपद्धत्यां तु साधकः स्वोपास्येन सह तादात्म्यसम्बन्धं स्थापयन्नुपासनां करोति । तत्र प्रथमोपासकः स्मार्त्तः, द्वितीयः शैवः, तृतीयस्तु शाक्तः कथ्यते । इत्थञ्च भावात्मकसाधनायां स्वभावत एव शाक्तभक्तिरससाधना समाविश्यते ।

## शिवशक्त्योश्च सम्बन्धः

शिवशक्त्यौ च परस्परं वागर्थाविव चन्द्रचन्द्रिक इव सम्पृक्ते स्तः । शिवे शक्तिः, शक्तौ शिवश्च विद्यते[1] । अथवा वृक्षं विना छायायाः, छायां विना वृक्षस्य परिकल्पनाऽपि भवितुं नार्हति तथैव शिवं विना शक्तेः, शक्तिं विना शिवस्य च कल्पनाऽपि नार्हति[2] । शिवशब्दस्थ इकारः शक्तेः सम्पृक्ततायाः एव द्योतको वर्तते[3] । शक्तिः शिवस्य सिसृक्षा ( सृष्टिकरणस्येच्छा ) विद्यते । सा सर्वेषां पदार्थानां सृष्टिहेतुः शक्तिः, शिवस्य क्रियाशक्तिश्चास्ति[4] । शक्तिरहितः शिवः किमपि कर्त्तुं न शक्नोति[5] ।

---

१. शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरे शिवः ।
अन्तरं नैव जानीयात् चन्द्रचन्द्रिकयोरिव ॥ सिद्धसिद्धान्तसंग्रहे ४।२६

२. न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
अन्योन्यं च प्रवर्त्तन्ते अग्निधूमौ यथा प्रिय ॥
न वृक्षरहिता छाया न च्छायारहितो द्रुमः ॥ सिद्धसिद्धान्तसंग्रहे

३. शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः । देवीभागवतस्य कवचे

४. कुलस्य सामरस्येति सृष्टिः हेतुः प्रकाशनम् ।
सा चापरम्परा शक्तिरादेशस्यापरं कुलम् ॥
प्रपञ्चोऽस्य समस्तस्य जगत्रूपं प्रवर्त्तनात् ॥ सिद्धसिद्धान्तसंग्रहे

५. शिवोऽपि शक्तिरहितः कर्त्तुं शक्तो न किञ्चन ।
शिवः स्वशक्तिसहितः समासोद्भासको भवेत् ॥

शाक्ततन्त्रेषु शिवशक्त्योश्च सम्मिलितं स्वरूपं चणकमिति भण्यते। चणकस्यभागद्वयवत् शिवः शक्तिश्चाऽस्ति तस्य तुषारूपा च माया वर्तते।

शाक्तमतानुसारेण यदा पराशक्तेश्चेतसि विश्वनिर्माणस्येच्छा समुत्पद्यते, तदैव तस्याः शक्तिः शिवश्चेति रूपद्वयं भवति। तत्र शिवः प्रकाशस्वरूपः शक्तिश्च विमर्शरूपा वर्तते। विमर्शो नाम 'पूर्णाकृत्रिमाहंभावस्य स्फुर्तिरस्ति'। स एव चितः चैतन्यम्, स्वातन्त्र्यम्, कर्तृत्वं स्फुरणता चेति कथ्यते। प्रकाशो विमर्शश्च 'युगपदिति कथ्यते। प्रकाशः शिवो वा 'संवित्' विमर्शः 'युक्तिश्चेति'। शिवशक्त्योश्चाऽऽन्तरनिमेषः 'सदाशिवः' बाह्योन्मेषश्च 'ईश्वरो' भण्यते। 'परा' 'संवित्' इत्याख्या शिवस्य शक्ति सर्गात्मिकाऽस्ति। शिवतत्त्वे 'अहमिति विमर्शः' सदाशिवतत्त्वे 'अहमिदमिति विमर्शः' ईश्वरतत्त्वे 'इदमिदमिति' विमर्शो भवति। तत्र प्रत्येकस्मिन् प्रथमपदस्य प्राधान्यं भवति। मायातत्त्वं तु अहमिदंतत्त्वयोः पार्थक्यं करोति। तत्राहमंशः पुरुष इदमंशश्चप्रकृतिः। परन्तु यदा शिवः पुरुषरूप भवति तदा माया कला-विद्या राग-काल-नियतिप्रभृतिपञ्चोपाधीन् रचयति, या 'कञ्चुकम्' 'आवरणं' वेति कथ्यते। ततः सांख्यदर्शनरीत्या विकासो जायते। आविर्भावस्य विपरीतक्रमेण तिरोभावो भवति। तत्राऽऽविर्भावः सृष्टिविज्ञानं तिरोभावश्च साधनेति व्याख्यायते।

तन्त्रसिद्धान्तानुसारेण 'शिवाद् भैरवो, भैरवात् श्रीकण्ठः, श्रीकण्ठात् सदाशिवः, तस्मादिश्वरः, तस्माद् रुद्रः, तस्माद् विष्णुः, तस्माद् ब्रह्माऽऽविर्भवन्ति। एतदेव शिवस्याष्टमूर्तिः, यस्याः समुच्चयो महासाकारपिण्ड इति कथ्यते[1]। तन्मते आत्मपरमात्मजीवात्मनां त्रयाणामैक्यमेव[2]। शाक्ततन्त्रानुसारेण शिवाद् महाकाशः, तस्माद् महावायुः, तस्मात् महातेजः, तस्मान् महासलिलम्, तस्मान् महापृथिवी च संभूता[3]। एवमेव तैत्तिरीयोपनिपद्यपि वर्णितम्[4]। तन्मते परासंवित् परमशिवो वा लीलाविलासेन जगत् सृजति, विस्तारयति संकोचयति च। अत एव जगदिदं चिद्विलासरूपमेव वर्तते।

---

१. शिवाद् भैरवो, भैरवात् श्रीकण्ठः, श्रीकण्ठात् सदाशिवः।
सदाशिवात् ईश्वरः, ईश्वरात् रुद्रः, रुद्रात् विष्णुः, विष्णो ब्रह्मा॥
—सिद्धसिद्धान्तसंग्रहे

२. आत्मेति परमात्मेति जीवात्मेति विचारणे।
त्रयाणामैक्य संभूतिः आदेश इति कीर्तितः॥
सिद्धसिद्धान्त संग्रहे

३. आद्यात् महाकाशः, महाकाशात् महावायोर्महातेजः, महातेजसो
महासलिलम् महासलिलात् महापृथिवी॥
सिद्धसिद्धान्त पद्धत्याम्।

४. एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः,
अग्नेरापः, अद्भ्यः पृथिवी।
तैत्तिरीयोपनिषदि २।१।

मूलतत्त्वस्य 'परासंवित्' इत्यस्य जगदिदं विलासोऽस्ति। स एव वेदान्तिनां ब्रह्म शैवागमानां च परमशिवो विद्यते। शिवः शक्तिश्चेति तस्य रूपद्वयमस्ति। तत्र सदाशिवे नादस्यातत्त्वस्य च, ईश्वरे च बिन्दुतत्त्वस्याहंतत्त्वस्य च प्राधान्यं भवति।

दार्शनिकदृष्ट्या शाक्तमतेऽद्वैतवादस्य प्रधान्यं वर्तते। शाक्तमते षट्त्रिंशत्तत्त्वानि सन्ति, यानि शिवतत्त्व-विद्यातत्त्वाऽऽत्मतत्त्वरूपेण त्रिधा विभज्यन्ते। तत्र शिवतत्त्वेन सह शक्तितत्त्वमपि सम्मिलितं वर्तते। एवमेव विद्यातत्त्वे सदाशिवः, ईश्वरः, शुद्धविद्या चेति तत्त्वत्रयं वर्तते। आत्मतत्त्वे तु एकत्रिंशत्तत्त्वानि सन्ति यथाहि-माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, बुद्धिः, अहंकारः, मनः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चविषयाः पञ्चमहाभूतानि चेति सन्ति

## शिवशक्त्योश्च सामरस्यम्

शैवमतानुसारेण शिवतत्त्वे शक्तिभावस्य गौणत्वं शिवभावस्य च प्राधान्यमस्ति, किन्तु शाक्तमते शक्तिभावस्यैव प्राधान्यं शिवभावस्य च गौणत्वं भवति। किन्तु तत्त्वातीतदशायां तु शाक्तशैवोभयमतेऽपि शिवभावः शक्तिभावश्च साम्यावस्थां प्राप्नोति। सा साम्यावस्था एव शिवशक्त्योश्च सामरस्यं वर्तते। तदेव शैवमते परमशिवः शाक्तमते च पराशक्तिरिति कथ्यते। शिवशक्त्योः सामरस्यद्वारा परमानन्दस्य प्राप्तिरेव शाक्तशैवसाधकानां परमं लक्ष्यमस्ति। मूलाधारस्याग्निचक्रस्थितां कुण्डलिनीरूपशक्तिं प्रबोध्य क्रमशः षट्चक्राणि विभिद्य सहस्रारसरोरुहरूपकैलाशस्थितेन शिवेन सह मधुरसंयोग एव समरसानन्दस्य स्थितिर्विद्यते[1]। महापतिशिवेन सह महाशक्तिकुण्डलिन्याश्च मधुरसंयोगोऽयं सामरस्यावस्था वा शाक्ततन्त्रेषु स्त्रीपुरुषयोश्च रतिक्रीडाया माध्यमेन वर्णिता वर्तते। तथाहि-यथा राजमार्गेण गमनशीला काऽपि स्त्री कस्मिंश्चित् गुप्तस्थाने स्वपतिना उपपतिना सह वा प्रगाढालिङ्गनानन्तरममृतस्य (शुक्रस्य) प्रस्रवणं कारयति तथैव सुषुम्नामार्गेण गमनशीला कुण्डलिनीशक्तिर्गुप्तस्थानेषु (षट्चक्रेषु) परिसर्पन् सहस्रारस्थितस्य महापतिशिवस्याऽऽलिङ्गनेऽमृतस्य प्रस्रवणं कारयति च। देवीपुराणानुसारेण यथा स्त्रिया सह मिलने सति पुरुषाभ्यन्तरेऽग्निः प्रज्वलति तथैव कुण्डलिनीशक्तेर्मिलने सति अग्निना चन्द्रो द्रवति प्रस्यन्दति वा।

---

१. अत ऊर्ध्वं दिव्यरूपं सहस्रारं सरोरुहम्।
ब्रह्माण्डव्यस्तदेहस्य वा तिष्ठति च सर्वदा॥
कैलाशो नाम तस्यैव महेशो यत्र तिष्ठति॥
—शिवसंहितायाम् ५।१५१, १५२।

वस्तुतः प्रकाशरूपशिवस्य विमर्शरूपायाः शक्तेश्च सामरस्यावस्था तत्त्वातीतदशा एवास्ति। प्रथमावस्थायां तत्त्वातीतस्य परमशिवस्य प्रबोधनाय अकारः प्रयुज्यते, द्वितीयावस्थायां शिवस्य शक्तेश्च सामरस्यं भवति, तत्र शिवोऽकारः प्रकाशो वा, तथा शक्तिश्च हकारो विमर्शो वा कथ्यते। तत्र शिवअग्निरूपात्मक शक्तिश्च सोम-रूपात्मिका विद्यते, तयोर्बिन्दुरूपेण परिणतिरेव अहं भावो रक्तरूपेण वर्तते। किन्तु प्रोक्तसाम्यभङ्गे सति बिन्दुरयं शुक्लरूपेण वाभिव्यज्यते। यथा अग्निना सह संयोगे घृतं द्रवति तथैव प्रकाशात्मकशिवेन सह संयोगे सति विमर्शरूपा पराशक्तिरपि द्रवति। तस्मात् परमानन्दरूपामृतधारा प्रस्यन्दति। सा एव चित्कला ब्रह्मानन्दस्वरूपं वा विद्यते।

शाक्तदर्शने शक्तेरद्वैतभावस्य, शक्तिभावस्य प्रधानतायास्त्रिगुणतत्त्वातीतदशायां शिवशक्त्योश्च सामरस्यभावस्य पञ्चमकारोपासनाभिश्च सह भक्तिरससाधना सम्यक्तया परिज्ञायते। शाक्तभक्तिरससाधनाया आधारभूततत्त्वं तु शक्तिवाद एवास्ति। तस्यैव शक्तिवादस्य पूर्णप्रतिष्ठानमेव शाक्तदर्शनस्य चरमं लक्ष्यं विद्यते। प्रायः संसारस्य सर्वे साधनामार्गाः शक्तिवादेन प्रभाविताः परिलक्ष्यन्ते, यतो हि शक्तिवाद एव साधकसाध्योश्चैकतायाः, पूर्णतायाः, मधुरतायाश्च साधनं विद्यते।

## तन्त्रदर्शने भक्तिरसस्वरूपम्

तन्त्रशब्दार्थः—विस्तारार्थकतनुधातोः 'सर्वधातुभ्यः ष्ट्रन्' इत्युणादिसूत्रानुसारं ष्ट्रन्प्रत्ययान्तः, तनोति तन्यतेऽनेन वेति व्युत्पत्यनुसारं, अथवा कुटुम्बधारणार्थकात्[1] तन्त्रिधातोःर्भावे (३।३।१८) इत्यष्टाध्यायीसूत्रानुसारं घञ्प्रत्ययान्तः, तन्त्रशब्दः सिध्यति। एवं च यत् सर्वं ज्ञानराशिं विस्तृणाति, विस्तारेण प्रकटयति, तदनुसारि कुटुम्बं समूहं बिभर्त्ति, तत्तन्त्रम्। अपरञ्च 'तन्यते विस्तार्यते ज्ञानमनेन इति तन्त्रम्' इति व्युत्पत्यनुसारेण तन्त्रमन्त्रसमन्वितान् विपुलार्थान् यत् शास्त्रं विस्तारयति त्रायते च तदेव तन्त्रमभिधीयते[2]।

---

१. तन्त्रं कुटुम्बकृत्ये च सिद्धान्ते चौषधोतमे ।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥
श्रुतिशिखान्तरे हेतावुभयार्थं प्रयोजके ।
इति कर्तव्यतायां च ... ... ... ... ...
—मेदिनीकोषे

२. तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान् ।
त्राणञ्च कुरुते यस्मात् तन्त्रमित्यभिधीयते ॥ कामिकागमे

दैविकोपकरणादिभिः स्वाभिलषितेऽर्थे मनसो नियोजनं तन्त्रमिति। परमात्मनः परमेश्वरस्य यैर्यैरुपकरणैर्विस्तृतं ज्ञानं भवति तत्तदुपकरणं पूजाप्रकारो वा तन्त्रमित्यपरे। तेन या साधना निर्दिश्यते सा तन्त्रसाधना। तयैव सर्वे क्रियाकलापाः सिद्ध्यन्ति।

विभिन्नशास्त्रानुसारेण विभिन्नदार्शनिकमतानुसारेण च तन्त्रशब्दो बहुष्वर्थेषु प्रयुज्यते[1]। किन्तु तान्त्रिकसम्प्रदायानुसारेण तदेव तन्त्रमभिधीयते यस्मिन् शास्त्रे दैवीशक्तीनां स्वरूप-गुण-कर्मणामनुचिन्तनं तद्विषयकमन्त्राणामुद्धारः, तद्विषयकदेवानां ध्यानम्, पटल-पद्धति-कवच-सहस्रनाम-स्तोत्रादिपञ्चोपासनानां च स्वरूपप्रतिपादनमुपलभ्यते। अपि च वराहीतन्त्रानुसारेण सृष्टिः, प्रलयः, देवार्चनम्, सर्वसाधनम्, पुरश्चरणम्, षट्कर्मसाधनम्, (शान्तिः, वशीकरणम्, स्तम्भनम्, विद्वेषणम्, उच्चाटनम्, मारणम्) ध्यान-योगश्चेत्यादिसप्तविधलक्षणसमन्वितं शास्त्रं तन्त्रमागमो वेत्याभिधीयते[2]। यथा भारतीयसभ्यता वैदिकज्ञानसमाश्रिता विद्यते तथैव सा स्वप्रतिष्ठायै तन्त्राश्रिता वर्तते[3]। अत एव सा भारतीयसभ्यता संस्कृतिर्वा निगमागममूला कथ्यते भारतीयतत्त्वविद्भिः।

भारतीयधर्मसाधनायां तन्त्राचारस्य सन्निवेशः कदाभूदित्यस्मिन् विषये विदुषां मतैक्यं नास्ति। श्रीहरप्रसादशास्त्रिश्रीविनयतोषभट्टाचार्यप्रभृतिविदुषां मते शकानां महापुरोहितैः सह तन्त्राचारो भारते आजगाम। प्राचीनभारतीवाङ्मये यत्र तत्र तन्त्राचारस्य विषयेऽद्भुतम्, अवैदिकमित्याद्याक्षेपवाक्यं लभ्यते। तत्र च तन्त्रग्रन्थेषु बहिरागतदेवानां वर्णनम्, कूर्मपुराणे द्विजसुलभवेदाध्ययनस्याधिकारच्युतैः ब्राह्मणैस्तान्त्रिकसम्प्रदायस्य स्थापनाभूदित्यादिकथनेन ज्ञायते यत् तन्त्राचारोऽवैदिकोऽस्तीति। अथर्ववेदे मारण-मोहनोच्चाटन-मन्त्र-तन्त्रसिद्धिप्रभृतिगुह्यसाधनापरकाभिचाराणां पर्याप्तं वर्णनं प्राप्यते, यत् भारतीयानार्यजनैः सह सम्बध्यते। संभाव्यते यत् कालान्तरे आर्येतरसाधनापद्धतिरियमार्यजनैरपि गृहीतेति।

---

१. स्मृतिश्च तन्त्राख्या परमर्षि प्रणीता॥ —ब्रह्मसूत्रे २।१।१ शाङ्करभाष्ये

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः।
यतयो योगतन्त्रेषु यान् स्तुवन्ति द्विजातयः॥ —महाभारते

२. सृष्टिश्च प्रलयश्चैव, देवतानां यथार्चनम्।
साधनं चैव सर्वेषां पुरश्चरणमेव च॥
षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः॥ —वाराहीतन्त्रे

३. बौद्धदर्शने पृष्ठे ४१८ श्रीबलदेवोपाध्यायस्य तथा पुराणविमर्शे पृष्ठे ४४६

तात्पर्यमिदं यत् तन्त्राचारो निम्नवर्गीयलोकानां जीवनेन सह सम्बद्धविविधलोकाचाराणाम्ः रहस्यपूर्णानुष्ठानानाम्, विविधदेवपूजनविधीनाम्, यन्त्रमन्त्राणाम्, गुह्यसाधनानाञ्च समन्वितं रूपं प्रतीयते। कालान्तरे प्रोक्ततत्त्वाधारेण विभिन्नतान्त्रिकसम्प्रदायाः प्रचलिताः, तैश्च स्वस्वसिद्धान्तानुरूपेण स्वेष्टदेवी-देवानां स्वरूपम्, सम्बन्धः, स्वभावः, व्यवहारः, क्रिया, अभिचारः, यन्त्रमन्त्रादयश्च निर्मिताः। एवञ्च क्रमेण विविधतान्त्रिकसम्प्रदायस्य विकासोऽभूत। कालान्तरे वैदिकतान्त्रिकसम्प्रदाययोः स्वस्वश्रेष्ठता सिद्ध्यर्थं महान् कलहो, समभूत्। अतः सम्पूर्णवैदिकवाङ्मये तन्त्राचारोऽभारतीयरूपेण स्वीकृत्य विगर्हितो वैदिकैः। तान्त्रिकैश्च वैदिकः संस्कारोऽपवित्र इति कृत्वा विगर्हितः। अत एव समस्ततान्त्रिकवाङ्मये वैदिकसंस्कारो गणिकाव्यवहारसम इत्यभिदाय निन्दितो दृश्यते[1]।

निगमागमानां पारस्परिकसम्बन्धनिर्धारणस्य विषयोऽतिजटिलो वर्तते, यतो हि तन्त्रस्य कश्चिद्भागः सर्वथा वेदानुकूलस्तथाऽपरश्च भागः सर्वथा प्रतिकूलोऽपि विद्यते। तन्त्राचारे कतिपये पञ्चरात्रागमाः शैवागमाश्च वेदमूलकाः सन्ति तथापि प्राचीनवैदिकवाङ्मये ते वेदबाह्योद्घोषिताः। शाक्तमतस्य सप्तविद्याचारेषु केवलं वामचार एव तामसतया बहिष्कृतो वेदाद्। यद्यपि शाक्तमतस्य कतिपयांशाः तामसतया वेदबाह्यत्वेन निरूपितास्तथापि बहूनि शाक्ततन्त्राणि वेदानुकूलानि सन्ति। ऋग्वेदस्य वागम्भृणीसूक्ते (१०।१२५) प्रतिपादितस्य शक्तितत्त्वस्यैव भाष्यं शाक्ततन्त्रे समुपलभ्यते। बृहदारण्यकोपनिषदि[2], छान्दोग्योपनिषदि[3] च पञ्चाग्निविद्याप्रसङ्गे 'योषा वाव गौतमाग्निः' इत्यादिषु तस्यैव समर्थनं प्राप्यते। मधुविद्यायां अपीदमेव रहस्यम्। सूर्यस्योर्ध्वमुखा रश्मयो मधुनाड्यः सन्ति, गुह्याऽऽदेशा मधुकराः सन्ति, ब्रह्म एव पुष्पम्, तस्मात् प्रस्रवितममृतं देवाः पिबन्तीति।

भारतीयतत्त्वविदां विदुषां मते वस्तुतः प्राचीनकालादेव भारते वैदिकाऽऽचारः तान्त्रिकाचारश्च प्रवाहिते आस्ताम्। तत्र वैदिकाऽऽचारः सर्वसाधारणेषु स्वसिद्धान्त

---

१. वेदशास्त्रपुराणानि सामान्यगणिका इव ॥ घेरण्डसंहितायाम्

२. असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद् रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गरा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥ बृहदारण्यकोपनिषदि । ६।२।९

३. तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ ५।८।२ तथा च योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गरा अभिनन्दा विस्फलिङ्गाः ॥ ५।८।१ । छा० उ०

तमप्रतिपादयत् किन्तु तान्त्रिकाऽऽचारः कतिपयेषु एव गुह्यरूपेण स्वसिद्धान्तमप्रत्यपादयत्। किन्तु यस्मिन् काले यस्य प्राधान्यमासीत् तस्यैव प्राधान्येन व्यपदेशोऽभूत्। एवञ्च दृश्यते वैदिकपूजया सहैव तान्त्रिकाचारपद्धतिरपि आसीदित्यत्र नास्ति विचिकित्सालेशोऽपि विदुषां मते[1]।

## तान्त्रिकाद्वैतवादः

तन्त्रमद्वैतवादस्य साध्यमस्ति। प्रायः सर्वेषां साध्यानां पूर्णरूपेण पर्यवसानमद्वैते भवति। वस्तुतः शाक्तसाधकस्यापि इयमेवाद्वैतानुभूतिर्यदहं स्वयमेव देवीस्वरूपोऽस्मि, भिन्नो नास्मि, अहमेव सर्वविधशोकविनिर्मुक्तं साक्षाद् ब्रह्म एवास्मि, अहमेव च नित्यः शुद्धो बुद्धो मुक्तस्वभावः। सच्चिदानन्दस्वरूपोऽस्मि[2]। कुलार्णवतन्त्रानुसारेण परब्रह्म तु निष्कलम्, शिवस्वरूपम्, सर्वज्ञम्, स्वयंज्योतिः, आद्यन्तहीनम्, निर्विकारम्, सच्चिदानन्दस्वरूतं वर्तते। जीवो जगच्चाग्निस्फुलिङ्गवत् तस्यैवांशाद् समुद्भूते स्तः[3]। एवं च ब्रह्म अंशी जीवश्च तस्यैवांशो विद्यते। पूर्णताप्राप्त्यर्थमंशरूपजीवस्यांशिरूपब्रह्मणा सह तादात्म्यमेव भक्तिरससाधनायाश्चरमं लक्ष्यं विद्यते।

तान्त्रिकसाधनायां साधकस्य मानसिकसाधनानुसारेण पशुभावो वीरभावो दिव्यभावश्चेति भावत्रयमिति निष्पादितम्। तत्राविद्यावरणेन यस्मिन्नद्वैतज्ञानस्य लेशोऽपि न भवति, तस्मिन् तस्य साधकस्य मानसिकप्रवृत्तिर्पशुभावस्य भवति। स पशुवदज्ञानरज्ज्वा निबद्ध्यते। यश्चाद्वैतज्ञानामृतमास्वाद्याज्ञानरज्जुच्छेदने समर्थो जायते तदा स वीरभावस्य साधक इति कथ्यते। यश्च द्वैतं विहाय स्वेष्टसत्तायां स्वसत्ताविलयनद्वाराऽद्वैतानन्दरसस्य ( भक्तिरसस्य ) समास्वादकः साधको जायते स दिव्यभावसमन्वितसाधको निगद्यते। स एव पूर्णानन्दप्राप्त्यर्थमद्वैते ब्रह्मणि भक्त्यर्थं द्वैतं परिकल्प्य पुनः क्रमशोऽद्वैतज्ञानं लभते। तदा स अद्वैतभक्तिरसानन्दस्य समास्वादनं करोति। अत एव भक्तिरसदृष्ट्या तान्त्रिकसाधनायां भावत्रयस्य तत्रापि दिव्यभावस्य सर्वाधिकं महत्त्वं समनुभूयते। एवञ्च दृश्यते भक्तिरसदृष्ट्या तन्त्रदर्शनस्यापि महत्त्वपूर्णं स्थानं विद्यते।

## तन्त्रसाधनायां समाचाराः

पूर्वविवेचितभावत्रयानुरूपा तन्त्रसाधनायां वेदाचारः, वैष्णवाचारः, शैवाचारः,

---

१. बौद्धदर्शने पृष्ठे ४१६ तथा डा० विनयतोषभट्टाचार्यस्य-ऐन इन्ट्रोडक्सन टू दि बुद्धिस्ट एसाटेरिज्म, पृष्ठे ४३

२. अहं देवी न चान्योऽस्मि, ब्रह्मैवाऽहं न शोकभाक्।
सच्चिदानन्दरूपोऽहं, नित्यमुक्तस्वभाववान्॥

३. कुलार्णवतन्त्रे १।५-१०

दक्षिणाचारः, वामाचारः, सिद्धान्ताचारः, कौलाचारश्चेति सप्ताचाराणां महत्त्वपूर्णं स्थानं स्वीकृतं तन्त्राचार्यैः। तत्राऽऽद्याश्चत्वार आचाराः पशुभावसाधकानां कृते तदनन्तरं द्वावाचारौ वीरभावसाधकानां कृते, अन्तिमस्तु कौलाचारो दिव्यभाव-साधकानां कृते विद्यते। तन्त्रसाधनायां प्रोक्तसप्तविद्याचारेषु कौलाचारः सर्वश्रेष्ठः स्वीकृतः साम्प्रदायिकैस्तन्त्रज्ञैः। यतो हि तस्य साधकः कर्दमे चन्दने वा, श्मशाने मन्दिरे वा, सुवर्णे तृणे वा, भेदबुद्धिं न करोति[1]। समं सर्वत्र व्यवहरति। तत्र सप्तविधाचारेषु वेदाचारे तु वेदविहितसाधनस्यैव प्राधान्यम्, वैष्णवाचारे सात्त्विकभोजन-व्रतोपवास-भजनासक्ति-ब्रह्मचर्यादीनां विधानम्, शैवाचारे यमन् नियम धारणा-ध्यान-समाधिविहितायाः शिवशक्त्योरुपासना विहिता, दक्षिणाचारे प्रोक्ताचारत्रयं सम्पादयन् रात्रौ भङ्गसेवनं कृत्वा मन्त्रजापस्य विधानम्, वामाचारे स्वात्मानं वामारूपेण (शक्तिरूपेण) परिकल्प्योपासना क्रियते, सिद्धान्ताचारे मनः शुद्धिद्वारा सर्वत्र परमशिवस्य प्रत्यक्षानुभूतिः क्रियते, कौलाचारे साधकः सर्वाण नियमानतिक्रम्याद्वयमूलकसाधनायां संलग्नो भवति। तन्त्रशास्त्रे कुलशब्देय कुण्डलिनीशक्तिरकुलशब्देन परमशिवोऽवबुद्ध्यते। तयोस्तादात्म्यमेव कौलाचारस्न परमं लक्ष्यं वर्तते। अर्थात् योगाभ्यासद्वारा कुण्डलिनीशक्तिं प्रबोध्य सहस्रारचक्रस्थिते, सदाशिवेन सह संयोगसम्पादकः साधक एव कुलीनः कथ्यते[2]। घेरण्डसंहितानुसारे-नित्यगोमांसभक्षकः, अमरवारुणीसमास्वादक एव कुलीनो निगद्यते[3]। अर्थात् खेचरीमुद्रया कपालकुहरे (सहस्रारचक्रे) जिह्वापरावर्त्तनमेव गोमांसभक्षणमित्युच्यते जिह्वास्पर्शेन कपालकुहरात् द्रवितो रस एवामरवारुणीति (मद्यम्) कथ्यते[4]। तयोः समास्वादक एव महान् कुलीन इति कथ्यते। कुण्डलिनीं प्रति कृताचार एव

---

१. कर्मदे चन्दनेऽभिन्नं मित्रे शत्रौ तथा प्रिये।
श्मशाने भवने देवि तथैव काञ्चने तृणे॥
न भेदो यस्य लेशोऽपि सः कौलः परिकीर्तितः॥ भावचूडामणितन्त्रे

२. कुलं शक्तिरिति प्रोक्तमकुलं शिव उच्यते।
कुलेऽकुलस्य सम्बन्धः कौलमित्यभिधीयते॥ स्वच्छन्दतन्त्रे, सौमारेय भाष्करे पृष्ठे ५३।

३. गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्।
कुलीनं तमहं मन्ये चेतरे कुलघातकाः॥ घेरण्डसंहितायाम्

४. योगदर्शने पृष्ठे १४० डा० सम्पूर्णानन्दन—१९६२

कौलाचारः, यो मद्य-मांस-मत्स्य-मुद्रा-मैथुनाख्यपञ्चमकारैरनुष्ठीयते[1]। इयं च पञ्चमकारसाधना ऽत्यन्तगूढा रहस्यपूर्णा च विद्यते।

तान्त्रिकसाधनायां प्राधान्येन दक्षिणाचारवामाचारावेव प्रचलितौ स्तः। तत्र दक्षिणाचारे रुद्राक्षमालाधारणस्य, ऊर्णासने समुपविश्यत्रिकालजपनस्य स्वपत्नीसंभोगस्य च विधानम्, किन्तु वामाचारे मद्यमांसादिसेवनस्य, कपालपात्रधारणस्य, परवनिताभिः सह मैथुनस्य विधानं वर्तते। मार्गेऽस्मिन् पञ्चमकारविधानद्वारा भैरवीचक्राणां साधना क्रियते। तत्र साधकः सहस्राधिकाभिः (नारीभिः) सार्धं मद्यादिसेवनद्वारा स्वमनोरथं पूरयति। 'प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजातयः' इतिसिद्धान्तानुसारेण भैरवीचक्रसाधनायां जातिभेदो न भवति। भैरवीचक्रस्य राजचक्रदेवचक्र-वीरचक्रञ्चेतिभेदत्रयं भवति। तत्र राजचक्रे यामिनी-योगिनी-रजकी-श्वपचीकैवर्त्तकीप्रभृतिपञ्चनार्यः पञ्चशक्तिरूपेण गृहीताः। देवचक्रे राजवेश्या-नागरी-गुप्तवेश्या-देववेश्या-ब्राह्मवेश्याप्रभृतयः पञ्चनार्यः पञ्चशक्तिरूपेण स्वीकृताः। एवञ्च भैरवीचक्रेषु विभिन्नवर्गीयसुन्दर्यः पञ्चशक्तिरूपेण परिकल्प्य तासां सेवनस्य विधानं कृत्वा रहस्यमयतान्त्रिकमाधुर्यस्यावतारणा कृता तान्त्रिकैः। तेन च भक्तिरसपरिज्ञाने सभास्वादने च साहाय्यं प्राप्यते। तन्त्राचारस्येयं भक्तिरससाधनाऽत्यन्तगोपनीया, रहस्यपूर्णा, दुर्बोध्या च वर्तते।

**मण्डलचक्रम्**

मण्डलचक्रविधानं तान्त्रिकसाधनाया गुह्यानुष्ठानस्य मुख्याङ्गं वर्तते, यतो हि गुरुस्तद्द्वारा एव साधकं मार्गेऽस्मिन् दीक्षयति। तन्त्रदर्शनानुसारेण सहस्राधिका परस्त्रियः शक्तेर्व्यक्तरूपा भवन्ति। शक्तितत्त्वमिदं तान्त्रिकसाधनाया मुख्यतत्त्वं विद्यते। तस्य प्रतीकं त्रिकोणमस्ति। मन्त्रेषु त्रिकोणमेव मूलतत्त्वं ज्ञायते। तदेव 'भगः' इति कथ्यते। भगरूपसिंहासने समानसीनः साधको भगवान् निगद्यते। गुरुद्वारा सहस्राधिकानां नारीणां शिष्यकरणानन्तरमेव शिष्यस्तस्यामभिषेकक्रियां सम्पाद्य मण्डलचक्रे प्रविशति। एवञ्च बौद्धतन्त्रेष्वपि तथागतस्य तस्य शक्तेश्च युगनद्धमण्डलं सर्वोत्तमतया स्वीकृतम्। प्रोक्तशक्तितत्त्वमेव भक्तिरसधाराया उद्गमभूमिर्वर्तते। वैष्णवैः शैवैर्बौद्धसाधकैरपि सोत्साहेन स्वस्वसाधनामार्गेषु यन्त्राचारः स्वीकृतः, तैश्च तन्त्रदर्शनस्य मूलतत्त्वं शक्तिवादं स्वीकृत्य स्वस्वसाम्प्रदायिकसिद्धान्तानुसारेण भक्तिरसस्वरूपस्य साधनायाश्च विधानं कृतम्। एवञ्च दृश्यते यद् विभिन्नदर्शनेष्वपि नामान्तरेण, भक्तिरससाधना स्वीकृता दार्शनिकैः।

---

१. मांसं हि पृथ्वीं बलमाहुराद्याः मद्यं च तेजश्च रसं वदन्ति।
मीनं मनो वारि तथैव मुद्रां प्राणानिलं पञ्चममवरं च॥ कौलविलासे

## बीजाक्षरम्

प्रायः सर्वासु साधनापद्धतिषु मन्त्राणां प्रत्याक्षरं घनीभूतकारणस्य प्रवृत्तिर्विद्यते। मन्त्रो यस्मिन्नक्षरे घनीभूतः क्रियते तदेव बीजाक्षरमिति कथ्यते। बीजाक्षरेषु विभिन्ना अधिष्ठातारो देवाः परिकल्प्यन्ते। मीमांसकशब्दसिद्धान्तानुसारेण यथा शाश्वतशब्दोऽक्षरेषु वर्णमालासु वा वर्तते, तथैव तान्त्रिकसिद्धान्तानुसारेणाऽऽदिशक्तिः स्त्रीरूपेण व्यक्ता भवति। साधको यदा शक्तिरूपायाः स्त्रियः सेवनं करोति, तदा सः स्वात्मानं प्रकृतजनापेक्षया परमशिवरूपेण मन्यते। यतो हि शक्त्या सह केवल परमशिव एव संभोगलीलां कर्त्तुं शक्नोति नान्यः। एवं च तन्त्रोक्तबीजाक्षारविज्ञानेनापि भक्तिरससाधना परिज्ञायते। इत्थं च समास्वाद्यते भक्तिरसः तान्त्रिकसाधनायामपि।

•

# इसलामदर्शने भक्तिरसस्वरूपम्

श्रुत्यनुसारं[1] यथा वेदा भगवन्निःश्वासभूता एव तथैव इसलामधर्मे 'कुरान' परमात्मनः साक्षादुक्तिरेवेति स्वीक्रियते इसलामधर्मानुयायिभिः। तत्र कुरानग्रन्थे भक्तिभावनायाः प्राचुर्यं वर्तते। यथा 'यत्करोषि यदश्नासि' इत्यादिभिः श्रीमद्भगवद्गीतायां भगवते सर्वकर्मसमर्पणरूपा भक्तिर्वर्णिता तथैव तत्र कुरानेऽपि प्रतिपादितं यद् 'इन्नसलातिनुसकी व मोहियायि, मुमाति, लिल्लाहि, रब्बिल् आलमीन्[2]' अस्यायमर्थो यत् लसति–नाम नमाज, नमस पूजा। नुसकी–त्यागः। व—च। मुहियी–जीवनम्। मुमाति–मरणम्। लिल्लाहि–भगवदर्थम्। रब्बिल्–पालकः स्वामी। आल्मीन्–जगताम्। अर्थात् मम नमस्कारः, त्यागः, जीवनं, मरणं अर्थात् सर्वमपि भगवदर्थमेव विद्यते। अपि च सर्वकार्यारम्भे सर्वप्रथमं 'विस्मिलाह' इति भगवन्नामस्मरणरूपा भक्तिरेव क्रियते। विस्मिल्लाहशब्दार्थस्तु "अल्लाह–परमात्मा, इस्म–नाम, बइस्म–नाम्ना नामग्रहणम्। अर्थात् भगवन्नाम्ना, भगवदाज्ञया भगवदर्थम्, भगवत्प्रीत्यर्थं वा किमपि कार्यं क्रियते। विस्मिल्लाह इत्यस्य तात्पर्यमिदमेव यत् यत्किमपि कार्यं भोजनक्रीडायुद्धादिकं क्रियते तत्सर्वमपि भगवत्स्मरणपूर्वकमेव भगवदाज्ञानुसारेणैव भगवत्प्रीत्यर्थमेव करणीयम्, न तु स्वस्वार्थप्रेरणया। एवमे-

---

१. यस्य निःश्वसितं वेदाः —विशेषज्ञानार्थं द्रष्टव्यः
श्रीहरिहरानन्दकरपात्रलिखितः —वेदस्वरूपविमर्शः

२. कुराने 'अल्अनाम्' धेये षष्ठाध्याये १६३ नम मिदम्।

वैदिकसनातनधर्मेऽपि भगवन्नामस्मरणपूर्वकम्, भगवदर्पणबुद्ध्या एव किमपि कार्यं कर्तव्यम्। एवञ्च परिज्ञायते सनातनधर्मसदृशमेव इसलामधर्मेऽपि भक्तेः प्राधान्यं वर्तते।

इसलामदर्शने किं रूपा भक्तिः तस्याश्च को व्यवहारपक्षश्चेत्यैतिहासिकोदाहरणेन स्पष्टीक्रियते। एकदा कावपि पण्डितमानिनौ विद्वांसौ इसलामधर्मज्ञायाः साधिकायाः 'रव्बिआ' इति नामधेयायाः समीपं तस्याः परीक्षार्थं गतौ। भगवद्भक्तिविचारप्रसङ्गे तयोरेकं साधिका पप्रच्छ-'ज्ञातुमिच्छामि किमर्थं भजसि भगवन्तं प्रेम्णा' इति, सोऽवदत् 'स्वर्गप्राप्त्यर्थमेव भजनीयो भगवान्' इति तच्छ्रुत्वा रव्बिआ प्राह-'किं भगवद्भजनमपि लौकिकपण्यव्यवहार इवास्ति, यदधिकधनप्राप्त्यर्थमेव क्रियते। यदि भगवद्भजनमपि तादृशमेव, तर्हि तत्र किं वैशिष्ट्यं भगवद्भक्तानां कृते, तादृशी भगवद्भक्तिर्नोचिता, तत्र तु तेषां तादृशी भावना न भवतीति। तदनन्तरमपरो विद्वान् उवाच 'यदहं भगवन्तं न भजे तदा घोरतिघोरं नरकं गमिष्यामीति। तच्छ्रुत्वा रव्बिआ प्रोवाच नेयं भगवद्भक्तिरपितु केवलं भीतिरेव, भीतिश्च भक्तिर्नैव भवितुं शक्नोति। धिक् तादृशीं भक्तिं, या स्वार्थाय भवति। पश्चादुभाभ्यां का नाम भक्तिरिति पृष्टा सती सा विनीतगम्भीरवाण्या प्रत्युवाच-निष्कामभावनया भगवन्तं प्रत्यनन्यासक्तिरेव भक्तिरिति। भगवान् भक्तं स्वर्गस्य सुखसमुद्रे प्रज्ज्वलिताग्नौ, नरके ताग्नौ वा प्रेषयेत्, तथापि तत्र भक्तमनसि न कोऽपि हर्षविषादो भवति। अर्थात् 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ' इति गीतावचनस्य प्राधान्यं भवेदित्येव रव्बिआसाधिकायास्तात्पर्यं ज्ञायते। तन्मते सैषा निष्कामकर्मयोगरूपा भक्तिः प्रीतिश्च। कस्मादपि कारणात् भक्तेर्विनाशो न भवेत्। तादृशी भक्तिः स्वयमेव भक्तमनसि प्रादुर्भवति।

पूर्वोक्तरव्बिआसाधिकया स्वीकृता भक्तिः फलाशारहिता, केवलं श्रद्धया कृता सात्त्विकी भगवद्भजनरूपाभक्तिं भारतीयभक्तिशास्त्रेषु बहुलतया प्रतिपादिता। तत्र भारतीयभक्तिशास्त्रानुसारेण रव्बिआसाधिकासदृशा एव भक्ता भगवद्भक्तिं विहाय मुक्तिमपि न कामयन्ते। तेषां मते 'अनिमित्ता भगवति भक्तिर्गरीयसी', 'मोक्षाद् भक्तिर्गरीयसी मता' इत्यादि पुराणानुसारेण सर्वत्र भगवति निष्कामभक्तेरेव प्राधान्यं भवति। रव्बिआसाधिकायां तादृशी निष्काम भक्तिरेव प्राप्यते। इत्थं च परिज्ञायते इसलामधर्मेऽपि भागवतोक्ताया भगवतो निष्कामसेवारूपभक्तेरेव प्राधान्यम्। तत्रापि भगवत्सेवारूपानन्यासक्तिरेव भक्तिरिति।

## सूफिसाधकानां प्रेमरूपोपासना-अद्वैतवादः

सूफिसाधकसरमदमतानुसारेण यावत् सांसारिकवासना साधकानां चित्ते संभवेत्

तावत् परमपितृपरमेश्वरः परमप्रेमास्पदब्रह्म च कदापि न प्राप्येत्[1]। तन्मते साधकानां चित्ते प्रेमास्पदं विहाय सर्वभावस्य राहित्यम्, तं विना सर्वस्य चिन्तनराहित्यमेवोपासनेति ( भक्तिः[2] ) निगद्यते। सूफिसाधकानां मते लोके प्रेमास्पदस्य परमात्मन एव लीला सर्वत्र तत्तद्रूपेण दृश्यते तस्य प्राप्तिसाधनं तु तस्य प्रेमरूपोपासनैव विद्यते।

सूफिसाधना-शरीअत-तरीकत-मारिफत-हकीकतरूपचतुर्भागेषु विभक्ता वर्तते। तत्र शरीअत-सूफिसम्प्रदाये यद्यपि हृदयस्य शुचितायाः परिचायकोऽयं वर्तते, तथापि तत्र सलात् ( प्रार्थना-नमाज )-जकात ( दान )-सौम ( उपवास-रोजा )-हजा ( तीर्थयात्रा ) रूपाश्चत्वार आचारा नोपेक्ष्यन्ते। शरीअतरूपोपासनापद्धत्यां प्रोक्ताः चत्वार आचाराः सेव्यन्ते। तत्र च साधकैः कुरानशरीफस्य परायणं ( तिलवतः ) क्रियते, प्रतिदिनं पञ्चवारं प्रार्थना ( रोजा ) विधातव्या, तत्सर्वं 'अवरादः' इति कथ्यते। सूफिमते परमात्मा ( अल्लाहः ) विविधरूपेण स्मर्यते। तद्यथा-जिक्रेजलीमते परमात्मवाचक 'अल्लाह' शब्दस्य उच्चैः स्वरेण समुच्चारणम्, जिक्रेखफिमते मुखं विधाय मन्दस्वरेण नामोच्चारणम्, मुराकवामते 'अल्लाहो हाजिरी-अल्लाहो नाजिरी-अल्लाहो सहीदी-अल्लाहो माई' इत्याद्युच्चारणपूर्वकं परमात्मनः ( अल्लाहस्य ) ध्यानम्, मुजाहिदामते साधकैः स्वचित्तवृत्तिर्लौकिकपदार्थेभ्यो निरुद्ध्यते। तत्र नेत्रयोः सतोरपि पदार्थानामदर्शनस्य, कर्णयोः सतोरपि शब्दानामश्रवणस्य, रसनायां सत्यामपि अनास्वादनस्य तथा तूष्णीभावस्याभ्यासः कर्तव्यः। एवञ्च तत्र परमप्रेमास्पदस्य ब्रह्मणो ज्ञानं कर्त्तव्यम्। 'हू अल्ला हू' इति सूफिसाधकानां परमप्रियमन्त्रो विद्यते, यस्य चिन्तनं सततं कुर्वन्ति सूफिसाधकाः।

तरीकतः—तरीकतरूपसूफिसाधनायां प्रोक्तशरीअतस्य नियमानां परिपालने सति साधकः तरीकतरूपोपासनाया अधिकारी जायते। तत्र गुरुद्वारा ( मुर्शिदद्वारा )

---

१. मुमकिन न बुबद कि यार आयद बकिनार।
खुदरा अज खयाले खामो अन्देसा बरार॥
हर चीज कि गैर अस्त दर सीनए तुस्त।
बिसयार हिजावेस्त मियाने तो व यार॥

२. जिसे इश्क का तीर कारी लगे, उसे जिन्दगी जग में भारी लगे।
न छोड़े मुहब्बत दमे मर्ग तक, जिसे यार जानी सूं यारी लगे॥
न होवे उसे जग मे हर्गिज करार, जिसे इश्ककी बेकरारी लगे।
हर इक वक्त मुझ आशिके जार कूं, पियारे तेरी बात प्यारी लगे॥
'वली' कूं कहे तू अगर एक वचन, रकीबों के दिल में कटारी लगे॥
उपासना अङ्क कल्याण पृष्ठे ५८३ वर्षे ४२, संख्या १।

प्रदिष्टसाधनया साधकस्य (मुरीदस्य) चित्ते परमात्मानं (अल्लाहं)प्रति प्रेम समुद्भवति। तरीकतसाधनायां बाह्यक्रियाभ्यः पराङ्मुखो भूत्वा हृदयशुद्धिद्वारा अल्लाहः (परमात्मा) ध्यातव्यः। तत्साधनायां सर्वाहंभावपरित्यागस्य सर्वेन्द्रियाणां च वशीकरणस्याभ्यासः करणीयः। अत एव तत्र क्षुधा तृष्णा च जेतव्या, तूष्णीभूय च विजने परमामन उपासना विधातव्या।

मारिफतः—मारिफतो नाम परं ज्ञानमिति। तज्ज्ञानं न केवलं शुष्कज्ञानमात्रमेव, अपितु अनुभूतिपूर्णम्, प्रेमरसायनस्निग्धं च भवति, यत्र निमग्नो भूत्वा साधका न केवलं लौकिकान् पदार्थान्नेव विस्मरन्ति, अपितु स्वात्मानमपि विस्मरन्ति। तदेवानुरागपूर्णविस्मरणमेव इश्कः, मुहब्बतः, वस्लः प्रेमेति वा निगद्यते।

किन्तु क्षुरस्य धारा निशिता दुरत्यया' इत्युपनिषद्वचनानुसारं ज्ञानस्य ( मारिफतस्य ) मार्गः कण्ठकाकीर्णो वर्तते। मारिफतसूफिसाधनायां निम्नलिखितससोपानान्यतिक्रम्यैव तज्ज्ञानं ( मारिफतः ) प्राप्यते। तच्चसप्तसोपानानि यथा—

( १ ) तौवा ( प्रायश्चितोऽनुतापो वा )।
( २ ) जहद ( स्वेच्छया दारिद्रयस्वीकरणम् ),
( ३ ) सब्रः ( सन्तोषः ),
( ४ ) शुक्रः ( अल्लाहं प्रति कृतज्ञताज्ञापनम् ),
( ५ ) रिजाअ ( इन्द्रियदमनम् ),
( ६ ) तवक्कुलः ( पमात्मनि पूर्णविश्वासः )
( ७ ) रजा ( परमात्नो वाञ्छैव स्ववाञ्छास्वीकरणम् ) अर्थात् यथाप्राप्तसुखदुःखे लाभालाभे च समानभावः 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ' इति गीतोक्तरीत्या।

हकीकतः—हकीकतः साधनायाश्चरमानुभूतिर्वर्तते। तत्र साधकः सांसारिकसुखदुःखेभ्यो मुक्तो भूत्वा सर्वत्र सततं परमात्मानमेव पश्यति। सर्वत्र परमात्मैव दृष्टिगोचरो भवति। तं विहाय साधको न किमपि पश्यान्ति लोके[1]।

सूफिसाधनायां प्रेम्ण एव प्राधान्यं वर्तते। तत्र साधकोऽहर्निशं प्रेमास्पदं ध्यायति, प्रेमरसे विनिमग्नः साधको लौकिकसकलभेदं विस्मरति। तदानीं स न किमपि चिन्तयति, न किमपि स्मरति न च केभ्योऽपि विभ्यति, यतो हि स तु विश्वस्य प्रतिवस्तु

---

१. किसकी शादी किसका गम।
हू अल्लाहू दम पर दम॥
२. आशिकों को इम्तियाजे दौरो कावा कुछ नहीं।
उसका नक्शे पा जहां देखा वहीं सर रख दिया॥

प्रेमास्पदस्य प्रियतमस्यैव लीलाविलासं पश्यति। एवञ्च सूफिसाधनायां प्रेमैव मूलं तत्त्वम्। प्रेम्णा शुद्धहृदय एव परमात्मा विलोक्यते[१]। इत्थं च ज्ञायते यथा भारतीयोपासनायां प्रेम्णः प्राधान्यमस्ति तथैव सूफिसाधनायामपि प्रेम्णः प्राधान्यमस्ति। तत्प्राप्तये सर्वस्वत्यागः क्रियते साधकैः[२]।

## इसलामधर्मे उपासनायाः स्वरूपम्

इसलामधर्मे नमाजरूपोपासनायाः प्राधान्यं वर्तते। त्रिकालसन्ध्योपासना इव नमाजरूपोपासना प्रतिदिनं सामान्यतया वारत्रयं क्रियते किन्तु शुक्रवासरे मध्याह्नानन्तरं सामूहिकनमाजरूपोपासना क्रियते। इसलामधर्मे नमाजोऽष्टप्रकारेण क्रियते। नमाजः स्त्रीभिः न श्रोतव्यः। नमाजस्य निम्नलिखिताः सप्तमन्त्राः सन्ति, ये नमाजकाले उच्चास्वरेणोच्चार्यन्ते। ते च मन्त्रा यथा—

१. अल्लाहु अकूबर, अल्लाहु अक्बर=अर्थात् अल्लाहः ( परमात्मा ) महतो महीयान् वर्तते।
२. अशदु अल्ल्ला इलाह इल्लाल्लाह=अर्थात् परमात्मानं विहाय न कोऽपि उपासनीयो विद्यते।
३. अशहदु अन्न मुहम्मदुर रसूलुल्लाह=अर्थात् मुहमदः परमात्मनः प्रतिनिधिरस्ति।
४. हयूय अलरसोलात्=अर्थात् भगवद्भक्त्यर्थं ( नमाजाय ) मत्र आगच्छ।
५. हयूय अलल् फलाह=अर्थात् सत्कार्यं कर्तुमागच्छ।
६. अल्लाहु अक्बर, अल्लाहु अक्बर=अर्थात् अलाहो महान् वर्तते।
७. ला इलाहा इल्लल्लाह=परमात्मानं विहाय न कोऽपि भजनीयोऽस्ति।

सर्वे मन्त्रा नमाजकाले वारद्वय समुद्घुष्यन्ते। प्रातः कालिके नमाजे पञ्चवारम्, मध्याह्नकालिके नमाजे षड्वारमुक्ता मन्त्राः समुद्घुष्यन्ते। निद्रापेक्षया नमाजो वरमित्युक्तम् 'अस्सोलातु रवैरुम् भिनन्नोम।

---

१. दिल के आइने में है तस्वीरे यार।
जब जरा गर्दन झुकायी देख ली॥

२. प्रेम न बाड़ी उपजै प्रेम न हाट विकाय।
राजा परजा जेहि रुचै सीस देय लै जाय॥ श्रीकबीरस्य
तथा—तरीके फना में कदम रखके पूछो।
मुहब्बत की रस्में मुहब्बत की राहें॥

## सूफिदार्शनिकानामद्वैतवादः

सूफिदार्शनिकानां मते तुषारजलयोरिव जीवपरमात्मनोरभेद एवास्ति। तेषां मते जीवात्मपरमात्मनोः (अल्लाह-इन्सानयोः) तत्त्वतो नास्ति भेदः। भारतीयाद्वैतमिव सूफिदार्शनिकानामद्वैतमपि शतधा विभक्तम्। तत्र हल्लाजमतानुसारेण जीवः कथमपि पूर्णतो ब्रह्मरूपात्मको न जायते। किन्तु तयोस्तादात्म्यं तु जलमद्ययोरिवास्ति। अत एव तत्र देवत्व (लाहूत) मनुष्यत्वयोः (नासूत) सम्पृक्तभावः समुद्भाव्यते। तन्मते वस्तुत एकस्मिन्नेव शरीरे आत्मद्वयं परस्परं प्रणयाबद्धं निवसति। भेदस्तु प्रेमास्पद्स्वरूपबोधानन्तरं प्रियतमस्य साक्षात्कारो जायते, पश्चात् तयोः स्वरूपं सम्यक्तया बाह्यरूपेण ज्ञायते। रुमीमते पृथक्तया प्रतीमानोऽपि प्रेमि-प्रियतमयोः युगलशरीरे मिथुनाकारात्मक एकैवाऽऽत्मा निवसति[1]। जीलीमतानुसारेण प्रेमि-प्रियतमयोरेकैवाऽऽत्मा क्रमश उभयोः शरीरे तिष्ठति। फारिजमतानुसारेण मूलसत्तैव मूलसत्तया सह परस्परं प्रणयव्यापारबद्धा वर्तते। अर्थात् एकैव सत्ता उपाधिभेदेन प्रेमिरूपेण प्रियतमारूपेण च परिज्ञायते।

सूफिदार्शनिकानां मते प्रियतमारूपजीवात्मनः प्रियतमरूपपरमात्मनश्च महामिलनं सरित्सागरयोरिव स्वीक्रियते। सूफिसाधकरूपजीवात्मा प्रियतमरूपपरमात्मना सह तादात्म्यं प्राप्तुं प्रेमविरहाग्नौ सदैव तपति। स सदैव प्रियतमस्य परमप्रेमास्पदस्य ब्रह्मणः प्रेम्णि विलीनत्वमेव वाञ्छति। इत्थं च ज्ञायते सूफितत्त्वचिन्तकाः सर्वत्रैव येन केनापि प्रकारेण जीवात्म-परमात्मनोरद्वैतत्त्वमेव प्रतिपादयन्ति।

## सूफिदर्शनेऽल्लाहस्वरूपम्

कुरानशरीफेऽल्लाहस्य साकारस्वरूपं प्रतिपादितम्। कुरानमतानुसारेण अल्लाह एव सम्पूर्णविश्वस्य कर्त्ता, भर्त्ता, हर्त्ता च वर्तते। तस्येच्छामात्रेण सृष्टेरुद्भवो विकासो विनाशश्च जायते। स एव सर्वेषामाद्यन्तं मध्यं चास्ति। स एव कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थश्च वर्तते। एवञ्च स एव सर्वेषां विरुद्धाविरुद्धभावानामाश्रयो विद्यते। स च भक्तेषु महतीं कृपामभक्तेष्वतिक्रोधं च करोति। भक्तेभ्यः समस्तवैभवविलासं सुखसम्भारं च प्रयच्छति[2]। इसलाममतानुयायिभिर्यद्यपि प्राचीनमतानुसारेण

---

१. स्टडीज इन इसलामिक मिस्टीजिज्म—पृष्ठे ८०।

२. द्रष्टव्यः—अल्लविषयकः 'इनसाइक्लोपीडिया आफ इसलाम' निबन्धः

विभिन्ना देवाः कथञ्चित् स्वीक्रियन्ते किन्तु तेषां मते वस्तुत अल्लाह एव परमदेवो महादेवो वा विद्यते[1]।

सूफिसाधकैः कुरानसम्मतं परमात्मस्वरूपं स्वीक्रियत एव; किन्तु तेषां मतेऽल्लाहो न केवलं सर्वशक्तिमान् परमेश्वर एव, अपितु स परमप्रेमास्पदं निखिलसौन्दर्य-निधिश्चापि वर्तते। सूफिसाधकैरल्लाहस्योपासना स्वर्गप्राप्त्यर्थं न क्रियते, अपि तु तस्य संयोगाय तादात्म्याय वा क्रियते। ते च साधकास्तत्प्राप्त्यर्थं स्वर्गं विहाय नरकगमन-मपि वाञ्छन्त्येव। अल्लाहोऽपि भक्तेभ्य आनन्दप्रदानाय रसूलादिरूपेण महीतले रामकृष्णादिवदवतरति[2]।

## सूफिदर्शने जगत्स्वरूपम्

सूफिदार्शनिकानां मते परमात्मा अनन्तसौन्दर्यनिधिरनन्तविभूतिसम्पन्नश्च वर्तते। स एव निखिलरसानन्द-सौन्दर्यनिधिस्वरूपः परमात्मा सृष्टिरूपेण स्वात्मानम-भिव्यनक्ति। अत एव जगदिदमनन्तसौन्दर्यनिधेः परमात्मनोऽभिव्यक्तस्वरूपमेव विद्यते।

भारतीयदार्शनिकमतानुसारेण यथा रमणवाञ्छायुक्तेन परमात्मना स्वात्मैव द्विधाऽकारि तथैव हदीसमतानुसारेणाऽऽत्मज्ञापनकामनयैवाल्लाहेनापि समुत्पादिता सृष्टिरियमिति। कुरानानुसारेण कुनस्य आधारेण सृष्टिः प्रादुर्भूता। अरबीमतानुसारेण संसारोऽयं शाश्वतप्रपञ्चो विद्यते। स च यद्यपि स्वतन्त्रो नास्ति, किन्तु नित्योऽस्ति। जागीमतानुसारेण अल्लाहः परमसौन्दर्यनिधिरस्ति, सः सततं प्रेमैव वाञ्छति। तन्मते सृष्टिरियं सत्यस्य प्रत्यक्षस्वरूपमस्ति, सत्यं च सृष्टेः परोक्षमूलतत्त्वं वर्तते। एवञ्च स्वविकासात् पूर्वं जगदिदं सत्यादभिन्नमासीत्, सत्यं च स्वविकासानन्तरं जगतो-ऽभिन्नमस्ति[3]।

सूफिदार्शनिकमतानुसारेण दृश्यमानं जगदिदं परमात्मनः प्रतिबिम्बो वर्तते। यथा जले पतितस्य सूर्यप्रतिबिम्बस्य पौनः पुन्येन विनाशेऽपि सूर्यस्य कापि हानिर्नास्ति तथैव परमात्मनः प्रतिबिम्बभूतस्य दृश्यमानविश्वस्य विनाशेऽपि परमात्मनः कापि क्षतिर्न भवति। तात्पर्यमिदं ब्रह्म (अल्लाह) सर्वथा सत्यमस्ति, किन्तु जगदिदं विनाशशीलमस्ति।

---

१. तर्जमानुल कुरआन, तफसीर सूरत फातहा, जिल्द अव्वल, पृष्ठे ८, १९३१, मौलाना अबुलकलाम आजाद।

२. तसव्वुफ अथवा सूफीमत—पृष्ठे ६६ श्रीचन्द्रबली पांडेय

३. तसव्वुफ अथवा सूफीमत—पृष्ठे १४२ चन्द्रबली पाण्डेय

प्रोक्तविवेचनस्य तात्पर्यमिदं सूफिदर्शनं भावप्रधानमद्वैतमेव प्रतिपादयति । यद्यपि इसलामस्यासहिष्णुत्वात् भारतीयाद्वैतसदृशं सूफिभावप्रधानमद्वैत प्रौढत्वं न प्राप्तं तथापि तेन सूफिभावप्रधानाद्वैतेन जीवात्मपरमात्मनोर्मधुरमहामिलनस्य रतिद्वारमवश्यमेव समुद्घाटितम् । पश्चात् तत एव भक्तिरसस्य स्रोतस्विनी कलकलनिनादेन प्रवाहिता इसलाम दर्शने । ईश्वराराधनरूपसंजीवनरसधारया जनमनांसि परिसिञ्चयन्ती जीवात्मरूपप्रियतमायाः परमात्मरूपप्रियतमस्य च महामिलनरूपाऽऽनन्दाम्बुधौ निमज्जयति ।

इत्थञ्च भक्तिरसस्थापने भारतीयदर्शनानां महत्त्वपूर्णं स्थानं वर्तते । तत्रापि वैष्णवदर्शनानां दार्शनिकानां च जीवनस्य चरमं लक्ष्यं तु भगवद्भक्तिर्भक्तिरस श्चैव दृश्यते । अत एव प्रकरणेऽस्मिन् विभिन्नदार्शनिकदृष्ट्या भक्तेर्भक्तिरसस्य च समासेन विवेचनं कृतम् ।

न केवलं भारतीयदर्शन एव भक्तेर्भक्तिरसस्य वा महत्त्वं दृष्टिगोचरीभूयते, अपि तु इसलामदर्शनेऽपि, तत्रापि सूफिसम्प्रदाये भक्तिरसस्य चात्यधिकं महत्त्वं स्वीक्रियते । अत एव प्रसंगतः तद्दर्शनानुसारेणापि भक्तेर्भक्तिरसस्य च विवेचनं कृतम् ।

●

# भक्तिरस-विमर्श

## साहित्यशास्त्रदृष्ट्या भक्तिरसविवेचनात्मकः

## चतुर्थोऽध्यायः

संसाररोगसंतप्तैः सर्वोपायनिराश्रितैः ।
भक्तिशास्त्रसुनिर्यासः पेयो भक्तिरसो बुधैः ।।
ब्रह्मानन्दो भवेदेष चेत्परार्धगुणीकृतः ।
नैति भक्तिरसाम्भोधेः परमाणुकलामपि ।।

# भक्तिरसस्य वैदिकत्वम्

वेद एव सर्वेषां भारतीयज्ञानानां धर्माणां च मूलं विद्यते। जगति नास्ति यज्ज्ञानं यस्य वेदेषु बीजत्वेन सत्ता नास्ति। यद्यपि केचन वेदे भक्त्यभावं पश्यन्त आधुनिकास्तत्र भक्तिरसपरिपाकं वदत उपहसन्ति, तथापि नायं वाद आदरणीयः यतो हि—चतुःसंहितामात्रं वेदानां परिमितिर्नास्ति, अपितु अनन्ता वेदास्तथापि एकत्रिंशदधिकैकादशशतशाखासु मन्त्रभागस्य स्थितिः, एतावत्संख्यकानि ब्राह्मणानि, आरण्यकानि, उपनिषदश्चेति मूलवैदिकवाङ्मये चतुर्विंशत्यधिकपञ्चचत्वारिंशच्छतग्रन्थाः परिगण्यन्ते। तत्राधुना कालक्रमेणांशमात्रमेवावशिष्टं दृश्यते, भूयान् भागस्तु विलुप्त एव। तस्माद् वेदस्यांशमात्रावलोकनेनेदं वैदिकवाङ्मये नास्तीति कथनं न शोभते। इदानीमुपलब्धवेदांशमात्रमनुसृत्य भक्तिरसविषयो विविच्यते।

वाङ्मयज्ञानस्य प्रधानं साधनं शब्दकोशो भवति। तत्र वेदस्य शब्दकोशो निघण्टुरिति प्रसिद्धः। तत्र निघण्टौ जलार्थे[1], ऽन्नार्थे[2], ऽचार्थे[3] च रसशब्दः प्रयुक्तः। तस्य टीकायां देवराजयज्वना व्याख्यातं यत् रसतिशब्दार्थः 'पचाद्यच्[4]' रसति हि तन्मेघः पर्वतादिभ्यः पतत्, अथवा रस आस्वादने ( चु० प० प्र० ) पुंसि संज्ञायां घः ( ३।३।११८ ) रस्यत आस्वाद्यते जिह्वया लिह्यत इति रसः। यद् वा रसोऽपां गुणः, गुणगुणिनोरभेदोपचारेणाख्यायते, मत्वर्थीयस्य लुग्वा रसवान् रसः। यद् वा रसतिरर्चति कर्मा ( ३।१४ ) पचाद्यच् अर्च्यते देवतात्वात्, अर्च्यतेऽनेन देवता इति वा। "आत्वा विशन्त्विन्दवः ( ऋ० सं ८।९२।२२ ) इति निगमः'। अर्चा हि भक्तेर्मुख्याङ्गम्। नारदभक्तिसूत्रेऽपि 'पूजादिष्वनुराग इति पाराशर्यः' इति सूत्रेण पूजार्थे, अर्चार्थे वा भक्तिशब्दस्य प्रयोगो दृश्यते। अत एव वेदेषु प्रयुक्तो रसशब्दोऽर्चावाचको भक्तिवाचको वा गृह्यते। एवञ्च यदि रसशब्द एव तत्र भक्तिवाचकः समुपलभ्यते तर्हि कथं वेदेषु भक्तेरनुपलब्धिः स्यात्। यथा सर्वज्ञानानां धर्माणाञ्च बीजरूपेण वेद एव मूलं तथैव भक्तेर्भक्तिरसस्य चापि मूलं निश्चितरूपेण वेद एव विद्यते। नात्र संशयो लेशोऽपि।

'रसो वै सः' इति श्रुत्या परमात्मा रसमयो रसज्ञानां मते। भगवतो रसत्वं मन्त्रब्राह्मणात्मकवेदेषु स्पष्टरूपेण प्राप्यते। आर्तिहैतुकी, जिज्ञासामयी, कामनामयी चापि भक्तिर्भगवन्तं प्रति क्रियते किन्तु रसरूपिणी भक्तिस्तु रागमय्येव भवति। सा यदि सम्बन्धरहिता भवेत्तदा शान्तभक्तिरसः, सम्बन्धसहिता चेत्तदा सा सम्बन्धमयी भक्तिरिति

१. निघण्टौ १।१०१। २. निघण्टौ २।२८।
३. निघण्टौ ३।५४। ४. अष्टाध्याय्याम् ३।१।१३४।

कथ्यते । यद्यपि वेदेषु सहैतुकी भक्तिराधिक्येन प्राप्यते, किन्तु भक्ताचार्यैर्या भक्ती रसरूपतया प्रतिपादिता सापि वेदेषु समुपलभ्यते । तत्र लौकिकमर्यादां विहाय यत्र प्रधानतया भगवद्भजनमेव दृश्यते तत्र सा भक्तिः शान्तमयी, शान्तभक्तिरसो वा भवति ।

यथा हि–'हे स्तोतारः सखाय इन्द्रस्तोत्रादन्यस्तोत्रं मैव कुर्वन्तु । अन्यदीयस्तोत्रोच्चारणेन वृथोपक्षीणं मा भवन्तु । सोमस्य सुते कामानां वर्षितारमिन्द्रमेव पौनः पुन्येन संस्तुयत[1]' इत्यर्थके ऋ० ८।१।१ मन्त्रे दास्यादिसम्बन्धनिर्देशं विनैव इन्द्रं प्रति रागात्मिकाया वृत्तेः प्रकाशनात् शान्तभक्तिः, शान्तभक्तिरसो वा स्पष्टतया एव प्रतीयते ।

'हे वसो शतक्रतो त्वं नः पिता पितृवत्पालकः, त्वं माता मातृवद्धारकश्च भव' इत्यर्थके ऋ० ८।९८।११ मन्त्रे, 'हे मघवन् त्वत्तोऽन्यदस्माकं प्रशस्यः पिता नास्ति' इत्यर्थके ऋ० ७।३२।१९ मन्त्रे च भक्तस्य भगवति पितापुत्रसम्बन्धः स्थापितः । एवमेव 'कामानां वर्षित्रे जगतः स्वामिने वरुणाय पापरहितः सन्नहं पर्याप्तं परिचरणं करवाणि यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत्' इत्यर्थके ऋ ७।८६।७ मन्त्रे भक्तो भगवतो वरुणस्य दास्यसम्बन्धं कामयते । एव प्रकारेण भक्तभगवतोर्मध्ये सेव्यसेवकसम्बन्धो जन्यजनकसम्बन्धश्चोपलभ्येते । एवञ्च भक्तिरसशास्त्रे रूपगोस्वामिप्रभृतिभिः प्रतिपादितः प्रीतिभक्तिरसोऽपि वेदमूलको विद्यते ।

'द्वा सुपर्णा सयुजा सखाया' इति मन्त्रे जीवब्रह्मणोः सख्यसम्बन्धस्तु प्रसिद्ध एव । यद्यप्यत्र सख्यसम्बन्धः स्पष्टतया जीवब्रह्मणो न प्रतिपादितः, स्पष्टतया तु 'त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ।' ऋ० १।७५।४ इति मन्त्रे प्रतिपादितः । अत्रोपास्योपासकयोः सुस्पष्टं सख्यसम्बन्धो निर्दिष्टः । तत्र सायणभाष्ये 'हे अग्नेः त्वमुक्तप्रकारेणाचिन्त्यरूपोऽप्यनुग्रहीतृतया सर्वेषां जनानां जामिर्बन्धरसि । तथा प्रियः प्रीणयिता त्वं यजमानानां ( भक्तानां ) मित्रमसि । ईड्यः स्तुतिभिः स्तुत्यस्त्वं सखिभ्यः समानाख्येभ्य ऋत्विग्भ्यः सखा सखिवदत्यन्तंऽप्रियोऽसि' इति । एवञ्च 'स हि बन्धुरित्था' ऋ० १।१५४।५, 'भवा मित्रो न शेव्योः' ऋ० १।१५६।१, 'व्रजं च विष्णु सखिवां अपोर्णुते' ऋ० १।१५६।४ इत्यादिबहुस्थलेषु ऋग्वेदे प्रेयान् भक्तिरसः सख्यभक्तिरसो वा बहुलतया स्पष्टरूपेण प्राप्यते, नात्र सन्देहलेशोऽपि

'सोमस्य पानाय विप्रा इन्द्रं गावो वत्समिवाभिशब्दयन्ति' इत्यर्थके ऋ० ६।१२।२ मन्त्रे स्पष्टतया इन्द्रं प्रति विप्राणां वात्सल्यमयी भावना उपासना वाभिव्यक्ता, तस्माद् भक्तिरसाचार्यैरुद्भावितो वात्सल्यभक्तिरसोऽपि नवीनो नास्ति, अपि तु स बीजरूपेण वेदेऽपि समुपलभ्यत इति साधिकारं वक्तु शक्यते ।

---

१. निरुक्ते ( निघण्टौ ) प्रथमभागे पृष्ठे १२८ ।

'हे दर्शनीयशक्र ! कामयमानाः पत्न्य उशन्तं कामयमानं पतिमिव अग्निहोत्रादिभिस्त्वत्सेवाकामा धनकामा वा त्वां प्रयासेन जग्मुः, तैः प्रयुक्ताः स्तुतयस्त्वां प्राप्नुवन्ति, मन्त्रैस्त्वं नमस्करणीयोऽसि' इत्यर्थके ऋ० १।६२।११ मन्त्रे उपमारूपेण माधुर्यभक्तेर्बीजं दृश्यते, किन्तु 'यथा जायाः सर्वदोषशून्यं स्वभर्तारं रक्षणार्थं परिष्वजन्ते तथैव मम सर्वस्य लम्भयित्र्यो व्याप्ताः कामयमाना मतय इन्द्रमभिष्टुवन्ति' इत्यर्थके ऋ० १०।४३।१ मन्त्रे तु मत्युपलक्षणेन स्पष्टतया कान्ता रतिर्वर्णिता। तस्माद् भक्ताचार्यैः स्वीकृतो मधुरभक्तिरसोऽपि वेदादेव समुद्भूतः।

'को भक्तः ( यजमानः ) वाण्या शक्राय नमति, कः स्तुतिकामो वर्तते, कस्तस्य वाणीमाच्छादयति कस्तस्य साहाय्यमभिलषति, कस्तस्य सखित्वं भ्रातृत्वं वाञ्छति, कस्तस्मै तर्पणाय ( प्रीणनाय ) भवति' इत्यर्थके ऋ० ४।२५।२ मन्त्रे निष्कामभावेन भगवदनुरागस्य दुर्लभता, 'हे मघवन् ! त्वां महते शुल्काय सहस्रायायुतायापि धनाय न विक्रयणं करोमि। त्वं मम पितुरपि वसुमत्तरोऽपि, अथवा भ्रातुरपि त्वमधिकोऽसि, त्वं मे भ्रातृसदृशोऽसि' इत्यर्थकयोः ऋ० ८।१।५–६ मन्त्रयोः प्रतिपादिता च भक्तिः रूपगोस्वामिनः 'अन्याभिलाषिताशून्यम्' इति प्रतिपादितभक्तिलक्षणेन सर्वथा समन्वितैव प्रतिभाति।

वेदेषु भक्तिशब्दः साक्षादपि भगवद्भजनार्थको द्रष्टुं शक्यते-'यः पावको दिवापेक्षया रात्रौ सुदर्शनीयो भवति, अतोऽस्मै धीमहि पावकोऽयं तु सर्वप्राणिप्राणाय हर्त्तुम्, सूर्यस्तु रात्रौ स्वस्मिन्नेव प्रवेशात् प्रकृष्टायुर्भवति। अतोऽपि धीमहि। पुत्राय पित्रोर्गृहं यथा एते ऽग्नयोर्भक्तं सेवमानमभक्तमसेवमानं च ( प्राणिनोऽनुग्राह्या इति बुध्यमानः) रक्षन्ति' इत्यर्थके ऋ० १।१२७।५ मन्त्रे[1] भक्तिशब्दः स्पष्टरूपेण परकालप्रचलितः भक्तिमति जने प्रयुक्तः। तत्राभक्तशब्देन भक्तिरहितः पुरुष एव विवक्षितः।

'हे विश्ववेदसः सर्वधना देवाः ! मनुरहमन्नमिच्छन् युष्मत्सम्बन्धिनो वन्दनीयस्य शौर्यौदार्यादेर्गुणस्य भक्तये भजनाय सेवनाय वा वोऽदृष्टपूर्वां स्तुतिं करोमि' इत्यर्थके ऋ० ८ २१।११ मन्त्रे[2] देवानां गुणभजनेन सगुणभक्तिविषयत्वमपि स्पष्टरूपेण प्राप्यते। 'सूर्यो युगपदेव स्वांशून्नुद्गमयति। तथा आकाशे दृश्यमानं नक्षत्रादिकं प्रकाशयति। सौरेण तेजसा रात्रौ चन्द्रप्रभृतीनि नक्षत्राणि भासन्ते। हे उषः तव सूर्यस्य उदिते सति

---

१. तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरा दप्रायुषे दिवातरात्। आदस्यायुर्ग्रभणवद् वीलु शर्म न सूनवे। भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः। ऋ० १।१२७।५। सायणभाष्ये

२. इदा हि व उपस्तुतिमिदा वामस्य भक्तये। उप वो विश्ववेदसो नमस्युराँ असृक्ष्यन्यामिव। ऋ० ८।२७।११

भक्तेन अन्नेन सङ्गच्छेमहि' इत्यर्थके मन्त्रे[1] सायणमते भक्तिशब्दोऽन्नार्थको वर्तते किन्तु सूर्योदयात् केवलमन्नप्राप्तिरेव न सम्भवति, अपि तु सन्ध्योपासनाद्युपासनाकर्मापि सम्भवति। अतो भक्तेन गमेमहि' इत्यस्य भजनकर्मणा सगता भवेमेत्यर्थोऽपि प्राप्यते । अतः सूर्योषसोर्भक्तिविषयत्वेन युगलोपासनाया बीजमपि प्राप्यते वैदिकवाङ्मये । अथर्ववेदेऽपि मुनयः परमात्मनो भक्तिमभिलषन्ति-'देव ! संस्फान !' इति मन्त्रे भक्ताः जना भक्तिमन्तो भवितुं प्रार्थयन्ते । तत्त्वविदां मते वेदानां पर्यवसानं भगवत्प्राप्तावेव, तस्य त्रिषु साधनेषु भगवद्भक्तिरपि मुख्यमेकं साधनमस्ति । तस्मात् कथं न तत्र स्पष्टतया भक्तिरभिहिता ? तत्र भक्तिर्न प्रतिपादितेति कथनं समीचीनं नास्ति ।

वैदिकानां मते वेदाः सर्वथा भगवत्स्वरूपा एव सन्ति । यथा सर्वत्र व्यापको भगवानिति कथयद्भ्यो विद्वद्भ्योऽप्यगोचर एव भवति तथैव भगवत्स्वरूपा वेदा अपि शब्दरूपेणाधिगताऽप्यर्थरूपेण तात्पर्यरूपेण व्यङ्ग्यतयाऽगोचरा एव भवन्ति । यथा च माता स्वपुत्रहिताय सत्यामपि वाञ्छायां मोदकादिकं बालेभ्यो न ददाति तथैव वेदा अपि स्वकीयं गूढार्थं न प्रकाशयन्ति[2] । भागवते च श्रीकृष्णेन वेदानां परोक्षवादितां गम्भीरार्थवादितादींश्च प्रतिपाद्य तेषां स्वस्मिन्नेव पर्यवसानं प्रतिपादितम्[3] । तेन वेदानां परोक्षप्रियत्वात् भक्तिशब्दस्य भक्तिरसशब्दस्य च स्पष्टतया निर्देशाभावेऽपि परोक्षरूपेण सङ्केतरूपेण व्यङ्ग्यरूपेण वा तस्य सत्ता वर्तत एव । इत्थं च वेदेषु भगवद्भक्तिस्तस्या रसत्वं परोक्षापरोक्षाभ्यां सम्भवत्येव, न कथमपि तत्र तस्याभावो भवितुमर्हतीति ।

## आगमेषु भक्तिरसः

आगमोऽयं शास्त्रेषु दार्शनिक-धार्मिकसम्प्रदायेषु वा संहितानाम्ना तन्त्रनाम्ना वापि प्रसिद्धो वर्तते । मन्त्रब्राह्मणात्मकेषु वेदेषु ब्राह्मणभागोऽपि संहितानाम्ना प्रसिद्धोऽस्ति, किन्तु तस्माद्भिन्नोऽयमागमापरनामधेय संहिताग्रन्थः तन्त्रग्रन्थो वा । मन्त्रब्राह्मणात्मकस्य-वेदस्य ज्ञानकर्मभक्तिरूपकाण्डत्रये या उपासना ( भक्तिः ) प्रतिपादिता, तस्याः पूर्णरूपेण विकास आगमग्रन्थेषु समुपलभ्यते । ते आगमा वैष्णवाचार्यमतेऽसंख्येयाः, वेदवदपौरुषेयाश्च सन्ति । वेदेषु प्रतिपादिता विष्णुशिवसूर्यगणपतिशक्तिरूपान् पञ्चदेवानाधारीकृत्याऽऽगमसम्मताः पञ्चसम्प्रदायाः परवर्त्तिभक्तिकाले प्रचलिताः । असंख्येषु आगमेषु वैखानससहिता पाञ्चरात्रसंहिताश्च विशेषतः वैष्णवीमुपासनां प्रतिपादयन्ति ।

---

१. उदुस्त्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो सूर्यस्य सूर्यस्य च सं भक्तेन गमेमहि ॥ ऋ० ७।८१।२ ।

२. भागवते ११।३।४३ । ३. भागवते ११।२१।३५ ।

पाञ्चरात्रसंहितान्तर्गते नारदपाञ्चरात्रे ज्ञानामृतसारसंहितायां मन्त्रपुरश्चरणपूजादिभिः श्रीकृष्णस्य वात्सल्य-सख्य-मधुरोपासना विशदेन प्रतिपादिता । तत्र—

ब्रजेन्द्रनन्दनो नन्दी ब्रजाङ्गनाविहारिणः ।
गोवत्सपुच्छसंकर्षजानन्दभरः रिङ्गमाणगतिः ॥
—नारदपाञ्चरात्रे ४।८।१०

इत्यादिना वात्सल्यमयम्

योधयन्तं क्वचिद्गोपान् व्यहरन्तं गवां गणम् ।
दण्डपाशोद्यतकरैर्गोपालैरूपशोभितम् ॥
—नारदपाञ्चरात्रे ४।६।८ गोपालस्तोत्रे

इत्यादिना सख्यभावमयम्

व्रज गोपालिका चेतो मोहयन्तं पुनः पुनः ।
वल्लभीवदनाम्भोजमधुपानमधुव्रतम् ॥
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ।
यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ॥
विचित्राम्बरभूषणाभिर्गोपनारीभिरावृत्तम् ॥
—नारदपाञ्चरात्रे ४।६।५- गोपालस्तोत्रे

इत्यादिना माधुर्यमयञ्च श्रीकृष्णस्य स्वरूपं प्रतिपादितं वर्तते । तत्र श्रीकृष्णेन सह तस्य परमप्रेयसी श्रीराधाऽपि विशदरूपेण वर्णिता । तत्र सा च प्रेमभक्ति प्रदायिनी, प्रेमानन्द-तरङ्गिणी, श्रीकृष्णप्रेमक्रीडा संसक्तेत्यादिरूपेण वर्णिता[1] । तत्र श्रीकृष्णसहस्रनाम श्रीराधासहस्रनाम्नापि वर्णितम् । इत्थञ्च दृश्यते यन्नारदपाञ्चरात्रे भक्तिरसः सम्यक्प्रदिपादित इति । अत एव भक्ताचार्यैः प्रतिपादितानां भक्तिरसानां मूलं वेद इव पाञ्चरात्रसंहिता अपि वर्तन्त इति सिद्ध्यति ।

नारदपाञ्चरात्रान्तर्गते माहेश्वरतन्त्रे भक्तेः रसत्वं वैशद्येन वर्णितम् । यथा हि—

अन्तःसुखसमुद्वेल्लो वहिः सन्धानविस्मृतिः ।
नेत्रयोरश्रुसंवाहः कम्पः स्वेदोदयस्तथा ।
रोमाञ्चः कण्ठरोधश्च लक्षणानि च वै विदुः । माहेश्वरतन्त्रे ४।५४-५५

इत्यादिना श्रीकृष्णभक्तिरसस्य सात्विकभावा निरूपिताः ।

निजधामरसानन्दं स्वप्रकाशं महोज्ज्वलम् ॥ माहेश्वतन्त्रे ७।६
रमते भगवान् यत्र स्वयं रसमयः पुमान् ॥ माहेश्वरतन्त्रे ७।९८

इत्यादिभिः श्रीकृष्णमालम्बनीकृत्य दिव्यलोकमालम्बनीकृत्य क्रीडाञ्चालम्बनीकृत्य

---

१. नारदपाञ्चरात्रे ५।५।१०९ ११० ।

भक्तिरसो वर्णितः। प्रतिपादितश्च तत्र श्रीकृष्णोऽक्षररूपेणः पुरुषोत्तमरूपश्चेति। तत्राक्षररूपः श्रीकृष्णः सृष्टिकर्तृत्वयुक्तः। पुरुषोत्तमरूपस्तु स स्वलीलया भक्तजनान् आनन्दयति। स एक एव परमात्मा लीलाभेदेन नानारूपं गृह्णाति[1]।

माहेश्वरतन्त्रे लीलाख्याने चतुर्विंशतिपटले निर्गुणसगुणोभयोपाधियुक्तस्य ब्रह्मणः तस्य लीलायाश्च रसालम्बनत्वं प्रतिपादितम्। व्याख्यातञ्च तत्र स च रसः संयोग-विप्रलम्भाभ्यां द्विविधः[2]। तत्रैव निर्गुणब्रह्मणो लीलापि वर्णिता। निर्गुणत्वात् नित्य-त्वाच्च तस्य लीला रसरूपा विद्यते[3]। तत्र निर्गुणत्वं नाम प्राकृतहेयगुणगणरहितत्वम्। दिव्यगुणगणयुक्तत्वमिति। अत एव तद् ब्रह्मप्राकृताकारादिहीनमपि। दिव्याकारादि-युक्तमानन्दरूपं, रसरूपञ्च विद्यते[4]। अतः प्राकृता गुणगणा एव ब्रह्मणः श्रुतिषु निषि-ध्यन्ते, न त्वप्राकृता दिव्यगुणगणाः। माहेश्वरतन्त्रे स्वरूपतो ब्रह्मणो गुणरूपहीन-त्वमनेकधा प्रतिपाद्य तस्य लीलादीनां खण्डनं कृतम्, प्रतिपादितञ्च भक्तिरसरसिकानां मनो न रमते तत्र निर्गुणब्रह्मणि, अपि तु तेषां भक्तिरसरसिकानां भक्तानां चित्तं ब्रह्मणो रसमयीलीलासु सततं रमते[5]। एवञ्च तादात्म्येनाभिन्नरूपत्वात् तस्य लीलाऽपि तन्मय्येव निगद्यते। रसस्वरूपस्य ब्रह्मणो लीलोपि तद्रूपत्वेन रसरूपैव। लीलोपयोगिनो विभावादिभावा अपि रसमया एव, यतो हि रसनिष्पादनोपयुक्ताः पदार्था अपि रस-रूपा एव रसशास्त्रेषु वर्णिताः। तस्माद् ब्रह्मलीलोपयोगिनः सर्वे भावा लीलात्मका एव सन्ति[6]। एवञ्च माहेश्वरतन्त्रानुसारं 'रसो नैव प्रसिद्धसो प्रियाबम्बनवर्जितः' इत्या-दिना प्रियाहीने ब्रह्मणि रसो नैव सम्भवति। अत एव प्रियया सार्धमेव परब्रह्मणः रसत्वं सम्भवति। एवञ्च नानाविधिभावसमन्वितं तद् ब्रह्म रसरूपमस्ति[7]। इत्थञ्च माहेश्वर-तन्त्रानुसारं स च रसः ( भक्तिरसः ) स्वयमेव भोक्तृभोग्योभयात्मको विद्यते। तयोः स्वाभाविकभेदेऽपि तत्त्वतो भेदो नोपलभ्यते[8]।

ब्रह्मसंहितायां ब्रह्मस्तुतावैश्वर्यपद्ये स परमात्मा श्रीकृष्णो न केवलमनन्तकोटि-ब्रह्माण्डनिर्माणे सर्वथा समर्थ एवास्ति, अपि तु तस्मिन् परमात्मनि परमाणव इवानन्त-कोटिब्रह्माण्डानि तिष्ठन्ति। निगमागमप्रतिपाद्यं तद्ब्रह्म तेजःसमूहस्य तस्याङ्गकान्तिरूपमेव

---

१. माहेश्वरतन्त्रे ७।७८–७६।
२ माहेश्वरतन्त्रे २४।११
३. माहेश्वरतन्त्रे २४।१७।
४. माहेश्वरतन्त्रे २४।१६।
५. माहेश्वरतन्त्रे २०।२०–२१।
६. माहेश्रतन्त्रे २४।२२–२४
७. माहेश्र तन्त्रे
८. माहेश्वरतन्त्रे ३२।५

विद्यते[1]। स एव परमात्मा माधुर्यपक्षे चिदानन्दमयरसात्मकः स्वकीयरूपकलादिभिः सह मन्मथरूपेण गोकुले निवसन् स्वलीलया भुवनानि समाकर्षति लोकेभ्य आनन्दञ्च प्रयच्छति।

हनुमत्संहितायां भगवतः श्रीरामचन्द्रस्य माधुर्यरसो मुख्यतया निरूपितो वर्तते। तत्र सखिसहस्रपरिवृतायाः सीतायाः श्रीरामस्य च मधुररसमयीलीला चारुवर्णिता। तासां लीलानां स्थानदर्शनेनैव साधके भक्ते भगवद्विषयिका रतिः प्रादुर्भवति। किन्तु तासां लीलास्थानानां दर्शनं कर्त्तुं स्त्रीभावसमन्विताः साधका एव, तत्रापि केवलं सीतादासोऽहमितिभावना प्रवणा एव साधकाः प्रभवन्ति, न तु पुंभावयुक्ताः साधकाः। तत्र हनुमानपि सीतादासी (नारीरूपः) भूत्वा चारुशीला नाम्ना स्वेष्टदेवयोः श्रीसीतारामयोर्माधुर्यमयीं भक्तिं (सेवां) करोतीति वर्णितम्। तत्र न केवलं मधुररस एव साङ्गोपाङ्गः प्रतिपादितः, अपि तु भक्ताचार्यप्रतिपादिताः पञ्चमुख्यभक्तिरसा अपि विस्तरेण वर्णिताः। तत्र श्रीराम एव साक्षात् परात्परं ब्रह्मेति मत्वा यः साधको नित्यं तं भजति सः शान्तभक्तिरसाश्रयः ( शान्तभक्तिरसः ) साधकः। श्रीरामो भक्तवत्सलः शरणागतप्रतिपालकः, दीनबन्धुः कृपासिन्धुरस्तीति ज्ञात्वा तं नित्यं यो भजति, सो दास्यरसाश्रयः साधकः (दास्यभक्तिरसः)। श्रीरामः परमप्रेमपात्रं मित्रमस्तीति भावनया स्नेहेन तं यः सेवते सः सख्यभक्तिरसाश्रयः साधकः (सख्यभक्तिरसः)। श्रीरामो मम बालक आज्ञापालकः, आनन्दवर्धकश्चास्तीति मत्वा यस्तं भजते सः वात्सल्यरसाश्रयः (वात्सल्यभक्तिरसः)। श्रीरामो मम पतिरहं तस्य पत्नी इति भावनया यस्तं भजते, स मधुररसाश्रयः साधको (मधुरभक्तिरसः) भवति। एवञ्च हनुमत्संहितायां भक्तेः रसत्वं साक्षात् परम्परयापि लभ्यते। एवमेव गर्गसंहितायामपि भक्तेर्भेदास्तथा तस्या रसत्वं च विशदेन निरूपितम्[2]।

एवञ्च शुकसंहितायां लोमशसंहितायां शिवसंहितायां गर्गसंहितायां च श्रीकृष्णस्येव श्रीरामस्यापि रासलीलादिवर्णनं दृश्यते। तत्र श्रीराम एव श्रीकृष्णः, सीता राधा, सरयू यमुनादिरूपेण रसाश्रयालम्बनोद्दीपनतया वर्णितः। विशेषतया तत्र माधुर्यभक्तिरेव वर्णित। इत्थञ्च परिज्ञायते संहिताग्रन्थेषु भक्तिरसस्य वर्णनं समुपलभ्यता इति।

## रामायणे भक्तिरसः

सकललौकिकाव्यानामुपजीव्यभूते आदिमहाकाव्ये रामायणे "शोकार्तस्य प्रवृतो मे

---

१. ब्रह्मसंहितायाम् १।४,४४।४६

२. गर्गसंहिताम्—६।३।६—११ पृष्ठे ३१२–१४ वेङ्कटेशप्रेसप्रकाशिते सं० २०१२

श्लोको भवतु नान्यथा[१]" इत्यादिना शोकस्थायी करुणो रसः प्राधान्येन प्रतिपादितः। श्रीमदानन्दवर्धनाचार्यप्रभृतीनामालङ्कारिकाणां मते रामायणे करुणरसस्यैव प्राधान्यं विद्यते। रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः 'शोकः श्लोकत्वमागतः' इत्येवं वादिना[२]। यद्यपि —

रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम्[३]॥

इत्यादिना शृङ्गारकरुणहास्यरौद्रभयानकवीरादयः षडेव रसाः प्रतिपादिताः, किन्तु तच्छ्लोकस्य टीकाकर्त्तुःगोविन्दाराजस्य मते तत्राऽऽदिपदेन वीभत्साद्भुतशान्तरसा अपि गृह्यन्ते। एवं च सामान्यतः तत्र सर्वे रसाः प्रतिपादिता दृश्यन्ते।

यथा हि तत्र विवाहानन्तरं वनगमनात् पूर्वं तथा वनवासप्रत्यावर्त्तनानन्तरं सीतारामयोः संभोगशृङ्गाररसः, सीताया लङ्कायां निवासकाले तयोः विप्रलम्भशृङ्गाररसः, दशरथस्य निधनकाले लक्ष्मणस्य मूर्च्छाकाले च करुणरसः,शूर्पणखावृतान्तकाले हास्यरसः, रावणादिचरित्रचित्रणे रौद्ररसः, कबन्ध-मारीचादीनां बधकाले भयानकरसः, युद्धकाले वीररसः, विराधादिमरणकाले वीभत्सरसः, रामरावणयोर्युद्धकालेऽद्भुतरसः, श्रवणादिवृतान्ते शान्तरसः, रावणवधानन्तरं ब्रह्मस्तुतौ शबरीसुतीक्ष्णादिकृतस्तुतौ च भक्तिरसः समास्वाद्यते रसज्ञैः।

यद्यपि रामायणेऽभिधया श्रीरामो महापुरुषरूपेणैव प्राधान्येन प्रतिपादितस्तथापि व्यङ्ग्यतया तु सः परमात्मरूपेणापि प्रतिपादितः, अत एव 'सा परानुरक्तिरीश्वरे' इति भक्तिसूत्रानुसारेण श्रीरामे परानुरक्तिः व्यङ्ग्यतया सर्वत्र प्रकाशिता महाकविना। अत एव तन्मूलकभक्तिरसोऽपि रामायणे सर्वत्र समनुभूयते भक्तिरसज्ञैः।

## महाभारते भक्तिरसः

यद्यपि महाभारते कौरवपाण्डवानां युद्धमेव प्राधान्येन वर्णितम्, अत एव तत्र प्राधान्येन वीररसेनैव भवितव्यम्, किन्तु श्रीमदानन्दवर्धनाचार्यमतानुसारेण 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्यादिना तत्र शान्तरसस्यैव प्राधान्यं वर्तते[४]। यथा भगवतो लीलागुणचरितादिकीर्त्तनेन भागवतादिपुराणेषु भक्तितत्त्वमथवा भक्तिरस

---

१. वाल्मीकिरामायणे १।२।१८ २. ध्वन्यालोके पृष्ठे ८०

३. वाल्मीकिरामायणे १।४।६

४. सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्या दर्शितम्, दर्शितं तु व्यङ्ग्यत्वेन- 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः'— ध्वन्यालोके चतुर्थोद्योते-पृ० ५७३

एव प्राधान्येन वर्णितमिति स्वीक्रियते, तत्रान्यरसाश्चाप्राधान्येनैव, तथैव महाभारते परमात्मनो गुणादीनां कीर्त्तनेन तत्रापि भक्तिरसस्यैव प्राधान्यम्। अन्येषां रसानामिव शान्तरसस्य तत्र गौणत्वमेवेति वक्तुं समुचितं प्रतिभाति।

पञ्चमवेदभूतस्य महाभारतस्याङ्गभूतायां श्रीमद्भगवद्गीतायां भगवद्भक्तिः प्राधान्येन प्रतिपादिता। अत एव तन्मूलको भक्तिरसोऽपि तत्र प्राधान्येन भक्तिरसज्ञैः समनुभूयते।

## पुराणेषु भक्तिरसः

यथा पुराणेषु भक्तिर्भक्तिरसो वा सुविस्तरेण प्रतिपादितस्तथैवागमग्रन्थेष्वपि भक्तिरसो विशदेन विवेचितः। किन्तु पुराणप्रतिपादितभक्तिरिवागमग्रन्थवर्णिता भक्तिर्जनसामान्येषु नातिप्रसिद्धिं गता। एवमेव वेदेषु या भक्तिर्नामान्तरेण (क्वचिद् भक्तिशब्देनापि) वर्णिता साऽऽगग्रन्थेषु नामस्वरूपसाधनादिकीर्त्तनपूर्वकं वर्णिता। किन्तु सहृदयहृदयानन्ददायिनीभिः कथाभिस्तस्याः पूर्णविकासः पुराणेष्वेव समुपलभ्यते। तत्र भक्तेर्बाहुल्येन वर्णनं विहितम्। इत्थं च या भक्तिर्वेदेषु बीजरूपेण प्राप्यते, साऽऽगमग्रन्थेषु (संहितासु) अङ्कुरिता पुष्पिता च दृश्यते, सैव पुनः पुराणेषु फलिता भक्ताचार्यैः स्वादुरसैः परिपूरिता च विलोक्यते।

वैष्णवानां परमप्रमाणभूते श्रीभागवते पुराणे परमं प्रतिपाद्यं वस्तु भगवद्भक्तिरेव। वस्तुतस्तु भागवतपुराणं भगवद्भक्तिप्रतिपादकं काव्यमेव। भागवतशब्देनात्र भगवतोऽयं जनो ग्रन्थो वेत्यर्थद्वयस्य विवक्षा वर्तते। अर्थात् भगवद्भक्तियुक्तो भक्तो जनो भागवतः, भगवद्भक्तिमयो भगवत्भक्तिस्वरूपप्रतिपादको वा ग्रन्थो भागवत इति कथ्यते। भागवते वर्णिताया नवधाभक्त्या आधारभूता भगवत्कथैव विद्यते। भक्ता भगवत्कथाद्वारा समाधिसुखमनुभवन्ति। भक्तिरसशास्त्रदृष्ट्या भगवत्कथाया महत्त्वपूर्णं स्थानमस्ति। वर्णितं च भागवते– संसारक्लेशक्लेशितानां जनानां कृते भगवतः पुरुषोत्तमस्य लीलाकथारसनिषेवणं विना ससारसिन्धुतरणाय नान्या तरणिर्विद्यत इति[1]। एवमेव 'निगमकल्पतरोर्गलितं फलम्[2]' इत्यादिना भागवतपुराणस्य रसरूपता वर्णिता। एवं भक्तानां कृते भागवतपुराणं निगमरूपकल्पतरोः सुपक्वं मधुर रसमयं फलमेव विद्यते, तस्यः समास्वादने सहृदयभावुकभक्ता एव समर्था भवितुमर्हन्ति। अपि च 'लीला कथा रसनिषेवणमन्तरेण[3]' इत्यादिना भगवतो गुणलीलादीनां श्रवणपठनादिनां समुद्भूत आनन्दो रसशब्देनावबुध्यते। 'सतां प्रसङ्गान्ममवीर्यसंविदो[4]' इत्यादिना भगवत्कथैव

---

१. भागवते १२।४।४०　　२. भागवते १।१।३

३. भागवते १२।४।४०।　　४. भागवते ३।२५।२५

भक्तिरसस्रोतस्त्वेन प्रतिपादिता। 'तानानयध्वमसतो विमुखान्[1]' इत्यादिना च भगवच्चरणस्मरणपूजनादीनामेव नरकनिवारकत्वमुक्तम्। 'न वै जनो जातु कथञ्चनाव्रजे[2]' इत्यादिना भगवच्चरणस्मरणात्मिका भक्ती रसरूपेण प्रतिपादिता।

इत्थं च भागवते बहुधा भक्तिरसो निरूपितः। अत एव भक्तिरसज्ञानां दार्शनिकानां मते भागवतपुराणं भक्तेः सर्वोत्तमो ग्रन्थः। भक्तिरसोऽयं न केवलं भागवतपुराण एव प्रतिपादितः, अपितु पुराणान्तरेष्वपि महता संरम्भेण प्रतिपादितः।

तत्र स्कन्धपुराणे प्रतिपादितं यत् 'भगवतो नामामृतरूपरसं पीत्वा[3]' भक्तो निःश्रेयसमपि तृणमिव मन्यते। अतो भगवद्भक्तिरसं विहाय न कमपि रसं वाञ्छन्ति साधकाः। एवमेव पद्मपुराणेऽपि भगवद्भक्तिरसो विस्तरेण प्रतिपादितः, वर्णितं च तत्र यावद्भक्ता अशेषरसैकसारं भक्तिसुधारसं न पिबन्ति न तावत् संसारबन्धनात् विमुच्यन्ते[4]। एवं च भगवद्भक्तिरस एव प्रधानरसरूपेण प्रतिपादितस्तत्र। यद्यप्यनेन रसशब्देन श्रृङ्गारादयोऽन्येऽपि रसा अभिधीयन्ते तथापि तेषु पूर्णानन्दप्रदत्वस्याभावात् पूर्णरसत्वं नास्तीति निर्भयं वक्तुं शक्यम्। अपि चान्यरसैः संसारसागरनिमग्ना जीवा भवबन्धनाद् न विमुच्यन्ते किन्तु भक्तिरसेनैव भवबन्धनात् विमुच्यन्ते, भगवत्सान्निध्यमपि प्राप्नुवन्ति। एवमेव ब्रह्मवैवर्तपुराणे 'विष्णुभक्तिरसं परम्[5]' इत्यादिना भगवद्भक्तिरस एव सर्वोत्कृष्टतया प्रतिपादितः। एवमेवाग्निपुराणे, शिवपुराणे गरुडपुराणे विष्णुधर्मोत्तरपुराणे च काव्यरसो भक्तिरसो वा विशदरूपेण प्रतिपादितः।

एवञ्च पुराणानां पर्यालोचनेन परिज्ञायते यद् भक्तिरसो तथाविधः सामान्यरसो न विद्यते यस्याऽऽस्वादनेन किञ्चित्कालमेव सुखोपलब्धिः स्यात्, न वाऽऽयुर्वेदीयं रसायनमेव यस्य सेवनेन यत्किञ्चित्कालमेव शरीरं पुष्टं भवेत् किन्तु भक्तिरसस्तु सकलसहृदयहृदयानन्दवर्द्धकः सुधासारो विद्यते। वस्तुतो भक्तिरसो रसिकानां मते पीयूषादपि श्रेष्ठोऽस्ति यतो हि सुधापानजन्यं यदमृतत्त्वं भवति तत्तु मन्वन्तरकालपर्यन्तमेव भवति, कल्पान्तरे तु 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनमिति रीत्या पुनर्दुःखमापद्यते किन्तु भक्तिरसास्वादनेन त्रिविधदुःखं सर्वथा विनश्यति निरतिशया-

---

१. भागवते ६।३।२८। २. भागवते १।५।१९

३ स्कन्दपुराणे काशीखण्डे ७४।६०, तत्रैव वै० ख० १।१८।

४. यावज्जनो न श्रृणुते भुवि विष्णुभक्तिम्।
साक्षात् सुधारसमशेषरसैकसारम् ॥ पद्मपुराणे पा० ख० ८५।३३

५. ब्रह्मवैवर्तपुराणे कृष्णजन्मखण्डे ५९।६४, १७५-१७६।

नन्दश्च प्राप्यते। अत एव पद्मपुराणे[1] प्रतिपादितं यत् यावन्मनुष्या भक्ताः परमानन्दस्वरूपं साक्षादमृतमयं भक्तिरसं न समास्वादयन्ति तावत्ते जरामरणजन्मरूपाणि दुःखानि लभन्ते। समास्वादनेन भक्ता त्रिविधदुःखेभ्यः सर्वथा विमुच्यन्ते।

## काव्यशास्त्रे रसोन्मेषक्रमः

भारतीयकाव्यशास्त्रे आचार्यद्रुहिणादारभ्य पण्डितराजजगन्नाथपर्यन्तं रसस्य निष्पत्तौ स्वरूपे विकासे च गभीरतया विचारो बभूव। तत्र सर्वप्रथमं नाट्यशास्त्रप्रणेता भरतमुनिर्नाट्यशास्त्रेऽथर्ववेदोक्तं रसमनुसृत्य रससिद्धान्तं स्थापितवान्, एवञ्च काव्यशास्त्रे रसतत्त्वस्य प्रथमः समुद्भावको भरतमुनिरेवास्ति। तन्मते रसं विना किमपि नाट्यं कथमपि प्रवर्तयितुं न शक्यते[2]। रसज्ञानां मते काव्यशास्त्रस्य मूलतत्त्वं रस एव विद्यते। रसं विना काव्यशास्त्रे गुणालङ्कारादयो न शोभन्ते। न च रसं विना काव्यमेव सम्भवेत्। अतः काव्यशास्त्रे रसोऽवश्यमेव स्वीकार्यः।

भरतमुनेः पश्चात् दृश्य-श्रव्योभयविधकाव्यतत्त्वविद्भिः प्रत्यक्षाप्रत्यक्षरूपेण रससिद्धान्तस्य विकासे महत्त्वपूर्णः प्रयासः कृतः। आलङ्कारिका भामह दण्डि रुय्यकादयः, वक्रोक्तिवादी कुन्तकः, औचित्यवादी क्षेमेन्द्रः, ध्वनिवादिनः-श्रीमदानन्दवर्धनाचार्य-श्रीमदभिनवगुप्ताचार्य - मम्मटाचार्य - पण्डितराजजगन्नाथदयश्चेत्येते सर्वेऽपि रससिद्धान्तस्य परिस्करणे प्रशंसनीयं यत्नं कृतवन्तः। नाट्यशास्त्रस्य प्रणेतारो धनञ्जय-शारदातनय-सिङ्गभूपाल-रामचन्द्रगुणचन्द्रादयश्च रसशास्त्रं नवीनविचारालङ्कारैरलङ्कर्तुं स्तुत्यं प्रयासं कृतवन्तः। रससिद्धान्तवादिनो भोजराज-भानुदत्तयोरपि प्रयासो विषयेऽस्मिन् प्रशंसनीय एव। भरतमुनेः रससूत्रस्य व्याख्यातारो लोल्लटशङ्कुक भट्टनायकाभिनवगुप्तमहिमभट्टादयश्च रसवृक्षस्य संवर्द्धने महान्तं यत्नमकार्षुः। एतैर्नाटयादिरूपेण लौकिकत्वेऽप्यलौकिकब्रह्मानन्दस्वरूपस्य रसस्य महनीयं कमनीयं स्वरूपं प्रत्यपादि।

भगवद्भक्तिरससंसिक्तरलहृदयैर्गौडीयगोस्वामिभिर्माधुर्यमयप्रेमसमन्वितो भक्तिरसो नूतनतया स्थापितः। येन कालान्तरे रससंख्याया वृद्धिरपि जाता, एतदर्थं जीवगोस्वामि-रूपगोस्वामि-मधुसूदनस्वामि-करपात्रस्वामिप्रभृतयः सर्वदा संस्मरिष्यन्ते। भक्तिरसामृतसिन्धावगाहमानानां रसाचार्याणां प्रयासेन सम्पूर्णं सगुणभक्तिसाहित्यं सहसा चमत्कृतं बभूव। न केवलं सगुणभक्तिसाहित्यमेवापि तु निर्गुणसाहित्यमप्यनया

---

१. पद्मपुराणे पातालखण्डे ८५।३३।

२. नहि रसादृते कश्चिदप्यर्थः प्रवर्तते। नाटयशास्त्रे पृष्ठे ७१

विचारसरण्या व्यापकतया प्रभावितं वर्तते। यस्य परिणामस्वरूपेण निर्गुणोपासनायामपि माधुर्यमयरहस्यवादस्य, मनोहरस्य, सूक्ष्मस्यातीन्द्रियस्यालौकिकभावस्य च सृष्टिरभूत्।

रसस्य शृङ्गारादिभेदो हि सर्वथा प्राचीनो वर्तते। शृङ्गारादिरसानां नाम्ना निर्देशस्तु लौकिकसाहित्ये प्रथमतो भगवताऽऽद्यकविना वाल्मीकिना रामायणीयबालकाण्डे कृतः[1]। पश्चाद् भरतमुनिना स्वविरचिते नाट्यशास्त्रेऽष्टौ रसाः परिगणिताः[2]। किन्तु केषाञ्चिन्मते नवमः शान्तरसः, वात्सल्यनामको दशमरसः, एकादशो भक्तिरसस्तथा अन्येऽपि बहवो रसाः पृथग्रूपेणोद्भूताः, ते सर्वे यथावसरमनुपदमेव विचारयिष्यन्ते।

विभावादिभिरास्वादगोचरतां प्राप्तः स्थायिभाव एव रसत्वं प्राप्नोतीति दृढः सिद्धान्तो वर्तते। तत्र विचार्यते यद्यपि आस्वादस्तु 'स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः[3]' इत्यादिनाऽऽनन्दात्मकतया सर्वत्राविशिष्टस्तथापि उपाधिभेदेन चतुर्विधो भवति। उपाधिस्तु चित्तवृत्तिरेव, सा च विकास-विस्तर-क्षोभ-विक्षेपरूपा विद्यते। शृङ्गारे विकासः, वीरे विस्तरः, बीभत्से क्षोभः, रौद्रे च विक्षेपो भवति। एत एव चत्वारो रसाः प्रकृतित्त्वेन भरतमुनिना निगदिताः। हास्याद्भुतभयानककरुणादिरसानामेव स्वस्वविभावादिभिः परिपुष्टिं गतानां त एव विकासादयश्चेतसो विकारा उपाधयो भवन्ति[4]।

नाट्यशास्त्रे रसानां मुनिना यत् हेतुहेतुमद्भावः प्रदर्शितः स तु तत्तद्रसोपाधेरेकत्वाभिप्रायेण न तु कार्यकारणभावाभिप्रायेणेति[5] मन्तव्यम्। अपि च या एव शृङ्गारानुकूला विकासात्मिकाचित्तवृत्तिः सैव हास्यं प्रत्यनुकूला इति तयोः प्रयोज्यप्रयोजकभावो नाट्यशास्त्रे प्रतिपादितो भरतमुनिना। न च तयोः प्रकृतिविकृतिभावः, उपादानोपादेयभावो वा विवक्षितः, यतो हि तथात्वे सति रसानामष्टसंख्यात्वं विलुप्येत। एवं च वीराद्भूतयोः, बीभत्सभयानकयोः, रौद्रकरुणयोरपि चित्तवृत्तिभेदेनोत्पाद्योत्पादकभावो बोध्यः। एतत्सर्वं धनञ्जयेन दशरूपके धनिकेन च दशरूपकावलोके स्पष्टतया प्रतिपादितम्। श्री विद्याधरेण तु एकावल्याम्—

विकासः कुसुमस्यैव पादपस्यैव विस्तरः।
क्षोभोऽब्धेरिव, विक्षेपो मारुतस्यैव चेतसः॥ ३॥

---

१. वाल्मीकिरामायणे १।४।६ २. भरतनाट्यशास्त्रे ६।१६
३. दशरूपके ४।४३।
४. शृङ्गारहास्ययोर्विकासः———तेषामुत्पत्तिहेतवश्चत्वारो रसाः। दशरूपके
५. भरतनाट्यशास्त्रे ६।३६–४१ काशी संस्कृतसिरीजसंस्करणे

इत्यादिना विकासादीनां स्वरूपमुपमामुखेन प्रतिपादितम्। अपि च यः प्रयोज्यप्रयोजकभावो हेतुहेतुमद्भावव्यपदेशेन धनञ्जयकृते दशरूपके, धनिककृतायामवलोकटीकायां च शृङ्गारादीनां हास्यादिभिः सह सम्बन्धः स्थापितस्तस्य स्वरूपं 'एकावल्याम्' विद्याधरेणोद्घाटितम्[1]। अभिनवगुप्ताचार्येण तु रसानां पुरुषार्थोपयोगितया परस्परं साजात्यं स्थापितम्। धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयत्वेन चत्वार एव रसाः स्वीकृता मूलतया[2]।

काव्यमीमांसाकारराजशेखरमते रसस्य प्रथमः प्रतिष्ठापको नन्दिकेश्वरोऽभूत्[3]। किन्तु नाट्यशास्त्रस्य प्रणेतुः भरतमुनेः कथनानुसारेण 'द्रुहिण' एव सर्वप्रथमं रसस्य प्रतिष्ठापकोऽस्ति। तेनैव सर्वप्रथमं रसाः कल्पिताः पश्चाद्भरतमुनिना लक्षणग्रन्थे रसा लक्षिताः[4]। प्रथमतो भरतमुनिना शृङ्गार-रौद्र-वीर-वीभत्साख्याश्चत्वार एव रसाः स्वीकृताः। अग्निपुराणानुसारेण परब्रह्मणश्चैतन्यस्वरूपस्य सहजानन्दात्मिका चैतन्यस्वरूपा चमत्कारपूर्णा सहजाभिव्यक्तिरेव रसपदेन कथ्यते[5]। 'रसो वै सः' इत्यादिश्रुतिभिः सच्चिदानन्दः परमेश्वरः रसमयोऽस्तीति सिद्ध्यति। रसो वस्तुतो रसस्वरूपस्य सच्चिदानन्दस्याभिव्यक्तिरेव। आनन्द एव विविधवस्तुसम्पृक्तो विविधरसरूपतामाप्नोति। तात्पर्यमिदं यत् सर्वप्रथमं शृङ्गार-वीर-रौद्र-वीभत्सरूपाश्चत्वार एव रसाः स्वीकृताः, कालान्तरे रससंख्या विवृद्धा। मम्मटेनापि प्रथममष्टावेव रसास्तेषां[6] चाष्टावेव स्थायिभावाः[7] स्वीकृताः। पश्चात् शान्तनामको नवमरसस्तस्य स्थायिभावो निर्वेदश्च स्वीकृतः[8]। त एव स्थायिभावा विभावानुभावसञ्चारिभिः लोकोत्तरानन्दरूपेण परिणमन्ते, तदनन्तरमेव ते रसत्वं भजन्ते।

## रसस्वरूप-विचारः

रससम्प्रदायस्य प्रवर्तकः श्रीभरतमुनिः। तेन स्वीये रससूत्रे रसस्वरूपनिरूपणाय "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति"रिति सूत्रितम्। अस्य सूत्रस्य व्याख्यानं

---

१. हास्याद्भुतकरुणभयानकेष्वपि विकासादिरेवोपाधिभिरित्येभिः सह मित्रता शृङ्गारादीनां, न तु कार्यकारणभावः, तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात्। एकावल्याम् ३ पृष्ठे ६६।

२. कामप्रधानः साजात्यामिति। काव्यतत्त्वसमीक्षायाम् पृष्ठे २१८

३. काव्यमीमांसायाम् पृष्ठे ६। ४. नाट्यशास्त्रे ६ पृष्ठे ६६।

५. अग्निपुराणे ३३६।१-२।

६. काव्यप्रकाशे ४।२६। ७. काव्यप्रकाशे ४।३०।

८. काव्यप्रकाशे ४।३०।

तत्तद्दर्शनाचार्यास्तत्तद्दर्शनसिद्धान्तानुसारं कृतवन्तः। तत्र केचन नैयायिकाः केचन वेदान्तिनः, केचन मीमांसकाः, केचन काश्मीरकप्रत्यभिज्ञादर्शनानुयायिनोऽद्वैतिनः। तत्र नैयायिकः श्रीशङ्कुको रसानुभूतिरनुमितिजन्येति प्राच्यन्यायानुसारेण प्रत्यपादयत्। एतन्मते विभावानुभावव्यभिचारिभ्योऽनुमितः स्थाय्येव रसः। तदनन्तरभावी कश्चन भ्रान्तिरियमित्युद्घोषितम्। वेदान्तानुसारी भट्टनायकः काव्ये भावकत्वभोजकत्वनाम्नी द्वे स्वतन्त्रे शक्ती अभ्युपगम्य प्रेक्ष्यप्रेक्षकयोः साधारणीभावजन्योऽयमिति मनुतेस्म। एतन्नये रसास्वादो ब्रह्मास्वादसहोदरः। काव्यानन्द-ब्रह्मानन्दयोरयमेव भेदो यत् काव्यानन्दे चैतन्यं विषयेणोपरक्तं भवति न तु ब्रह्मानन्दे।

अभिनवगुप्तस्तु काश्मीरशैवसिद्धान्तानुसारेण रससिद्धान्तं स्थापयन् प्रेक्ष्यप्रेक्षकयोः साधारणीभावो भवतीति च प्रदर्शयन्, भावकत्वभोजकत्वशक्त्यभ्युपगमो व्यर्थ इति च सिद्धान्तयन्, रसानुभवे प्रक्रियात्रयं स्वीकरोति।

तन्मतानुसारेण प्रथमप्रक्रियायां प्रस्तावनागतगीतादिचर्वणाविस्मृतसांसारिकभावनया स्वच्छदर्पणकल्पीभूतनिजहृदयः प्रतिभाशाली सहृदयो दृश्यदर्शनध्वनियुक्तश्रव्यश्रवणानन्तरं स्वप्रतिभया कविमनोगतचित्रसदृशं विभावानुभावव्यभिचारिणां देशकालव्यक्तिविशेषसम्बन्धशून्यं चित्रं स्वान्तःकरणे चित्रयति। एवञ्च वासनारूपेण स्थितस्य विभावादिसमुचितस्य स्थायिभावस्य जागरणात् तेन सह विभावानुभावव्यभिचारिभावानां पानकरसन्यायेन संमिश्रणादभिव्यक्तं रसमनुभवति।

द्वितीयप्रक्रियायां सहृदयचेतसश्चर्व्यमाणरससारग्रहणपरत्वाद् विभावादिभिः स्थाय्येव चर्वणाश्रयः। यतो हि अमुख्याश्रये न कस्यचित् संविद् विश्राम्यति, अमुख्याश्रयप्रत्ययस्य प्रधानान्तरं प्रत्यनुधावतः स्वात्मन्येव विश्रान्तत्वात्। अतः स्थायित्वेन विभावानुभाववर्गे संमिश्रितेऽपि स्थाय्येव चर्व्यते। यथाहि अभिनवगुप्ताचार्यैः—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः,
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्। शाकुन्तले १।७

इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिकाऽपहसिततत्तद्वाक्योपात्तकालादिविभागा तावत्प्रतीतिरुपजायते। तस्यां च या मृगपोतकादिभीतिः तस्या विशेषरूपत्वाभावात् भीत इति त्रासकस्यापारमार्थिकत्वाद् भयमेव देशकालाद्यनालिङ्गतम्। तत एव भीतोऽहं भीतोऽयं शत्रुर्वयस्यो मध्यस्थो वा इत्यादिप्रत्ययेभ्यो दुःखसुखादिकृतहानादिबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणं निर्विघ्नप्रतीतिग्राह्यं साक्षादिव हृदये निविशमानं चक्षुषोरिव विपरिवर्तमानं भयनको रसः[1]।

---

१. अभिनवभारत्याम् — भाग १ पृष्ठे २८०।

तृतीयप्रक्रियायां विषयविषयिरूपं द्वैतं सर्वथा विनश्यति, संविदः पूर्णतयान्तर्मुखीभूतत्त्वात् विषयतयाऽवभासमानस्योद्बुद्धस्य स्थायिनोऽपि वासनायां निमग्नत्वात्। एवं चाभिनवगुप्तानुसारं तृतीयप्रक्रियायां रसानुभवः परमानन्दानुभवो व्यतिरेकतुरीयातीतसमाधावनुभूयमानादनुभावादभिन्नः, सर्वस्यापि वैषयिकज्ञानस्य वासनायां निमग्नत्वाच्छुद्धस्य संविदात्मन आनन्दरूपे स्वरूपे भावनाच्च[1]। तथा चाभिनवभारत्याम्—'अस्मन्मते तु संवेदनमेवानन्दघनमास्वाद्यते। तत्र का दुःखशङ्का[2]'।

इत्थं चाभिनवगुप्तप्रतिपादितरसब्रह्मवादानुसारेण रसास्वादोऽचरमावस्थायां न ब्रह्मास्वादसहोदरो यथा भट्टनायकमते, न रत्याद्यवच्छिन्नाया भग्नावरणायाश्चित्तोऽनुभवो यथा पण्डितराजजगन्नाथमते, नापि भग्नावरणचिद्विशिष्टस्य रत्यादेरनुभवः सः, यश्च रसगङ्गाधरकारोऽभिनवगुप्तमतत्वेन बुध्यते स्म, अपि तु निरवच्छिन्नपरमानन्दास्वाद एव रसास्वादो विद्यते।

मीमांसकमतानुयायिनो भट्टलोल्लटस्योत्पत्तिवादो यथा यत्र विभावादिकारणैः सह स्थायिभावस्य दमयन्त्यादिदर्शनजन्यनलादिसमवेतरत्युद्बोधस्य तत्कार्यकटाक्षादिसहचरितोत्कण्ठादीनां चानुकार्यनलादिनैव सम्बन्धात्तत्रैव रस उत्पद्यते, नटे तु तत्तदनुकृत्या सादृश्यमूलकारोपो विधीयत इति।

नैयायिकस्य शङ्कुकस्यानुमितिवादो यथा— यत्रानुकार्ये नलादौ गृहीतैर्विभावादिभिरनुकार्यभिन्ने नटे रसस्यानुमानं क्रियत इति। आभ्यामाचार्याभ्यां प्रदर्शितरसनिष्पत्तिप्रकाराद् भिन्नो भक्तिरसनिष्पत्तिप्रकारः। भक्तिरसदृष्ट्या तु रसोत्पत्तिरनुकार्ये न भवति, नापि नटेऽनुमीयते, अपि तु तत्र भक्तस्य भाव एवाऽऽस्वादगोचरो भूत्वा रसरूपतां गृह्णाति।

नाट्येऽनुकार्यगतभावस्य नटे आरोपसंभवेऽपि भक्तिमार्गीयरसानुभूतौ न तथारोपो भक्तिरसास्वादनाय मन्यते। किन्तु श्रवणकीर्तनकारिणि भक्त एव भक्तिरसास्वादः। अत एव भट्टनायकस्यापि भावकत्वभोजकत्वरूपव्यापारद्वयनूतनकल्पनापि कृतकार्या न भवति— यत्रैकया विभावादीनां साधारणीकरणं क्रियते, अन्यया च सत्त्वोद्रेकाज्जायमानामानन्दात्मिकां संविद्विश्रान्तिं संसाध्य रसास्वादः क्रियते।

१. मधुरादिरसास्वादे तु विषयस्पर्शव्यवधानम्, ततोऽपि काव्यनाटकादौ तद्व्यवधानशून्यता, तद्व्यवधानसंस्कारानुवेधस्तु तत्रापि। परन्तु तथोचितव्यधानांशतिरस्क्रियासावधानहृदया लभन्त एव परमानन्दम्।

—प्रत्यभिज्ञाविवृतिविमर्शिन्याम् भागे २ पृष्ठे १७८।

२. अभिनवभारत्याम् भाग १ पृष्ठे २६३।

अत्रत्य विभावानुभावव्यभिचारिपदानां व्युत्पत्तिः श्रीकरपात्रस्वामिमहोदयेन स्वीये भक्तिरसार्णवे[1] इत्थं कृता-विभावयन्ति-आविर्भावयन्ति, उद्बोधयन्ति प्रसुप्तं स्थायिनमिति विभावाः– आलम्बनानि, उद्दीपनानि च। तथा च विषयता सम्बन्धेन स्थायिविशिष्टमालम्बनम्, स्वोदबोधकतासम्बन्धेन स्थायिविशिष्टमुद्दीपनम्। स्थायिकार्यत्वे सत्यालम्बनचेष्टारूपोऽनुभावः। आलम्बनावच्छेदेन आविर्भविष्णुस्तिरोभविष्णुः स्थायि-पोषको व्यभिचारी चेति। तदुक्तं काव्यप्रकाशे– विभावेन उत्पाद्योत्पादकभावरूपादनु-भावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्पोषकभावरूपात् संयोगात् सम्बन्धाद् रसनिष्पत्तिरुत्पत्तिः, अभिव्यक्तिः, पुष्टिश्चेत्यर्थः स्वीक्रियते।

रसशास्त्रानुसारेण रस्यन्ते आस्वाद्यन्ते इति रीत्या शृङ्गारवीरकरुणाद्भुतहास्यभया-नकबीभत्सरौद्राख्या रसाः स्वीक्रियन्ते। केषाञ्चिचद् रसज्ञानां मते शान्तोऽपि नवमः, वात्सल्यं दशमश्चेति दश रसाः।

तत्र रतिस्थायिभावकः कान्ताद्यालम्बनः स्त्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसञ्चारितः शृङ्गाररसः, उत्साहस्थायिभावको द्विषदादिजनालम्बनकोऽपकारगुणा-द्युद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षवेगचिन्तादिसञ्चारितो वीररसः, शोकस्थायि-भावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसञ्चारितः करुण-रसः, विस्मयस्थायिभावको विस्मयजनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकिता-द्यनुभावितो हर्षादिसञ्चारितोऽद्भुतरसः, हास्यस्थायिभावको विकृतकृपालम्बनको वैकृता-द्युद्दीपितो गलफुल्लाद्यनुभावितः श्रमादिसञ्चारितो हास्यरसः, भयस्थायिभावको विकटा-द्यालम्बनस्तद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसञ्चारितो भयानकरसः, जुगुप्तास्थायिभावको विण्मूत्राद्यलम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसञ्चारितो वीभत्सरसः। क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दी-पितो विकत्थनाद्यनुभावितो गर्वादिसञ्चारितो रौद्ररसश्चेत्यष्टौ रसाः सर्वैः स्वीक्रियन्ते।

केषाञ्चिन्मते निर्वेदः शमो वा स्थायिभावो यस्य तादृशः शान्तरसः, वत्सलस्थायी वात्सल्यरसस्तथा भगवद्रतिस्थायी भक्तिरसोऽपि स्वीक्रियते। इत्थं च रसज्ञानां मतेऽष्ट-भेदो नवभेदो दशभेद एकादशभेदो वा विद्यते।

## विभिन्नरसस्य परिकल्पना

रससंख्याविषये विदुषां रसज्ञानां मतैक्यं नास्ति। सामान्यतः भरतमुनिमतेऽष्टा-

१. भक्तिरसार्णवे पृ० ५६ भक्तिसुधासाहित्य परिषत् कलकत्ता २०२५ वि० सं०

वेव रसाः स्वीकृताः। किन्तु अभिनवगुप्तमतानुसारेण भरतमुनिनाऽपि नवरससंख्या स्वीकृता, अभिनवगुप्तमते नाट्यशास्त्रे—

श्रृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ ६।१५ इत्यस्य स्थाने
'श्रृङ्गारहास्य……वीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः।'

तथा च—

'जुगुप्साविस्मयश्चेति स्थायिभावाः प्रकीर्तिताः।' ६।१७ इत्यस्य स्थाने
'जुगुप्साविषमयशमाः स्थायिभावाः प्रकीर्तिताः।' इति

पाठभेदो भरतसम्मत एव प्राप्यते। किन्तु शान्तरसविरोधिभिः प्रोक्त-पाठभेदो न स्वीक्रियते। अत एवान्यापेक्षयाऽभिनवगुप्तमते नाट्यशास्त्रेऽष्टौ नव वा रसाः सन्ति। यद्यपि भावपरिसंख्याने भरतमते न केवलं पञ्चाशद्भावा एव गणिताः, तत्र अष्टावेव स्थायिभावाः संख्याताः, अत एवाष्टावेव रसाः प्रतीयन्ते। किन्तु रसप्रकरणे नाट्याशास्त्रे श्रृङ्गारादिरसानां प्रतिपादनानन्तरं शान्तरसप्रतिपादनात् तथा 'भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः' इत्य-स्याऽऽधारेण स्थायिभावस्याष्टसंख्याप्रतिपादनेऽपि नवरससंख्यास्वीकारे नास्ति क्षतिः[1]। अत एव शान्तरसस्य स्थायिभावः पृथग्रूपेण न परिगणितः। अथवा मम्मटाभिमतेन शान्तरसस्य स्थायिनिर्वेदस्य स्थायिभावसञ्चारिभावरूपोभयधर्मावच्छिन्नत्वेन तस्य निर्वेदस्य स्थायिभावेषु गणना न कृता। उभयधर्मावच्छिन्नत्वादेवामङ्गलप्रायत्वेऽपि सञ्चारिभावगणनाप्रसङ्गे 'निर्वेदग्लानिशङ्काख्यः'— इति रूपेण निर्वेदस्य गणनाऽऽदौ कृता मम्मटाचार्येण। तेन नाट्ये नवरसाः प्रतिपादिताः[2]।

## शान्तरसः

एवं सत्यपि शान्तरसविषये बह्वो विप्रतिपत्तिरुद्भाविता विद्वद्भिः। शान्तरस-प्रधानमहाभारतनागानन्दादिश्रव्य-दृश्यप्राचीनकाव्यग्रन्थान् विलोक्य शान्तरसं मन्य-मानानामाचार्याणां मते रसोऽय प्राचीनपरम्परासम्मत एवास्ति। भरतमुनिमते तु सर्वेषां रसानां प्रकृतिः शान्तरस एव, अन्ये रसास्तु विकृतिरूपाः। यथा समुद्रे वायुवेगात् तरङ्गाः समुद्भवन्ति, पुनश्च वायोरपाये सति तरङ्गाः समुद्र एव विलीयन्ते तथैव

१. अभिनवभारत्याम् पृष्ठे ६२४।

२. श्रृङ्गारहास्यकरुणरौद्रवीरभयानकैः।
वीभत्साद्भुतशान्ताख्ये रसैः कार्यं समन्वितम्॥ वि० ध० पु० ३।१५।१४
शान्ताख्या नव नाट्यरसाः स्मृताः। वि० ध० पु० ३।१७।६१

शृङ्गारादयः सर्वे रसाः स्वस्वनिमित्तान्यासाद्य शान्तरसादुत्पद्यन्ते किन्तु निमित्तापाये पुनः तत्रैव विलीयन्ते। अतः शान्तरस एव मूलप्रकृतिः रसानाम्, अन्ये च विकृतिभूता एव[1]। एवमेवाभिनवगुप्तमतेऽपि शान्त एव प्रकृतिरसः, अन्ये च विकृतिरूपाः[2]। अपि च 'क्वचिद् धर्मः'– इत्यादिनाट्य[3]शास्त्रानुसारेणाभिनवगुप्तमतेऽपि भरतमुनिसम्मत एव शान्तोऽयं रसोऽस्ति[4]। एवं चानन्दवर्धनाचार्यादिमतेऽपि शान्तरसोऽस्त्येव।

पण्डितराजजगन्नाथेन रसगङ्गाधरे प्रतिपादितं यत् यैर्नाटके शान्तरसो न स्वीक्रियते, तैरपि बाधकाभावात् महाभारतादिप्रबन्धे च सर्वैः शान्तरसोऽनुभवसिद्धत्वेन श्रव्यकाव्ये तु शान्तरसोऽवश्यमेव स्वीकर्त्तव्यः। अत एव मम्मटेनापि 'अष्टौ नाट्ये रसाः स्मृताः' (का० प्र०) इति प्रतिपाद्य 'शान्तोऽपि नवमो रसः' (का० प्र०) इत्यादिनोपसंहृतः[5]।

शान्तरसविरोधिनस्तु 'अष्टौ नाट्ये रसाः स्मृताः' इति भरतवाक्यमाधृत्य भरतोऽपि शान्तरसविरोधी इति मन्यन्ते। अपि च तेषां मते शान्तरसोऽयं विक्रियाजनकत्वेन, अनभिनेयत्वेन नाटकेऽप्रयोजनीयत्वेन शान्तरसो भवितुं नार्हति। अपि च शान्तरसे रागद्वेषाभावात् तत्र सहृदयसंवादोऽपि न संभवति यथान्यरसेषु[6]। केचित्तु शान्तरसं

१. भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते॥
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।
पुनर्निमित्तापाये च शान्त एवोपलीयते॥
—भरतनाट्यशास्त्रे ६।३३५–३३६, गायकवाडसंस्करणे प्रथमभागे।

२. सर्वरसानां शान्तप्राय एवास्वादः, विषयेभ्यो विपरिवृत्त्या। अभि० भा० ६।

३. क्वचिद् धर्मः क्वचित् क्रीडा क्वचिदर्थः क्वचिच्छ्रमः।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः॥ भरतना०शा० १।१०८

४. प्रतीयत एवेति। मुनिनाप्यङ्गीकृततया एव क्वचिच्छमः। लोचने पृष्ठे ३६१।

५. यैरपि नाट्ये शान्तो रसो नास्तीत्यभ्युपगम्यते तैरपि बाधकाभावात् महाभारतादिप्रबन्धानां शान्तरसप्रधानतया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः। अत एव 'अष्टौ नाट्ये रसाः स्मृताः' इत्युपक्रम्य 'शान्तोऽपि नवमो रसः' इति मम्मटभट्टा अभ्युपसमहार्षुः।
—रसगङ्गाधरे पृष्ठे १३५–१३६।

६. न च तथाभूतस्य सहृदयाः स्वादयितारः सन्ति। दशरूपके ४।४५ टीकायाम्
अन्ये तु वस्तुतस्तस्याभावं वर्णयन्त्यनादिकालप्रवाहायातरागद्वेषोच्छेत्तुमशक्यत्वात्। दशरूपके चतुर्थप्रकाशे ४।३५ टीकायाम्।

वीरवीभत्सयोरेवान्तर्भावं स्वीकुर्वन्ति। इत्थं चैतेषां मते शान्तरसस्वीकारे न किमपि प्रयोजनं दृश्यते।

किन्तु बह्वो विद्वांसः शान्तरसं स्वीकृत्य तस्य स्थायिभावं च शम-निर्वेद-सकल-तृष्णाक्षयनाम्नाऽङ्गीकृत्याऽऽत्मविश्रान्तिजन्यपरमानन्दस्य महत्त्वं स्वीकुर्वन्त्येव। महर्षिवेदव्यासस्य कथनानुसारं संसारे यानि लौकिकसुखानि सन्ति, यावच्च दिव्यं महत्सुखं विद्यते, तानि च तृष्णाक्षयसुखस्य षोडशीकलासाम्यमपि न भजन्ते[1]। वेदान्तदेशिकमते भारतीयसांस्कृतिकदृष्ट्या मानवजीवने त्यागेनैव शान्तिः परमानन्दश्च प्राप्यते। अत एव शान्तरसोऽवश्यमेव स्वीकर्तव्यः, शान्तरसो नाभिनेतुं शक्यत इति प्रवादस्तु न समीचीनः। तन्मते शान्तस्याभिनये वर्णने वा न काप्यनुपपत्तिः। प्रतिपादितञ्च तेन सङ्कल्पसूर्योदयनाटके श्रृङ्गाररसोऽसभ्यपरम्पराविष्कारकतया, वीररसः परस्परं वैरभावस्योत्पादकतया, अद्भुतरसो विरुद्धगतितया न विवेचनीयः, अपि तु खिन्नचेतसां पूर्णविश्रामतया, आनन्दप्रदायकतया च शान्तरस एव प्रतिपादनीयः[2]। पूर्वोक्तविवेचनस्य तात्पर्यमिदं यत् सामान्यतः साहित्यजगति शान्तरसोऽपि स्वीक्रियते रसतत्त्वविद्भिरिति।

वात्सल्यरसः

कतिपयप्राचीनविदुषां मते रतिः साम्प्रयोगिकत्वासाम्प्रयोगिकत्वाभ्यां द्विधा वर्तते। तत्र साम्प्रयोगिकरतेरभिव्यक्तौ श्रृङ्गारो रसः, असाम्प्रयोगिकरतेरभिव्यक्तौ प्रेयोनामाऽन्यो रसोऽपि स्वीकृतस्तस्य स्थायीभावः स्नेहो वर्तते। प्रथमस्योदाहरणं शकुन्तलादुष्यन्ताद्यालम्बनको रसः प्रसिद्ध एव। स्नेहस्तु 'सुहृत्प्रेम' एवास्ति। अपरस्य प्रेयोरसस्योदाहरणं रामायणे रामसुग्रीवयोः स्नेहे, अथवा मुद्राराक्षसे राक्षसचन्दनदासयोः सख्ये च स्पष्टम्। तत्र सुहृत्प्रेम्णि साम्प्रयोगिकरतिर्नास्ति, अपि तु ततः सर्वथा विल-

---

१. यच्च काममुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयः सुखस्यैते नार्हतः षोडशीकलाम्॥
महाभारते शान्तिपर्वणि १७४।४७ तथा च वायुपुराणे ६३।१०१।

२. असभ्यपरिपाटिकामधिकरोति श्रृङ्गारिता,
परस्परतिरस्कृतिं परिचिनोति वीरायितम्।
विरुद्धगतिरद्भुतस्तदल्पसारैः परैः,
शमस्तु परिशिष्यते शमितचित्तखेदो रसः॥ संकल्पसूर्योदये १।१६
श्रृङ्गारवीरकरुणाद्भुतहास्यभीतिवीभत्सरौद्रविषयानतिवर्तमानः।
तत्त्वावलोकनविभावसमेधितात्मा शान्तो रसः स्फुरति मूर्त इवैषधन्यः॥ तत्रैव

क्षणः प्रेमभावो विद्यते, यस्य पूर्णाभिव्यक्तिः पृथक्रसरूपेण स्वीकार्यः। एवमेव वात्सल्योऽपि साम्प्रयोगिकरतिभावापेक्षया सर्वथा विलक्षणभावोऽस्ति। यस्याभिव्यक्तिर्वात्सल्यरसरूपेण भवति।

यद्यपि सामान्यतः 'अष्टौ नाट्ये रसाः स्मृताः' इत्यादिना नाट्ये भरतमुनिना स्पष्टतयाऽष्टावेव रसाः स्थापिताः, किन्तु तेनैव नाट्यशास्त्रे वात्सल्यरसस्यापि विधानं कृतम्[1]। काव्यप्रकाशकारादिमते पुत्रादिविषयकरतिभावस्याभिव्यक्तिर्भावध्वनिरूपेण भवति, न तु रसध्वनिरूपेण, तेषां मते पुत्रादिविषयकरतिर्वात्सल्यभावमात्रमेव, न तु वात्सल्यरसरूपः। किन्तु अतिशयचमत्कारितया सर्वजनानुभवसिद्धतया च विश्वनाथमते मुनीन्द्रसम्मतो वात्सल्यनामकदशमोऽपि रसो वर्तते[2]।

किन्तु अभिनवगुप्तमतानुसारेण वस्तुतो वात्सल्यं भावमात्रमेव, न तु रसरूपम्[3]। एवमेव हेमचन्द्रानुसारेण वात्सल्यं रतेरेव भेदः, यतो हि अनुत्तमं प्रत्युत्तमस्य या रतिः सा एव वात्सल्यमभिधीयते[4]। प्रोक्तविप्रपतिपत्तौ सत्यामपि विश्वनाथादिमते दशमो वात्सल्यरसः, तस्य च स्थायिभावो वत्सलतारूपस्नेहो विद्यते। केषाञ्चिन्मते तु तस्य करुणः स्थायिभावोऽस्ति[5]। कविकर्णपूरमते तु तस्य स्थायिभावः 'ममाकारो'ऽस्ति। इत्थं च परिदृश्यते वात्सल्यरसस्य स्थायिभावविषये रसतत्त्वविदां विदुषां मतभेदेऽपि दशमरसरूपेण वात्सल्यरसः स्वीकृत एव रसज्ञैरिति नात्र सन्देहलेशोऽपि। वात्सल्यरसस्य पुत्रादिरालम्बनभावः, बालसुलभचेष्टादय उद्दीपनभावाः, आलिङ्गनम्, अङ्गस्पर्शः, शिरश्चुम्बनम्, रोमाञ्चः, आनन्दाद्श्रु इत्यादयोऽनुभावाः, स्तनस्त्रावादयः सात्त्विकभावाः, अनिष्टशङ्का - हर्ष - गर्वादयश्च सञ्चारिभावा भवन्ति विदुषां रसज्ञानां मते[6]।

---

१. तत्र हास्यश्रृङ्गारयोः स्वरितोदात्तैः, वीररौद्राद्भुतेषु उदात्तकम्पितैः। करुणवात्सल्यभयानकेषु अनुदात्तस्वरितकम्पितैर्वर्णैः पाठ्यमुपपादयति।
भरतनाट्यशास्त्रे पृष्ठे १२७, काव्यमालासंस्करणे।

२. स्फुटं चमत्कारितया वत्सलं च रसं विदुः।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्॥ साहित्यदर्पणे ३।२५१

३. बालस्य मातापित्रादौ स्नेहो भये विश्रान्तः, यूनोः मित्रजने रतौ, भ्रातरि धर्मवीर एव। एवं वृद्धस्य पुत्रादावपि द्रष्टव्यम्। अभिनवभारत्याम् १।३४२

४. स्नेहो भक्तिर्वात्सल्यमिति हि रतेरेव विशेषाः··· ···· ···उत्तमस्यानुत्तमे रति वात्सल्यमिति। काव्यानुशासने पृष्ठे ६८।

५. अन्ये तु करुणास्थायी वात्सल्यं दशमोऽपि च। मन्दारमरन्दचम्पूकाव्ये पृ० १०।

६. साहित्यदर्पणे ३।२५१–२५३।

भक्तिरसः

चरमोत्कर्षप्राप्तो भाव एव रसत्वमाप्नोति। भक्तिरसज्ञानां मते भगवद्विषयिणी-रतिरेव पूर्णोत्कर्षत्वं प्राप्य भक्तिरसरूपेण समास्वाद्यते भक्तैः। स च भक्तिरसः प्रकाशमयोऽखण्डः, आनन्दमयश्च विद्यते। अखण्डोऽपि रसः साधनाभेदेनाऽऽनन्दानुभूत्यर्थं खण्ड्यते। सा चाऽऽनन्दानुभूतिश्चित्तस्याद्वैतता एव। यदा चित्तमेकाग्रतया परब्रह्मणि व्यापृतं भवति, तदा तेनाऽऽनन्दः समनुभूयते। स एवाऽऽनन्दो भक्तिभावापन्नसहृदयानां मते भक्तिरसरूपेणाभिव्यज्यते समास्वाद्यते च।

वैष्णवाचार्याणां मते रससाधनायां भक्तिरस एव सर्वप्रधानो रसः। श्रीरूपगोस्वामिमते भक्तिरस एव प्रकृतिरसः, तद्भिन्ना अन्ये रसास्तु विकृतिरूपा एव। विभावानुभावसञ्चारिभिः सहजाता, शुद्धा, स्नेहधारानुकारिणी, भक्तिमहात्म्यबोधजा, प्रेमपरिपक्वा, सात्त्विकभावसम्पन्ना रतिर्भगवतो माहात्म्यबोधेन सह विविधभूमिकाभिर्विकसिता सती यदा भक्तसहृदयानां चेतसि रसतया समास्वाद्यते तदा सा एव भक्तिरस इत्यविधीयते। तस्य च स्थायिभावो भगवद्रतिरिति[1]। भक्तिचन्द्रिकानुसारेणानासङ्गस्य जननी, परापरबोधात् विपरीता, सामरस्यस्योपस्थितिकारिणी, परप्रेमा, परमानन्ददायिनी पराभक्तिरेव रसास्वादनविचक्षणैः सहृदयभगवद्भक्तैः समास्वादिता सती भक्तिरसत्वेन कथ्यते[2]। अपि च तन्मते स एव भक्तिरसो विषयावच्छिन्नचिदानन्दांशभूतलौकिकरसापेक्षया विषयानवच्छिन्नसाध्यतत्त्वमिति। अत एव रसज्ञैः सहृदयैः स एव भक्तिरसः सेव्यः[3]। मुक्ताफलानुसारेण ईश्वरविषयारतिरेव भक्तिरसे विपरिणमते।

---

१. स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः।
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत्॥ भ० र० सिं० २।१।६
सर्वात्मना निमित्तैव स्नेहधारानुकारिणी।
वृत्तिः प्रेमपरिपक्वा भक्तिर्माहात्म्यबोधजा॥ शाण्डिल्यसंहितायाम्

२. परत्रानासङ्गं जनयति रतिर्या नियमतः,
परस्मिन्नेवास्मिन् समरसतया पश्यति इमम्।
परप्रेमाढ्येयं भवति परमानन्दमधुरा,
पराभक्तिः प्रोक्ता रस इति रसास्वादनचणैः॥
भक्तिचद्रिकायाममृतोल्लासे साहित्यसारटीकायाम् पृष्ठे १३०।

३. अतो भगवद्भक्तिरस एव लौकिकरसानुपेक्ष्य परमरसिकैः सेव्यः।
भक्तिचद्रिकायाम् पृ० ८ नारायणतीर्थकृतटीकायाम्, वा० सं० वि० वि०

एवञ्च मुक्ताफले तट्टीकायाञ्च भक्तेः रसत्वं प्रतिपादितम्[१]।

श्रीमधुसूदनस्वामिमते भक्तिरसः स्वतन्त्रो रसोऽस्ति । भक्तिरसायने भक्तिरसस्थापने प्रतिपादितं यदन्यरससदृशा भक्तिरपि स्वविभावादिभिर्युक्ता सती चित्ररूपवद् रसत्वमाप्नोति । वस्तुतो रसस्वरूपसच्चिदानन्दपरमात्मना सम्बद्धा सत्यलौकिकाऽऽनन्दायिनी भगवद्रतिरेव भक्तिरसे परिणमते । कान्तादिविषयकशृङ्गारादिरसेषु पूर्णं सुखं नास्ति । अत एव तत्र पूर्णरसत्वं नानुभूयते । तद्भिन्नो भक्तिरसः पूर्णसुखमयो भवति । अतो लौकिकक्षुद्ररसापेक्षया परिपूर्णरसा भगवद्रतिः खद्योतेषु सूर्यवत् प्रकाशते । अत आनन्दपूर्णभक्तिरसः सततं सर्वैः स्वीकार्यः[२] । भागवतस्य भावार्थदीपिकाकारमतेऽपि भक्तिरस एवमेव प्रतिपादितः[३] । श्रीमधुसूदनस्वामिमते परमानन्दो रसात्मकः परमात्मा एव द्रुतचित्तवृत्तौ प्रतिबिम्बितः स्थायिभावतामासाद्य रसत्वं प्राप्नोति[४] ।

एवञ्च परिदृश्यते भक्तिरसस्य स्थापने न केवलं वैष्णवाचार्याणामेव, अपि तु श्रीमधुसूदनस्वामिश्रीकरपात्रस्वामिप्रभृतीनाममद्वैतपथपथिकानामपि महनीया कीर्तिः समुल्लसति साहित्यजगति । अतो रसजगति प्राणिनां जीवनदायकसूर्यचन्द्रमसाविव भक्तिरसोऽपि एकादशो रसः स्वीकर्त्तव्यः सहृदयैः रसज्ञैः । तस्य परिपोषणे च जीवगोस्वामिकृतभक्तिरसामृतसिन्धोस्टीकायां दुर्गमसङ्गमन्याम्, मुकुन्दस्वामिकृतार्थरत्नाल्पदीपिकायाम्, विश्वनाथचक्रवर्तिकृतभक्तिसारप्रदर्शिन्याम्, श्रीमधुसूदनस्वामिकृतभक्तिरसायने श्रीकरपात्रस्वामिकृतभक्तिरसार्णवे च बहुयुक्तयः प्रतिपादिताः ।

एवं सत्यपि केचन भक्तेः रसत्वं नानुमन्यन्ते । व्यञ्जनावैशिष्ट्यस्य पुरुषार्थस्य चोपयोगित्वेन रत्यादीनां चित्तवृत्तीनामभिव्यञ्जकस्य समास्वादकस्य वाऽभिधानं शृङ्गारादिनवसंख्यकरसपदेन स्वीक्रियते प्राचीनैः, किन्तु कतिपयैराचार्यैस्तदतिरिक्तोऽपि कतिपयचित्तवृत्तेरभिव्यञ्जनमास्वादनं वाभिलष्यते । तेषां मते रससंख्या न केवलं नवैव, अपि तु दशपर्यन्ता एकादशपर्यन्ता वा, किं बहुना ! षोडशपर्यन्ता, ततः परमपि भवति ।

१. भक्तिरसस्यैव हास्यशृङ्गारकरुणरौद्रभयानकबीभत्सशान्ताद्भुतवीरेणानुभवात् व्यासादिभिर्वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरित्रस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो हि भक्तिरसः ॥ मुक्ताफले–पृष्ठे १६४,१६७

२. भक्तिरसायने २।७२ ।

३. रौद्राद्भुतौ च शृङ्गारो हास्यं वीरोदयस्तथा ।
भयानकश्च बीभत्सः शान्तः स प्रेमभक्तिकः ॥ भागवतस्य भावार्थदीपिकायाम्

४. भक्तिरसायने १।१० ।

एवञ्च शृङ्गारादिनवरसातिरिक्ता अन्येऽपि बहवो रसा विभिन्नानामाचार्याणां मते स्थापिताः परिदृश्यन्ते तत्र रुद्रटमते स्नेहस्थायी प्रेयोरसः[1], विश्वनाथमते वत्सलस्थायी वात्सल्यरसः[2], रूपगोस्वामिप्रभृतिभक्ताचार्याणां मते भगवद्रतिस्थायी भक्तिरसो[3] मधुररसो वा, रामचन्द्र-गुणचन्द्रमते गार्ध्यस्थायी लौल्यरसः, आसक्तिस्थायी व्यसनरसः, अरतिस्थायी दुःखरसः, सन्तोषस्थायी सुखरसः[4], भानुदत्तमते मिथ्याज्ञानस्थायी मायारसः[5], भोजराज मते मतिस्थायिभाव उदात्तरसः, गर्वस्थायी उद्धतरसः, हर्षस्थायी आनन्दरसश्च[6] विद्यते। अपि च तन्मते एकोनपञ्चाशदपि भावा विभावादिभिः परमप्रकर्षं प्राप्य रसत्वं प्राप्नुवन्ति[7]। एवञ्च तन्मते यदि परमप्रकर्षं प्राप्ता रत्यादयः रसत्वं गच्छन्ति, तर्हि परमप्रकर्षं गता हर्षादयोऽपि सञ्चारिभावा रसत्वं कथं न गच्छेयुः[8]। राघवन्महोदयानुसारेण जैनानामनुयोगसूत्रे निरुपितो व्रीडास्थायी व्रीडनकरसः स्वीकृतो[9] विद्वद्भिः। अपि च केषाञ्चिन्मते देशभक्ति रसः, मृगयारसः, अक्षरसः, स्वातन्त्र्यरसः, पारवश्यरसः, क्रान्तिरसः, प्रक्षोभरसः प्रशान्तरसः, बाह्यरसाश्चापि विलोक्यन्ते ग्रन्थेषु। एवञ्च परिगणने द्वात्रिंशद्रसा भवन्ति।

यदि चित्तवृत्तेश्चमत्कारजनकत्वेनाऽऽस्वाद्यत्वेन वा पूर्वोक्तरसाः स्वीक्रियन्ते तर्हि सर्वेषां भावुकसहृदयानां भक्तानामनुभवसिद्धस्य चमकत्कारजनकस्याऽऽस्वादयुक्तस्य वा भक्तिरसस्य स्वीकारे न कापि क्षतिः। वस्तुतः परमकल्याणभाजनं केवलं भक्तिरस एव, भक्त्या एव सकारणदुःखहानं निरतिशयसुखावाप्तिरूपो मोक्षश्च प्राप्यते। अचिन्त्यादिगुणगणविशिष्टस्य भगवतः प्राप्त्युपायभूता भक्तिरेव केवला, न त्वन्यत् साधन जगति।

---

१. रौद्रः शान्तः प्रेयानिति मन्तव्या रसाः सर्वे। काव्यालङ्कारे १२।३, १५।७

२. साहित्यदर्पणे ३।२५१।　　३. भक्तिरसामृतसिन्धौ २।५।६५-६८।

४. गार्ध्यं स्थायी लौल्यः, आर्द्रता स्थायी स्नेहः, आसक्तिस्थायी व्यसनम्, अरतिस्थायी दुःखम्, सन्तोषस्थायी सुखमित्यादि। नाट्यदर्पणे पृष्ठे ३०६।

५. प्रबुद्धमिथ्याज्ञानवासना मायारसः।
मिथ्याज्ञानमयस्य स्थायिभावः॥ रसतरङ्गिण्याम् पृष्ठे१६२ तरंगे ७

६. सरस्वतीकण्ठाभरणे पृष्ठे ६६ तथा शृङ्गारप्रकाशे १।११ पृष्ठे ४४१।

७. रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभावव्यभिचारिसंयोगात् परप्रकर्षाधिगमे रसव्यपदेशार्हता रसस्यैव मध्यावस्था। शृङ्गारप्रकाशे पृष्ठे ४४४

८. रत्यादयो यदि रसाः स्युरतिप्रकर्षे हर्षादिभिः किमपराद्धमतद्भिन्नैः।
शृङ्गारप्रकाशे १।११।

९. दी नम्बर आफ रसाज पृष्ठे ११६ तथा १४१, मद्रास १९४०।

संस्कृतसाहित्ये रससंख्याविषये क्रमिकविकासप्रसङ्गे सर्वथा विलक्षणा सरणिर्दृश्यते स्वामिमधुसूदनस्य। तन्मते मूलचित्तद्रुतिः सप्तैव, तेभ्य एव षोडशस्थायिभावाः रसाश्च निष्पद्यन्ते। तेषां भक्तिरसायनग्रन्थानुसारेण निम्नाङ्किता रससंख्यासरणिर्निरूप्यते। यथा—

| मूलचित्तद्रुतिः | | तत्सम्बन्धितस्थायिभावाः | | रसाः | |
|---|---|---|---|---|---|
| १—कामः | २।३ | १—रतिः | २।४ | १—शृङ्गाररसः | २।३१—३३ |
| २—क्रोधः | २।५ | २—ईर्ष्याजन्यद्वेषः | २।२६ | २—शुद्धरौद्ररसः | २।३० |
| क्रोधः | २।५ | ३—भयजन्यद्वेषः | २।२६ | ३—रौद्रभयानकरसः | २।३० |
| क्रोधः | २।५ | ४—भयरतिः | २।८ | ४—प्रीतिभयानकरसः | २।३१—३३ |
| ३—स्नेहः | २।६ | ५—वत्सलरतिः | २।११ | ५—वात्सल्परसः | २।३४—५५ |
| स्नेहः | २।६ | ६—प्रेयो रतिः | २।११ | ६—प्रेयान्‌रसः | २।३४—५५ |
| ४—हर्षः | २।१२ | ७—शुद्धारतिः | ३।१३ | ७—विशुद्धभक्तिरसः | २।३४—३५ |
| हर्षः | २।१२ | ८—हासः | २।१४ | ८—हास्यरसः | २।३१—३३ |
| हर्षः | २।१२ | ९—विस्मयः | २।१५ | ९—अद्‌भुतरसः | २।३१—३३ |
| हर्षः | २।१२ | १०—युद्धोत्साहः | २।१६ | १ —युद्धवीररसः | २।३१—३३ |
| ५—शोकः | २।१७ | ११—शोकः | २।१७ | ११—करुणरसः | २।३१—३३ |
| ६—दया | २।१८ | १२—जुगुप्सा | २।१८—२० | १२—वीभत्सरसः | २।२७—२८ |
| दया | २।१८ | १३—दयोत्साहः | २।२१ | १३—दयावीररसः | २।२७—२८ |
| दया | २।१८ | १४—दानोत्साहः | २।२२ | १४—दानवीररसः | २।३१—३३ |
| दया | २ १८ | १५—धर्मोत्साहः | २।२३ | १५—धर्मवीररसः | २।२७—२८ |
| ७—शमः | २।२४ | १६—शमः | २।२४ | १६—शान्तरसः | २।२७—२८ |

रससंख्यावृद्धिविषये विचारणीयोऽयं विषयो यत् प्रोक्तानां सर्वेषां रसानां सम्बन्धो मनुष्यस्य प्रवृत्तिभिः सह, तज्जन्यभावात्मकगुणैश्च सह भवति। सामान्यतो मनुष्येषु पलायनम्, संघर्षणम्, दूरीकरणम्, वात्सल्यरक्षणम्, प्रजननम्, सामाजिकता, भोजनोपार्जनम्, प्राप्तिः, निर्माणम्, हास्यादयश्च प्रकृतयो भवन्ति। तेभ्यः क्रमशो भयम्, क्रोधः, घृणा, स्नेहादिकोमलभावः, दुःखम्, कामः, कौतुहलम्, दैन्यम्, आत्मश्रेष्ठता, मिलनेच्छा, क्षुधा, स्वत्वस्थापनम्, निर्माणोत्साहः, प्रसन्नतादयश्च भावात्मकगुणाः समुत्पद्यन्ते।

यद्यपि प्रोक्तसर्वप्रवृत्तीनाम्, ताभिः सम्बद्धसर्वभावात्मकगुणानाञ्च परम्परया स्वीकृतेषु शृङ्गारादिनवरसेषु तेषां सञ्चारिभावेषु चान्तर्भावः कर्तुं शक्यते, किन्तु मानवजीवनस्य विविधतया स्वभावस्य विचित्रतया च मनुष्यस्य भावानां न कापि सीमा स्थाप्यते अत एव नवरसेतररसानामुद्भावना कपोलकल्पिता निरर्थिका वा वदितुं न शक्यते। मनुष्याणां नवोद्घाटितभावैः सह सम्बद्धप्रचुरकाव्यकलात्मकस्य व्यञ्जनानुरूपनूतनरसानामुद्भावना सर्वथा स्वाभाविकी, समीचीना, अपरिहार्या च वर्तते।

अपरञ्च विचारणीयमिदं तथ्यं यत् देशकालादिभेदेन साहित्यमपि विविधमभूत्। तस्य विविधता च न केवलं गद्यपद्यभेदष्वेव लक्ष्यते, अपि तु विषयचयनस्य जीवनस्य च साहित्यिकावतरणेष्वपि विभिन्नता परिलक्ष्यते। अत एव साहित्ये प्रयुक्ताऽऽलम्बनानां स्वरूपमपि परिवर्तते। अत एव देशकालादिभेदेन रससंख्या वृद्धिर्गता, अग्रेऽपि गमिष्यत्येव, न तु न्यूनत्वमेष्यति।

## मूलरसस्य परिकल्पना

सर्वेषां रसप्रतिष्ठापकानां महामनीषिणामाचार्याणां मते रसस्तु स्वयंप्रकाशस्वरूपः, अखण्डानन्दात्मकः, सच्चिदानन्दचित्स्वरूप एव विद्यते। स चाखण्डोऽभेद्यः पूर्णश्च। वेदान्तेषु यः परमात्मा विभुपरमाक्षरसनातनाजश्चैतन्यज्योतिरीश्वरादिपदैरभिधीयते, स एव परमात्मा दार्शनिकतत्त्वज्ञैः परमरसिकैः सहजाभिव्यक्त आनन्दरूपश्चैतन्यचमत्काररूपोऽभिव्यक्तो रसः[1]। 'न हि रसादृते कश्चिदप्यर्थः प्रवर्तते' इति भरतवाक्येनापि परिज्ञायते सर्वेष्वानन्दप्रदार्थेषु रस एव मुख्योऽस्तीति। स चाभिनवगुप्तमते प्रोक्तवाक्ये 'रसाद्' इत्येकवचनस्य प्रयुक्तत्वात् परमार्थतोऽखण्डात्मक आनन्दस्वरूपात्मकश्चैतन्यचमत्कारयुक्त एव[2] विद्यते। एवमेव कविकर्णपूरमतानुसारेणापि आनन्दरूपात्मकं रसतत्त्वमखण्डैकरूपात्मकमेवास्ति[3]। तन्मते शृङ्गारादयो रसास्तु तस्योपाधिरूपा एव। एवञ्च तन्मते न केवलं रस एव खण्डरूपात्मकोऽपि तु स्थायिभावोऽप्यखण्डैकात्मक एव, तस्यैवोपाधिभेदा नानारूपा रत्यादयो भवन्ति[4]।

---

१. अग्निपुराणे ३३६।१।२। २. एक एव तावत्परमार्थतो रसः सूत्रस्थानीयत्वेन रूपके प्रतिभाति। तस्यैव पुनर्भागदशा विभागः।
अभिनवभारत्याम् पृष्ठे ४४२।

३. रसस्याऽऽनन्दधर्मत्वादैक्यं भाव एव हि।
उपाधिभेदान्नानात्वं रत्यादय उपाधयः॥ अलङ्कारकौस्तुभे पृष्ठे १०६

४. आनन्दाङ्कुरकन्दोऽस्ति धर्मः कश्चन चेतसः।
रजस्तमोभ्यां हीनस्य शुद्धसत्त्वतया सतः॥
स स्थायी कथ्यते विज्ञैर्विभावस्य पृथक्तया।
पृथग्विधत्वं यात्येष सामाजिकतया सताम्॥ अलंकारकौस्तुभे पृष्ठे १०

## शान्तरस एव मूलरसः

रसशास्त्रप्रतिष्ठापकस्य श्रीभरतमुनेर्मते शान्तरस[1] एव मूलरसो विद्यते। रत्यादयो भावास्तस्यैव विकाराः सन्ति। तस्मादेव स्वं स्वं निमित्तमासाद्य सर्वे रत्यादयो भावाः प्रवर्तन्ते, पुनः निमित्तापाये 'नैमित्तिकस्याप्यपायः' इति न्यायेन निमित्तभूता रत्यादयस्तत्रैव विलीयन्ते। अतस्तन्मते वस्तुतः शान्तरस एव मूलरसः, शृङ्गारादयस्तु तस्यैव विकृतयः, उपाधिजन्या वा सन्ति[2]। एवमेवाभिनवगुप्तमतेऽपि प्रायः सर्वरसेषु विषयेभ्यो विपरिवृत्त्या शान्तरस एव सहृदयैः समास्वाद्यते। अतस्तन्मतेऽपि शान्तरस एव मूलरसो विद्यते[3]।

## शृङ्गाररस एव मूलरसः

अग्निपुराणकारमतानुसारं यः परमात्मा वेदान्तशास्त्रेषु अक्षर-विभु-सनातनाजज्योतिष्स्वरूपश्चाप्यभिधीयते, तस्यैवाभिव्यक्तः सहजानन्दचमत्कारपरिप्लावितश्चैतन्य एक रसतया कथ्यते तत्त्वज्ञैः। तस्य परमात्मन आद्यविकारोऽहङ्कारो जातः, तस्मादभिमानः, तस्माच्च रतिः समुद्भूता, सा एव रतिः स्वविभावादिभिः परिपुष्टा सती शृङ्गाररसे विपरिणमते। अतः रतिस्थायी शृङ्गाररस एव सर्वरसेषु मुख्यो विद्यते। हास्यादयस्तु तस्यैव विकाराः[4]। एवमेव पुरुषार्थचतुष्टये कारणभूतत्वाद् शृङ्गाररस एव भोजराजमते मूलरसः, वीरादयस्तु मिथ्यारसप्रवादा[5] एव। अपि च तन्मते वीरादयः सहृदयसामा-

---

१. अध्यात्मध्यानसमुत्थस्तत्त्वज्ञानार्थहेतुसंयुक्तः।
नैःश्रेयसोपदिष्टः शान्तरसो नाम संभवति॥
भारतनाट्यशास्त्रे ६।८३ मधुसूदनशास्त्रिसम्पादिते

२. भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते॥
स्वं स्वं निमित्तमासाद्य शान्ताद् भाव प्रवर्त्तते।
पुनर्निमित्तापाये च शान्त एवोपलीयते॥
—भरतनाट्यशास्त्रे ६।३३५–३३६, गायकवाडप्रथमसंस्करणे

३. तत्र सर्वरसानां शान्तप्राय एवास्वादः, विषयेभ्यो विपरिवृत्त्या।
अभिनवभारत्याम् अध्याये ६ पृष्ठे ६६५।

४. अग्निपुराणे ३३९।१–६।

५. वीरादयो मिथ्या रसप्रवादाः,
शृङ्गार एवैकश्चतुर्वर्गैककारणं रसः।
आम्नासिषुर्दशरसान् सुधियो वयं तु,
शृङ्गारमेव रसनाद् रसमामनामः॥ शृङ्गारप्रकाशे १।६

जिकभावनाभाविता एव, किन्तु भावनातीतः 'अहङ्कार' रूपशृङ्गाररस एव रसज्ञैः परमानन्दतया समनुभूयते, स एव कूटस्थं ब्रह्मेति कथ्यते वेदविदां वरिष्ठैस्तत्त्वज्ञैः[1] । तन्मते यद्यपि द्वादशरसाः परिकल्पितास्तथा व्यभिचारिणोऽपि रसरूपतया स्वीकृताः, किन्तु तस्य शृङ्गाररस एव विशेषपक्षपातो विलोक्यते ।

## अद्भुतरस एव मूलरसः

साहित्यदर्पणानुसारं नारायणमते 'लोकोत्तरचमत्कार एव रसस्य प्राणः' इति रससिद्धान्तरीत्याऽत्यधिकच्चमत्कारयुक्तः (विस्मयाविष्टः) अद्भुतरस एव सर्वरसेषु प्रधानरसो[2] वर्तते । रसज्ञानां मते शृङ्गारकरुणादिषु चित्तद्रुतिस्तथा वीररौद्रादिषु चित्तदीप्तिः वस्तुतश्चमत्कारविशेष एव, अथवा लोकोत्तरचमत्कारस्य (विस्मयस्य) स्वस्वभावपरिस्पन्द एवास्ति । एवञ्च सर्वेषु रसास्वादेषु विस्मयस्यैवानुप्राणितत्वेन श्रीनारायणमतेऽद्भुतरस एव समस्तरसेष्वनुप्रविष्टः, अन्तर्व्याप्तः, अन्तर्नियामकस्तत्रापि सर्वस्वं चास्ति । सम्भाव्यते यत् प्रोक्तविचारप्रभावितेन भानुदत्तेनापि शृङ्गारादिरसानामानन्दजन्यचमत्कारेषु चित्तविस्तृतिरथवा विस्मय एव प्राधान्येन स्वीकृतः । अत एव भानुदत्तमतेऽपि प्रधानतयाऽद्भुतरसः मूलरसो वर्तते[3] । एवञ्चाद्भुतदर्पणकारमहादेवस्य 'यत्सत्यमभितः' इति सूक्तिर्नारायणस्याऽद्भुतरसं समुद्भावयतीति प्रतीयते[4] ।

---

१. आभावनोदयमनन्यधिया जनेन,
यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्तमानः,
साहङ्कृतौ हृदि परं स्वदते रसोऽसौ ॥

२. रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥
तस्मादद्भुतमेवाह कृती नारायणो रसः । साहित्यदर्पणे ३ परिच्छेदे

३. शृङ्गारादौ चमत्कारदर्शनात् यत्र मनो विस्तृतिरङ्गतया भासते तत्र शृङ्गारादयो रसाः । प्राधान्येन यत्र भासते तत्राद्भुत एव रसः ।
रसतरङ्गिण्याम् १ अध्याये, पृष्ठे २८ ।

४. यत्सत्यमभितः स्तब्धैरिन्द्रियैरिन्द्रजालवत् ।
अद्भुतैकरसावृत्तिरन्तर्मीलयतीव माम् ॥ अद्भुतदर्पणे ४।८ काव्यमालासंस्करणे

**करुणरस एव मूलरसः**

उत्तररामचरितकारभवभूतिमते 'एको रसः करुण एव निमित्तभेदात्'[1] इति वचनानुसारेण करुणरस एव मूलरसः, अन्ये शृङ्गारादयस्तु तस्यैव विकारा वर्तन्ते, अर्थात् यथाऽऽवर्ततरङ्गबुद्बुदा जलादेव जायन्ते, तत्रैव विलीयन्ते, तत्त्वतस्ते जलस्वरूपमेव, नान्यत् किञ्चित् रूपेण तथैव शृङ्गारादयो रसा आदिमध्यावसानेषु विभिन्नरूपत्वेन प्रतीयमाना अपि तत्त्वतः करुणरसरूपात्मका एव सन्ति, न त्वन्यत्। अन्ये रसा जलस्याऽऽवर्ततरङ्गबुद्बुदा इव करुणरसस्यैव विकाराः सन्ति, नान्यत्। 'एको रसः' इतिश्लोकस्य व्याख्यायां वीरराघवाचार्येणापि प्रतिपादितं यद्यपि शृङ्गारप्रकाशकारादिमते शृङ्गाररस एव प्रधानरसः, किन्तु भवभूतिमते करुण एव मुख्यो रसः, अन्ये तु तस्यैव विकारमात्रमिति[2]।

आदिमहाकाव्ये महाकविना वाल्मीकिनापि करुणरसस्यैव प्राधान्यं प्रतिपादितम्, तस्मादेव तत्र महाकाव्येऽन्ये रसाः समुद्भूताः।

**प्रेमैव मूलरसः**

अलङ्कारकौस्तुभकारकविकर्णपूरमते प्रेमैव मूलरसो वर्तते। तत्रैव सर्वे रसाः समावेश्यन्ते[3]। तन्मते प्रेमरसार्णवे सर्वे शृङ्गारादयः रसा भावाश्च जलतरङ्गा इवोन्मज्जन्ति निमज्जन्ति च[4]। एवमेव प्रेमरसायनकारविश्वनाथमतेऽपि सर्वरसस्य कारणं प्रेमैव, अत एव प्रेमैव मूलरसो वर्तते[5]।

---

१. एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्–
अम्भो यथा सलिलमेव तु तत्समस्तम्॥ उत्तररामचरिते ३।४७

२. यद्यपि शृङ्गार एव एकोरस इति शृङ्गारप्रकाशकारादिमतं तथापि प्राचुर्याद् रागिविरागिसाधारण्यात् करुण एक एव रसः, अन्ये तु तद्विकृतमयः। उ० रा० च० ३।४७ वीरराघवाचार्यकृतव्याख्यायाम्।

३. प्रेमरसे सर्वे रसा अन्तर्भवन्तीत्यत्र महीयानेव प्रपञ्चः। अ० कौ० पृ० १३५।

४. उन्मज्जन्ति निमज्जन्ति प्रेम्ण्यखण्डरसत्वतः।
सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ॥ अलङ्कारकौस्तुभे पृष्ठे १३५

५. रसमात्रस्फुटीभावे हेतुः प्रेम निगद्यते॥ प्रेमरसायने २।१२२।

## भक्तिरेव मूलरसः

भक्तिरसाचार्याणां श्रीरूपगोस्वामिमधुसूदनस्वामिनां मते 'रसो वै सः' इत्यादि-श्रुतिस्वारस्येण भक्तिरेव मूलरसः, यतो हि श्रुत्यादिप्रतिपादितः परमरसस्वरूपः परमात्मा एव, अतस्तद्गता एव रत्यादयः सर्वे भावाश्च रसत्वं प्राप्नुवन्ति। तस्मात् परमात्मनः सम्बन्धेन भक्तिरेव मूलरसः, तेन भक्तेः सम्बन्धाद् शृङ्गारादयोऽपि रसत्वमाप्नुवन्ति। एवञ्च भक्तिसम्बन्धविरहिताः शृङ्गारादयो लौकिकविषयावच्छिन्नत्वात् परिमितत्वाच्च न पूर्णरसत्वं प्राप्नुवन्ति, अपितु ते तदा रसाभासमात्रतामेव लभन्ते, गौणत्वं वा। स च भक्तिरसो मुख्यगौणभेदेन श्रीरूपगोस्वामि-जीवगोस्वामि-मधुसूदन-स्वामिप्रभृतिरसाचार्याणां मते द्वादशभेदात्मको वर्तते, किन्तु सर्वेषां मूलं भक्तिरस एव वर्तते। स एव भक्तिरसज्ञानां मते रसराडिति कथ्यते।

रस्यते आस्वाद्यते इति रसनरूपधर्मावच्छिन्नत्वात् सामान्यतो रसोऽखण्ड एव सिध्यति तथापि चित्तवृत्तिवैचित्र्यात् शृङ्गारादिप्रभेदा अपि भवन्ति तस्य। येषां मते 'रत्याद्यवच्छिन्नाभग्नावरणाचिदेव रसः' तत्रैक एव चिद्रसः स्थायिभेदेन भिन्नतामाप्नोति। तत्र शृङ्गारादीनां मूलरसत्वं न भवति। येषां मते 'चिद्विशिष्टो रत्यादिः स्थायीभावो रसः' इति, तत्र भगवद्रतिविशिष्टस्य भक्तिरसस्याखण्डत्वं सर्वमूलत्वं वा सिध्यति। एतत् सर्वं प्रतिपादितं विशदतया भक्तिरसामृतसिन्धौ भक्तिरसायने भक्तिरसार्णवे श्रीरूपगोस्वामि मधुसूदनस्वामि-करपात्रस्वामिमहोदयैश्च।

## काव्यशास्त्रे भक्तिरसस्य विकासक्रमः

भारतीयसंस्कृतसाहित्ये काव्यशास्त्रविद्भिर्भक्तिरसः शुद्धस्वतन्त्ररूपेण न स्वीक्रियते। संस्कृतकाव्यशास्त्रदृष्ट्या रसस्य प्रथमविचारको भरतमुनिरस्मिन् विषये सर्वथा मौनमवलम्बते। तेन तु भक्तेः रसत्वं भावत्वं वा किमपि न स्वीकृतम्। अनुमीयते ऋषिः मुख्यतयाभिनेयस्य विचारकः, तस्मिन् काले भक्तियुक्ताभिनेयस्य साहित्यस्य दौर्लभ्यं भवेत्। मन्ये यो नाट्यविषयः स एव भरतस्य मुख्य विषयो भवेत्। अस्तु तावत् पुराणे यत्र तत्र विस्तृतोऽपि भक्तिविषयः, ऋषिप्रणीते नाट्यशास्त्रे न विवेचितः। आद्यरसाचार्येण भरतमुनिना शृङ्गारादयोऽष्टौ नव वा रसाः स्वीकृताः, तत्रापि शान्तरसस्य प्राधान्यम्। यतो हि सर्वे शृङ्गारादिरसाः स्वस्वनिमित्तमादाय शान्तरसादेव समुद्भवन्ति, पुनः निमित्तापाये तत्रैव सर्वे विलीयन्ते[1]। शान्तरसप्रसङ्गे 'ईश्वरप्रणिधानविषय भक्तिश्रद्धे[2] इत्याद्यभिनवभारत्यनुसारेण भरतमुनिमते निराकारोपासनाया:

१. भरतनाट्यशास्त्रे ६।५, अभिनवभारत्यां पृष्ठे ६३७।

२. अभिनवभारत्यां पृष्ठे ६३६। ३. काव्यालङ्कारे ३।५।

साकारोपासनायाश्च साक्षात् सच्चिदानन्दो ब्रह्मैवालम्बनं वर्तते। अतो भक्तिज्ञानयोश्च शान्तरसे एवान्तर्भावः कर्त्तव्यः।

भरतस्य पश्चाद् भामहेन वर्तमानसमुपलब्धकाव्यशास्त्रग्रन्थेषु सर्वप्रथमं प्रेयोनामकोऽलङ्कारो लक्षणं विनैव 'प्रेयो गृहागतं कृष्णमवादीद् विदुरो यथा' इत्यादिविलिख्य—

अद्य या मम गोविन्द जाता त्वयि गृहागते।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः[१]॥

इत्युदाहरणं प्रदत्तम्।

कालान्तरे तु संस्कृतकाव्यकोविदैः पूर्वकालात् सर्वमतेभ्यः शृङ्गारादिनवरसेभ्योऽतिरिक्तानां[२] प्रेयो-भक्ति-वात्सल्यादिरसानामपि गणना कृता। किन्तु प्रमुखा आचार्या भक्तिरसं शुद्धस्वतन्त्ररूपेण न स्वीकुर्वन्ति। तत्र भामहात्पश्चाद् दण्डिना परमात्मविषयिका या परमप्रीतिः सैव भक्तिरिति[३] समुद्भावितम्। किन्तु तेनापि भक्ती रसरूपेण न प्रोक्ता किन्तु भावरूपेणैव स्वीकृता। तेन काव्यादर्शे स्वसिद्धान्तानुसारेण 'प्रीतिः प्रेयोऽलङ्कारे निक्षिप्ता, किं बहुना सर्वे रसा अपि रसवदलङ्कारेष्वेव स्थापितास्तेन। अर्थात् सर्वं भावात्मकं वस्तु तेनालङ्कार एव गणितम्। तन्मतमलङ्काराद्भिन्नं किमपि नास्तीति। तन्मतानुसारेण काव्ये यत् प्रियतरानुभूतेराख्यापनं प्रकाशनं वा वर्तते तदेव प्रेय इति[४]। प्रतीयते या लौकिकप्रीतिभ्यः काम्येतरत्वेन भगवद्विषयकप्रीतिः सा एव प्रियतरत्वेनोक्ता[५]।

"भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः"[६] इत्यादिदण्डिवाक्यं विलोक्य वी० राघवन्महोदयेन दण्डिमते भक्तिरसस्य कल्पना क्रियते, अथवा दण्डिना स्वीकृते प्रेयोऽलङ्कारे दाम्पत्येतरनिष्ठानां रतीनामपि समावेशः क्रियते। अतो दण्डिना भक्तिरसः स्वीकृत इति राघवन्महोदयस्याभिप्रायः, किन्तु तन्नोचितं प्रतिभाति। यतो हि दण्डिना स्पष्टमेव प्रोक्तम्—

प्राक्प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता[७]। अर्थात् पूर्वं प्रीतिर्निरूपिता, अधुना निरुपिता रतिस्तु शृङ्गारविषया। इत्थं च ज्ञायते रतिर्दाम्पत्यविषयिका भवति, प्रीतिस्तु

---

१. काव्यालंकारे ३।४

२. शृङ्गारः करुणः शान्तो रौद्रो वीरोऽद्भुतस्तथा।
हास्यो भयानकश्चैव वीभत्सश्चेति ते नव॥ रसगङ्गाधरे पृष्ठे १३१

३. भक्तिः भगवद्विषये परमप्रीतिः। काव्यादर्शे

४. प्रेयः प्रियतराख्यानम्। काव्यादर्शे २।२७५

५. प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम्। काव्यादर्शे २।२७६

६. काव्यादर्शे २।२७७। ७. काव्यादर्शे २।२८१।

भगवद्विषयिका । अतस्तयोः सर्वथा भेद एव, नत्वभेदः । संभाव्यते यत् पुराणस्थं स्तोत्रसाहित्यं विलोक्यैव भगवद्विषयिकां प्रीतिं प्रति दण्डिना किञ्चिद् विचारितम्, किन्तु भक्ती रसत्वेन नाङ्गीकृता, अपि तु प्रेयोऽलङ्कारत्वेनैव स्थापिता । तेन भक्तिरसस्यास्वीकारे कारणं निगदितं यद् भरतमुनिमतानुसारेणैव गिरां रसवत्ताऽष्टसु रसेष्वेव परिसीमिता, तस्य लङ्घनं न श्रेयस्करमिति[1] ।

भगवद्विषयिका या प्रीतिः प्रेयोऽलङ्कारे दण्डिना निक्षिप्ता, तस्य प्रेयसः स्थायिभावः प्रीतिः स्वीकृता तेन । कालान्तरे रुद्रटेन प्रेयोऽतिरिक्तरसत्वेन सम्मानितम्, तस्य च स्थायिभावः स्नेहः स्थापितः । एवञ्च दृश्यते संस्कृतकाव्यशास्त्रे प्रथमतो रुद्रटेन 'स्नेहः प्रकृतिः प्रेयान्' इत्युक्त्वा प्रेयो नामको नवीनो रस उद्भावितः, तस्य स्थायिभावश्च स्नेह इति[2] । द्वयोः मित्रयोः परस्पर शुद्धात्मनाऽन्योन्यहृदयाह्लादको निर्व्याजसंलाप एव प्रीतिः शब्देनाभिधीयते[3] । सैव प्रेयः । एवञ्च यथा दण्डिना दाम्पत्येतररतये भगवद्विषयकप्रीत्यपेक्षया प्राधान्यं प्रदत्तम्, तथैव रुद्रटेन दाम्पत्येतररतिभ्यः सुहृद्विषयकप्रीतये प्राधान्यं दत्त्वा तस्य रसत्वं स्वीकृतम् । इत्थं च दृश्यते रुद्रटेनापि स्पष्टतया स्वतन्त्ररूपेण भक्तेः रसत्वं नाङ्गीकृतम् । किन्तु नामान्तरेण स्वीकृतमेव । दण्डिनः पश्चादुद्भटेनापि 'प्रेयः' अलङ्कारतयैव स्वीकृतम्[4] । मम्मटमते तु देवादिविषयिणी रतिर्व्यञ्जितसञ्चारिभावश्च भावमात्रमेव[5] । एवमेव विश्वनाथमते प्रधानसञ्चारिभावः, देवादिविषयिका रतिः, प्रकाशितः स्थायिभावश्च सर्वं भावमात्रमेव[6] ।

---

१. इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् । काव्यादर्श

२. शृङ्गारवीरकरुणबीभत्सभयानकाद्भुता हास्यः ।
रौद्रः शान्तः प्रेयानिति मन्तव्या रसाः सर्वे ॥ रुद्रटकृतकाव्यालङ्कारे १२।३

३. स्नेहप्रकृतिः प्रेयान् सङ्गीतशीलार्यनायको भवति ।
स्नेहस्तु साहचर्यात् प्रकृतेरुपचारसम्बन्धात् ॥
निर्व्याजमनोवृत्तिः सनर्मसद्भावपेशलालापः ।
अन्योन्यं प्रति सुहृदोर्व्यवहारोऽयं मतस्तत्र ॥
प्रस्यन्दिः प्रेमदाश्रुः सुस्निग्धस्फारलोचनालोकः ।
आर्द्रान्तःकरणतया स्नेहपदे भवति सर्वत्र ॥ रुद्रटकृतकाव्यालङ्कारे १५।१७-१९

४. रत्यादिकानां भावानामनुभावादिसूचनैः ।
यत्काव्यं बोध्यते सद्भिस्तत्प्रेयस्तदुदाहृतम् ॥ अलङ्कारसङ्ग्रहे ४।२

५. रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । काव्यप्रकाशे ४।३५

६. सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥ साहित्यदर्पणे ३।२६०

एवमेव जयदेवमतेऽपि देवादिविषयिणी रतिर्भावत्वेनैव[1] निगदिता ।

हेमचन्द्राचार्यमते भक्तिर्भाव एव न तु रसः, यतो हि तन्मते हीनस्योत्तमे या रतिः सा भक्तिः, तस्या आस्वाद्यत्वं तु भाव रूपेणैव, न तु रसत्वेन भवितुमर्हतीति । एवञ्च तन्मते भक्तिस्नेहवात्सल्यानां भावमात्रत्वमेव[2] । यद्यपि शार्ङ्गदेवमते श्रद्धाऽऽर्द्रताभिलाषा-श्चेति त्रयो भावाः समास्वाद्यतामधिगम्य क्रमशो भक्तिस्नेहलौल्याख्या भवन्ति, तथापि श्रद्धाऽऽर्द्रताभिलाषाख्यास्ते भावाः स्थायित्वं न प्राप्नुवन्ति, अत एव ते सञ्चारिण एव कथ्यन्ते । व्यञ्जिभूतास्ते भावा एव निगद्यन्ते, न तु रसाः[3] । भोजराजमते यद्यपि द्वादशरसाः स्वीकृताः, किन्तु तेनापि भक्तिविषये किमपि नोक्तम् । भानुदत्तेन यद्यपि वात्सल्य-लौल्य-कार्पण्यैः सह भक्तिः समुद्भाविता किन्तु पुनस्तेषां भावत्वमेव स्वीकृतम्[4] । एवञ्च दृश्यते साहित्यशास्त्रमर्मज्ञा विद्वांसो भक्तिरसं स्पष्टतया स्वतन्त्ररूपेण न स्वीकुर्वन्ति । स्वीकृतोऽपि कैश्चित्तर्हि नामान्तरेणैव ।

संसारबन्धनविनिर्मुक्तानां भक्तप्रवराणां परमवैष्णवाचार्याणां महनीया कीर्तिर्भक्तेः स्वतन्त्ररूपेण रसत्वस्थापने । तैर्मनोवैज्ञानिकदृष्ट्या शास्त्रीयदृष्ट्या च भक्तिरसो न केवलं परिगणितानां नवरसानां समकक्ष एव, अपि तु सर्वेषु रसेषु श्रेष्ठतमत्वेन निरूपितः । सततं कामिनीकुचकलसविमर्शदक्षाः सहृदयाः कवयो भगवद्भक्तिभावपरिप्लाविताः सन्तः कालान्तरे भक्तरूपेण वतरितवन्तः । तेषामन्यतमो रूपगोस्वामी भक्तिरसामृत-सिन्धुग्रन्थे मधुसूदनसरस्वती च भक्तिरसायने तथाऽन्ये विभिन्नभक्तिशास्त्रे भक्तिरसस्य

---

१. रतिर्देवादिविषया सन्ति च व्यभिचारिणः ।
वेद्यमाना निगद्यन्ते भावाः साहित्यवेदिभिः ।। चन्द्रालोके ६।१४

२. स्नेहो भक्तिर्वात्सल्यमिति रतेरेव विशेषाः । तुल्ययोर्या परस्पर रतिः स स्नेहः । अनुत्तमस्योत्तमे या रतिः प्रसक्तिः सैव भक्तिपदवाच्यः । उत्तमस्यानुत्तमे रतिर्वात्सल्यमिति । एवमादौ च विषये भावस्यैवा-स्वाद्यत्वमिति । काव्यानुशासने पृष्ठे ८८

३. भक्तिं स्नेहं तथा लौल्यं केचिन्त्रीन्मन्वते रसान् ।
श्रद्धाऽऽर्द्रताभिलाषांश्च स्थायिनस्तेषु ते विदुः ।।
तदसदरतिभेदौ हि भक्तिस्नेहौ नृगोचरौ ।
व्यभिचारित्वमनयोः नृनार्योः स्थायिनौ तु तौ ।। संगीतरत्नाकरे पृष्ठे ७३६

४. ननु वात्सल्यं लौल्यं भक्तिः कार्पण्यं वा कथं न रसः । आर्द्रताभिलाष-श्रद्धास्पृहाणां स्थायिभावानां सत्वादिति चेन्न । तेषां व्यभिचारिरत्यात्मकत्वात् । रसतरङ्गिण्याम्-५ तरङ्गे पृष्ठे ६२ ।

तत्त्वदीपकं साङ्गोपाङ्गं विवेचनं कृतवन्तः । भक्तिरसज्ञानुसारेण भक्तेः रसत्वं समुचितम्, न्यायतर्कसम्मतम्, तस्य भक्तिरसस्य सहृदयानामनुभवसिद्धतया च नापलापः कर्तुं शक्यः । भक्तिरसज्ञानां मते भक्तिरसः शृङ्गारादिरसापेक्षया सर्वथा पृथक् वर्तते । यतो हि स भक्तिरसः स्वव्यापकता–सहजता–सर्वजनसुलभता–भावतीव्रता–क्रियाशीलता–विलक्षणता–मधुरता–सार्वत्रिकतादिविभिन्नदृष्ट्या तु सर्वरसेषु सर्वश्रेष्ठतमो रसराजोऽभिधीयते रूपगोस्वामिमते । अत एव स न भावो भवितुमर्हतीति ! एवमेव सेठकन्हैयालालपोद्दारमतेऽपि शृङ्गारादिरसापेक्षया भक्तिरस एव सर्वोपरि सर्वश्रेष्ठो रसोऽस्ति[1] । न केवलमाधुनिकविदुषां मत एव भक्तिरसः सिद्ध्यति, अपि तु प्राचीनानां मतेऽपि अज्ञानावरणरहिताऽऽनन्दस्वरूपचैतन्यसमन्वितो रत्यादिस्थायिभाव एव रसः कथ्यते, तमेव प्राप्य मनुष्याः कृतकृत्या भवन्ति । तदर्थमेव सततं यतन्ते । अत एव सर्वैर्मुमुक्षुभिर्भक्तिरस एव समुपासनीयः[2] ।

केषाञ्चिन्मते भक्तिरसः सर्वेषां नाधिगतविषयः, अत एव स न स्वीकार्य इति कथनं हास्यास्पदमेव । यतो हि यद्यपि स भक्तिरसः सर्वेषु मनुष्येषु वर्तत एव किन्तु तस्य प्रकटनं सहृदयभक्तहृदय एव भवति । यतो हि कस्यापि रसस्यानुभूतिस्तदनुकूलबौद्धिकभूमिकायामेव जायते न तु सर्वत्र । भग्नावरणचिद्रूपा एव भक्ती रसरूपेण प्रकटिता । भक्त्या भगवत्साक्षात्कारे भक्तो मायिकसकलप्रपञ्चरहितः सन् शुद्धबुद्धनित्यस्वरूपे चैतन्ये परमात्मनि स्वेच्छया तिष्ठति । अर्थात् तस्मिन् काले तेन भक्तिरसोऽनुभूयते । सर्वजनानुभूतरस एव यदि रसत्वेनोच्येत चेत्तर्हि तथाकथितरसराजश्शृङ्गारोऽपि शृङ्गारिकविषयविरक्तस्य तत्त्वज्ञानयुक्तभगवद्भक्तस्य मनसि जुगुप्सोत्पादकतया रसत्वं कदापि न लभेत । यदि च तत्र ज्ञानिभक्तापेक्षया प्रवृत्तिमार्गिसामान्यजना एव प्रमाणं तर्हि सकलसच्छास्त्रेभ्यो जलाञ्जलिप्रदानमेव वरम् । तस्माद् भक्तिरसो नापलपनीयः । अत एव सर्वरसज्ञैर्भक्तिरसः स्वीकर्तव्य एव ।

### भक्तिरसस्वरूपम्

यथा स्वभावकठिनं जतुद्रव्यं उष्णतापकाग्न्यादिसंयोगेन जलमिव द्रुतं चीनांशुकशतक्षालितं स्वच्छं भवति । तत्र च निक्षिप्तहिङ्गुलादीनां सर्वतोभावेन स्थिरता च जायते । पुनः काठिन्ये सति यद्वा पुनर्द्रवतायां वा न वर्णविश्लेषो जतुनो वर्णस्य

---

१. संस्कृतसाहित्यस्येतिहासे पृष्ठे ८९-९६ भागे २। तथा "भक्तिरस है या भावमात्र" नामको निबन्धो द्रष्टव्यः सेठमहोदयस्य वेदान्ताङ्ककल्याणपत्रिकायाम्, ११ वर्षे १ खण्डे १ अङ्के वि.सं० १९९३, पृष्ठे ११२ ८९-९८ भाग २

२. अग्निपुराणे ३३९।२ ।

वाञ्छायां सत्यामपि। तथैव सावयवं मध्यमपरिमाणं चित्तमपि काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादिभिर्भगवद्विषयैः तापकैर्गंगाजलप्रवाहवत् द्रुतं चीनांशुकशतक्षालितमिव निर्मलं भवति। तदपगमे पुनः कठिनं जायते। तत्र द्रुते चित्ते वस्तुनो यस्त्वाकारः क्षिप्यते। स एव संस्कार-वासना-भावनादिशब्दैः कथ्यते। द्रवीभावपूर्वकं चित्तस्य विषयाकारता जायते[१]।

यथा तत्तत्प्रतिमाद्याकारसंघटितोदरे मृत्तिकादिपात्रविशेषे पुटपाकयन्त्रादिनिषिक्तं द्रविततामादिस्तत्तदुदरपात्रविशेषाकारं भवति, तथैव रागद्वेषादिना द्रवीभूतं चित्तं नेत्रादिमाध्यमेन यत्रैव घटादिविषये सिक्तं जायते, तत्तद्विषयाकारं निष्पद्यते। यथा वा व्यञ्जकः सूर्याद्यालोकः व्यंग्यस्य (प्रकाश्यस्य वस्तुनः) स्वरूपतां प्राप्नोति तथैव चित्तमपि तत्तद्व्यंग्याकारं जायते। अत एव विषयस्य बाह्याकारवदान्तरोऽपि मनोमयः कश्चनाऽऽकारो भवति। बाह्यस्याभेदेऽपि मनोमयाकारस्य भेदेनैव एकस्यामेव योषिति भार्या, स्वसा, ननान्दा मातेत्यादयो प्रभेदाः दृश्यन्ते। तत्र बाह्यपिण्डस्य विनष्टेऽपि मनोमयपिण्डाकारः तिष्ठति। अत एव स एवाकारः स्थायितया शब्दायते[2]।

यस्मिन् विषये कामादीनामुद्रेकः तस्मिन्नेव विषये द्रवीभावत्वम्। कामाद्यभावे सूर्यादिप्रकाशादिभिः स्वल्पतापकैरिव विषययोगे शैथिल्यमात्रमेव जायते। तत्र वासनात्मकतया वस्तुसन्निवेशो भवितुं योग्यो न भवति। किन्तु द्रवीते प्रविष्टः वस्त्वाकारः काठिन्यदशापर्यन्तं स्थितः सन् पुनः द्रवीभावान्तरेण विषयान्तरे गृह्यमाणोऽपि प्रकाशमानत्वात् चेत त्यक्तुं न शक्यते। शैथिल्यदशायां तु न प्रविशति। प्रविष्टोऽपि त्यज्यते। अत एव वासनाभावादिशब्दैस्तद्व्यपदेशः। द्रवावस्थाप्रविष्टाविषयाकारस्यानपायित्वेन स्थायिभावेन तस्य प्रयोगो भवति। विभावादिसंयोगेन प्रकटीभूत-स्थायिभाव एव श्रोतृवर्ण्ययोर्दर्शकाभिनेययोर्वा भेदतिरोधानेन दर्शकश्रोतृगत एव सन् परमानन्दसाक्षात्कारेण रसत्वं प्राप्नोति[३]। अपि च परमानन्दः रसस्वरूपः परमात्मा एव द्रवितचित्तवृत्तौ प्रतिबिम्बितस्थायिभावतामासाद्य रसत्वमेति[४]। अत एव भक्तिरसः परमानन्दस्वरूप एव सिध्यति।

नन्वेवं भगवदाकारस्य परमानन्दस्वरूपस्य भक्तिरसस्य स्थायिभाववत्तया परमानन्दरूपत्वं भवेत् किन्तु कान्तादिविषयाणां शृङ्गारादिरसानां तदाकारस्य सुखरूपत्वाभावात् कथं सुखरूपत्वं स्यादिति चेन्न ! 'आनन्दाद्ध्येव खल्विमानि भूतानि

१. भक्तिरसायने १।४-८। २. भक्तिरसायने १।११-१२, २७-२८।
३. भक्तिरसायने १।६। ४. भक्तिरसायने १।१०।

जायन्ते, आनन्देन जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्या परमानन्दस्वरूपस्य ब्रह्मण एव सर्वेषां पदार्थानामुपादानत्वात् मृत्तिकाऽभिन्नघटवत् सर्वस्यैव प्रपञ्चस्य परमानन्दरूपत्वेन कान्ताद्याकारस्यापि सुखरूपतया दोषरहितत्वात्। अपि च 'जन्माद्यस्य[1] यतः', 'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'इदं[2] सर्वं यदयमात्मा' 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिसूत्रैः कार्यस्योपादानाभिन्नत्वं प्रतिपादितम्। न च सम्पूर्णलौकिकप्रञ्चस्याखण्डानन्दरूपेण भानं स्यादिति वाच्यम्? सत्यप्यखण्डानन्दत्वेऽविद्यानिमित्तावरणविक्षेपाभ्यां कार्याकारतया भानेन पूर्णानन्दस्य परमात्मनोऽभानात् (विक्षेपस्तु अकार्यस्यापि कार्याकारेण भानं, अखण्डानन्दाकारेण स्वतोऽभानमावरणम्)

ननु कथं तर्हि परमानन्दस्वरूपस्य ब्रह्मणो भानं भवतीति चेन्न? अज्ञातस्य ज्ञापकत्वेनैव सर्वेषां प्रमाणानां प्रामाण्यम्, अज्ञातं च स्वप्रकाशतया भासमानचैतन्यमेव न तु जडम्, यतो हि जडस्य भानाप्रसक्त्या तत्रावरणकृत्याभावतयाऽज्ञातत्त्वासंभावात्। स्वप्रकाशतया भासमानचैतन्यस्यैवावृतत्त्वाभ्युपगमेन सत्त्वस्थतया कान्ताद्याकारया प्रमाणवृत्त्या तदावरणभङ्गेन कान्ताद्यवच्छिन्नचैतन्यस्य स्वप्रकाशसुखरूपत्वेन भानोपपत्तेः। अनवच्छिन्नचैतन्यस्वरूपमाभानादेव न सद्यो मुक्तिः, स्वप्रकाशत्वभंगो वा। कान्ताद्यवच्छिन्नचैतन्यमेव द्रवावस्थासात्त्विकमनोवृत्युपारुढतया भावत्वं प्राप्य रसतां प्राप्नोतीति न लौकिकरसस्यापि परमानन्दस्वरूपत्वापत्तिरित्यादिसर्वं प्रपञ्चितं भक्तिरसायने श्रीमधुसूदनस्वामिना। अत एवानवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणाद् भक्तिरसे आनन्दस्यात्यन्ताधिक्यं वर्तते। लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात् तत्राऽऽनन्दस्य न्यूनत्वमेव भवति। अत आनन्दाधिक्यात् शृङ्गारादिलौकिकरसानुपेक्ष्य भक्तिरस एव समुपास्यो रसज्ञैः।

इत्थं प्रथमं भगवद्विषयकरतिरूपः स्थायिभावो विभावैरङ्कुरितः, अनुभावैः पल्लवितः, व्यभिचारिभिश्च परिपुष्टः पुष्पितः स्फुटतया रसत्वमेति। अत एव विभावादित्रितयसम्पृक्तस्थायिभावावगाहिसमूहालम्बनात्मकसात्त्विकमभिव्यक्तसुखरूपो भक्तिरसः। तादृशस्य सुखरूपत्वात्तस्य चाऽऽत्मस्वरूपत्वात् यद्यप्याधारो नास्ति तथापि तद्व्यञ्जिकाया वृत्तेः सामाजिकमनोनिष्ठत्वव्यपदेशः।

---

१. ब्रह्मसूत्रे १।१।२ तथा २।१।१४

२. बृहदारण्यकोपनिषदि २।४।६

# भक्तिरसस्थापनस्याऽऽवश्यकता

आद्यरसाचार्येण भरतमुनिना केवलं शृङ्गारादयोऽष्टावेव रसाः स्वीकृताः, किन्तु पश्चाद्भवा आचार्याः 'शान्तोऽपि नवमो रसः' इत्यादिना नवरसानामामनन्ति। मुनीन्द्रमतानुसारेण वात्सल्यरसोऽपि यथाकथञ्चित् काव्यजगति स्वस्थानं गृह्णात्येव। एवमेव भक्तिक्षेत्रेऽपि भक्तिरसोऽपि स्वीकृतो भवेत्, कालान्तरे च तस्य स्वीकृतिः काव्यजगति भवेत्, किन्तु केवलं भक्तिरसविषये न तथा कृतम्। अपि चालङ्कार-विषयेऽपि भरतमुनिना केवलं चत्वार एवालङ्काराः स्वीकृताः, किन्तु अधुनाऽलङ्करणरूपलक्षणेन काव्यशोभाधायकत्वरूपधर्मेण चालङ्कारा वैविध्यं लभन्ते। एवञ्च यथा ये रसा अलङ्काराश्च भरतमुनिना असम्मतास्तेऽपि विभिन्नाचार्यैः पल्लविताः स्वीकृताश्च तथैव रसनमथवाऽऽस्वादनादिरूपसामान्यधर्मेण भक्तिरसोऽपि स्वीकर्त्तव्य एव, किन्तु न तथा कृतं रसशास्त्रविद्भिः। यतो हि तेषां मते रसनिष्पत्तिविषये यत् सामान्यरूपमभिनवगुप्तादिना विहितं, तत् भक्तिरसविषये पूर्णरूपेण चरितार्थो न भवति। न च तेन भक्तिरसविषयककाव्यस्य समालोचना एव भवितुमर्हतीति। अतो रसशास्त्रविद्भिर्भक्तिरसो न स्वीकृतः। तस्मात् कारणाद् भक्तिशास्त्रनिर्मातृभिर्भक्तिरसज्ञैः भगवद्भक्तैः साधकैर्भक्तिरस आविष्कृतः।

अभिनवगुप्तानुसारं रसास्वादनकाले समस्तलौकिकचित्तवृत्तीनां विलयः प्रधानना-यकस्य चित्तवृत्तौ जायते, प्रधाननायकस्य चित्तवृत्तिस्तु साधारणीकरणप्रक्रियया स्वस्मिन् समस्तसहृदयानां चित्तवृत्तिं क्रोडीकुर्वती ( आत्मसात् कुर्वाणा ) रसास्वादस्य हेतुता-मुपैति। तस्मिन् काले समस्तविभावादिभावाः तिरोहिताः सन्तः साधारणीकृतभावमात्र-मेवावशिष्यते। तदानीं सहृदयस्य चित्तवृत्तेर्बहिर्गामिता विनश्यति, तथा च तदानीं प्रधाननायकस्य चित्तवृत्तिरेवावशिष्यते। इत्थं च साधारणीकरणं संविद्विश्रान्तिश्च रसा-स्वादनेऽत्यन्तमुपयुज्येत इति स्थापितमभिनवगुप्ताचार्येण। किन्तु इयं प्रक्रिया भक्ति-रसास्वादनोपयोगिनी नास्ति। तया भक्तिरसो नानुभूयते।

भक्तिमार्गे तु कृष्णलीलाया आनन्दोऽनुभूयते। तत्र राधाकृष्णस्य रतिरूपेऽथवा यशोदाया वात्सल्यरूपेऽस्माकं मनसः परिणतिर्न भवति, किन्तु तत्र भगवद्विषयकरतिरेव जागर्ति। तत्र प्रधाननायकस्य चित्तवृत्तिरस्माकं चित्तवृत्तिं नाऽऽत्मसात् करोति, किन्तु सा केवलमस्माकं भगवद्विषयकरतिमुद्दीपयति। तत्र राधाकृष्णस्य सीतारामस्य वा स्वरूपप्रच्छादने भक्तकवीनां नाभिप्रायः, किन्तु तस्य प्रबोधनमात्रमेवाभिप्रायो वर्तते। अत एव यावदेव वयं राधां प्रति कृष्णस्य रतेः परिशीलनं कुर्मः, तावत्कालपर्यन्तमेव भक्तिरस्माकमुद्दीप्यते। एवञ्च भक्तिमार्गे वयममिश्रितभावनाया आस्वादनं न कुर्मः,

किन्तु कृष्णस्य भक्तिभावनया मिश्रितो भक्तिभावा एवाऽऽस्वाद्यते। इयं प्रक्रिया रसशास्त्रप्रतिपादकानां रसनिष्पत्तिविषयकसिद्धान्तात् सर्वथा भिन्ना वर्तते।

तात्पर्यमिदं श्रीकृष्णभक्तिमध्ये भक्तस्य या भावना समुद्भवति तथा चोपात्तभावातिरिक्तं सहृदयगतं यत् कृष्णप्रेमानुभूयते, तस्य समुचितं समाधानं रसशास्त्रे नास्ति। प्राचीनमतानुसारेण रसास्वादनविषये कृष्णलीला प्रशस्तिकाव्यमिव भक्तभावानामुद्दीपिका सती रसवदलङ्काररूपेण परिणमति। ततोऽधिका नास्ति काचिदपि भक्तिः। एतत्तु नोचितं, यतो हि तदवस्थायां कृष्णलीलागौणभूता एव भवेत्, तद् भक्ताचार्याणामभिमतं नास्ति। यतो हि भक्तिभावनया सह श्रीकृष्णलीलाऽपि तेषामभीष्टा, तस्याः समुचितं समाधानं रसशास्त्रे नास्ति। तस्मादेव कारणाद् भक्तिरसरूपा नवीना सरणिः प्रसृता संस्कृतसाहित्यकाव्यशास्त्रजगति भक्तिरसज्ञैः।

अभिनवगुप्तानुसारेण स्वाभाविकचित्तवृत्तिरेव लोकवृत्तपरिनिष्ठिता यदासहृदयैरभ्यस्यते तदा सा एव विभावादिभी रङ्गेऽवतीर्य सहृदयानां रसास्वादस्य हेतुभूता भवति। किन्तु भक्तिस्तु न स्वाभाविकी चित्तवृत्तिः, न तु तस्या अनुभावा एव बाहुल्येन समुद्भूताः, ये सहृदयैरभ्यस्यन्ते, अपि चोद्धवादीनां प्रसङ्गे यत्र कुत्रापि रङ्गमञ्चे भक्तेरभिनयः क्रियते, तत्र तस्या भक्तेर्विवेचनं कर्त्तुं शक्यते, किन्तु यत्र राधाकृष्णयोः रतिभावस्याभिनयः क्रियते, येन तस्य समास्वादनं भवेत्, अर्थाद् यदा भक्तिभावो न प्रत्यक्षीक्रियते तदा तस्य समास्वादन कथम्? किन्तु भक्तिरसशास्त्रानुसारेण सः समास्वाद्यते। तस्य समुचितं समाधानं रसशास्त्रज्ञैर्न क्रियते। अत एव भक्तिरसः समुद्भावितो भक्तिरसज्ञैः।

प्राचीनरसतत्त्वस्यानुचिन्तनं नाट्यप्रसङ्गे कृतं रसज्ञैः। अतोऽस्मिन् मार्गेऽभिनयस्य सर्वथा प्राधान्यम्। काव्यजगति रसतत्त्वेभ्योऽनिवार्यता प्रदानायाभिनयस्य स्थानं गुणालङ्कारैः स्वीकृतम्, अर्थात् काव्ये गुणालङ्कारैः रसः समास्वाद्यते। किन्तु भक्तिमार्गे भक्तिविषयककाव्यस्यैव प्राधान्यं न तु नाट्यकाव्यस्य प्राधान्यं वर्तते, तत्र भक्तिनाटकस्य रचना तु गौणरूपेणैव कृता। इत्थञ्च प्रोक्तकारणेन रसशास्त्रदृष्ट्या भक्तिकाव्यानां विवेचनार्थमेव भक्तिरसविद्भिर्भक्तिरसरूपया नवीनरसधारया सिक्ता वसुन्धरा।

## प्राक्तनरसशास्त्रभक्तिरसशास्त्रयोर्भेदाभेदः

भक्तिरसस्य रसविषये प्रक्रियाविषये च विचारणात्पूर्वं नितान्तविचारणीयोऽयं विषयो यत् प्राक्तनरससिद्धान्तस्य भक्तिरसं प्रति का उपजीव्यता वर्तते, यतो हि भक्तिरसस्य परिकल्पना नवीना सत्यपि प्राचीनरससिद्धान्तात् सर्वथा विनिर्मुक्ता नास्ति।

भक्तिरसशास्त्रस्य प्रतिष्ठापना च प्राक्तनरससिद्धान्तस्यपूर्वपीठिकायामेवाभूत्। अत एव प्रथमं भक्तिरसं प्रति प्राक्तनरससिद्धान्तस्योपजीव्यता विचार्यते।

स्थूलरूपेण भक्तिरससिद्धान्तः प्राक्तनरससिद्धान्तेन पूर्णतया प्रभावितो वर्तते। 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति भरतमुनिना प्रोक्तरसनिष्पत्ति-विषयकसूत्रस्य प्रभावेण सर्वे परवर्तिनो रसाचार्या न्यूनाधिकतया प्रभाविताः सन्ति। वस्तुतस्तत्सूत्रमेव रससिद्धान्तस्य मूलं वर्तते, यस्योपरि रसरूपवटवृक्षो विविधशाखाप्रशाखायुतः सन् पल्लवितः प्रवृद्धश्च। प्रोक्तरसपरिभाषयानुकूलमेव विश्वनाथेनापि प्रोक्तम्

विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायिभावः सचेतसाम्॥ साहित्यदर्पणे ३।१

प्रोक्तरसपरिभाषामाश्रित्यैव रूपगोस्वामिना 'भक्तिरसामृतसिन्धौ' भक्तिरसविषये सूत्रितम्—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
स्वाद्यत्वं हृदिभक्तानामानीता श्रवणादिभिः॥
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत्।

यद्यपि प्रोक्तभक्तिरससूत्रे प्राक्तनरससूत्रात् पूर्णतया पार्थक्यं नास्ति, तथापि किञ्चिद् वैशिष्ट्यमस्त्येव। तत्तु तत्र सात्त्विकभावैरपि रसपरिपाको भवतीति पृथगुपादानं कृतम्, कृष्णरतिरूपस्थायिभाव एव रसत्वमेतीति चोक्तमिति द्वे वैशिष्ट्ये वर्तेते। अन्यत्सर्वं तुल्यमेवोभयत्र। प्राक्तनरसशास्त्रे वासनामयरसिका एव रसास्वादनं कर्त्तुं सक्षमाः। भक्तिरसेऽपि भक्तिवासनावासिताः शुद्धान्तःकरणा एव भक्तिरसास्वादनेऽधिकारिणो भवन्ति। एवञ्च विभावादीनां या परिभाषा रसशास्त्रे प्रोक्ता, सा परिभाषा एव भक्तिरसेऽपि दृश्यते। केवलं सात्त्विकभावस्यैवाधिकतयोपादानं कृतम्। भक्तिरस-सूत्रे सात्त्विकभावस्य पृथगुपादानेन ज्ञायते प्राक्तनरसाचार्यवत् सात्त्विकभावस्यानुभावे नान्तर्भावः स्वीकृतो भक्तिरसज्ञैः। अन्यत्सर्वं तुल्यमेवोभयत्र। भक्तिरसे नायकः सर्वथा भगवान् एव, न तु प्राक्तनरसशास्त्रानुसारेण यः कोऽपि भवितुमर्हति। रसशास्त्रे नायिकागताष्टाविंशत्यलङ्काराणां निरूपणं कृतम्, भक्तिरसेऽपि तदनुसारेण भगद्गत-सात्त्विकालङ्काराणां निर्वचनं कृतम्। वैशिष्ट्यं तावदत्र भक्तिरसशास्त्रानुसारेण सर्वेषा-मालम्बनं दृष्टान्तश्च भक्ता एव भवन्ति, न त्वन्यत् यथा रसशास्त्रे। उद्दीपनस्य वर्णन-प्रसङ्गे श्रीकृष्णस्य वेषभूषादीनां यद् वर्णनं, तदपि रसशास्त्रसम्मतमेव। अनुभावादीनां वर्णनप्रसङ्गे तेषां शीतक्षेपणभेदेन द्वौ भेदौ प्रथितौ, तदेव प्राक्तनात् पार्थक्यम्। सात्त्विकभावानां वर्गीकरणं सर्वथा नवीनं वर्तते, किन्तु तेषां संख्यायां परिभाषायां

कार्यकारणभावादौ च न किमपि वैलक्षण्यं दृश्यते। तस्य सञ्चारिभावानुभावाभ्यां पृथगुपादानं सर्वथा नवीनं वर्तते, यस्याऽऽवश्यकता रसशास्त्रेऽपि समनुभूयते। यद्यपि धूमायितज्वलि-दीप्तोद्दीप्तादिरूपेण सात्त्विकभावानां प्रयोगो रसशास्त्रे नोपलभ्यते तथापि तेषां न कुत्रापि विरोधः। यतो हि ते सर्वे प्रभेदाश्चान्ते तत्रैव समावेश्यन्ते। सञ्चारिणां संख्या परिभाषा च रसशास्त्रानुकूलैवात्र। त्रयस्त्रिंशद्व्यभिचारिसंख्यायां नात्र व्यतिक्रमः। यद्यप्यन्येषां सञ्चारिभावानामुद्भावना कृतात्र तथापि तेषामन्तर्भावस्त्रयस्त्रिंशन्मध्य एव कृतः। वैशिष्ट्यञ्चात्र सञ्चारिभावानां परस्परं विभावतानुभावता च प्रतिपादिता। भावोदय-भावशान्ति-भावसन्धि-भावशवलतादीनां रसशास्त्रानुकूलमेव प्रतिपादनं कृतंमत्रापि भक्तिरसज्ञैरिति।

रसानां स्थायिभावानाञ्च परिकल्पना यद्यपि सर्वथा नवीनेव प्रतिभाति तथापि रसशास्त्रस्य प्रभावात् सर्वथाऽसम्पृक्तं नास्ति। केवलं रससंख्यायां तस्याः प्रविभागे च भेदो वर्तते। अपि च तत्र केवलं श्रीकृष्णसम्बन्धात् रसानां पुनराख्याने नूतनरस इव प्रतिभाति। रसानां वैर-मैत्री-स्थितिरपि रसशास्त्रानुरूपैवात्रापि। तेषां परस्परं वैरपरिहारश्च तेषामनुकूलरीत्या एवात्र। रसाभासे यत् किञ्चिन्मौलिकता वर्तते। यथाहि-प्राक्तनरसविदां मते रसनिष्पत्त्यपूर्णतायामेव रसाभासः, परवर्तिनामाचार्याणां मतेऽनौचित्ये रसाभासः, भक्तिरसशास्त्रे तु रसनिष्पत्त्यपूर्णतायामनौचित्ये च रसाभासो भवति। प्रोक्तविवेचनस्य तत्त्वमिदं निःसृतं यत् न्यूनाधिकशब्दभेदेन परिवर्तने सत्यप्युभयत्र साम्यमधिकम्, वैषम्यं तु स्वल्पमेवास्ति। अत एव सूक्ष्मेक्षिकया तयोः परस्परं पार्थक्येऽपि प्राक्तनरससिद्धान्तात् भक्तिरसोऽयं न सर्वथा भिन्नो वर्तते।

## भक्तिरसस्य लक्ष्यम्

'रसो वै सः' इत्यादिना श्रुतिप्रतिपादितस्य सच्चिदानन्दस्य परमरसस्वरूपस्य प्राप्तिरेव मानवजीवनस्य चरमं लक्ष्यमिति सर्वे रसज्ञा मन्वन्ते। एवं रसतत्त्वस्यापि चरमं लक्ष्यमानन्दप्राप्तिरेव वर्तते। आनन्दप्राप्त्यर्थमेव सर्वे रसविदो रसशास्त्रेऽवगाहनं कुर्वन्ति। रसतत्त्वचिन्तनस्येदमेव लक्ष्यं यत् रसतत्त्वानुचिन्तनेनाऽऽनन्दस्वरूपस्य परब्रह्मणः प्राप्तिर्भवेत्। 'आनन्दं ब्रह्मणो विद्वान्, आनन्दाद्ध्येवेमानि भूतानि जायन्ते[1]' इत्यादिश्रुतिभिः प्रतिपादितं तद् ब्रह्म आनन्दस्वरूपमेव, तस्मादेव सर्वे जन्तवो जायन्ते 'तमेव लब्ध्वाऽऽनन्दी भवति' इत्यादिना पुनः तमेव प्राप्य सर्वैरानन्दोऽनुभूयते। स आनन्द एव जीवनस्य परमपुरुषार्थः। 'यो वै भूमा तत्सुखम्'

१. तैत्तिरीयोपनिषदि भृगुवल्ल्यां षष्ठोऽनुवाके

इत्यादिश्रुतिभिः स एवानन्दः प्रतिपादितः । दुःखस्याऽऽत्यन्तिकनिवृत्तिरप्यानन्दस्वरूपैव । चतुर्विधपुरुषार्थजन्यं सुखमप्यानन्द एव । इत्थं भूतस्याऽऽनन्दस्य लाभायैव रसविदो रसे सततमुन्मज्जन्ति ।

ये च लौकिकाऽऽनन्दास्ते तस्यैवाऽऽनन्दस्यांशाः, अतस्तेषां लौकिकाऽऽनन्दानामधिष्ठानमानन्दात्मकमात्मस्वरूपं ब्रह्मैवास्ति । जीवात्मपरमात्मभेदेन तस्य रूपद्वयमिति । वस्तुत आनन्दस्वरूप एव परमात्मा, किन्तु परब्रह्मणोंऽशत्वेन सच्चिदानन्दस्वरूपस्य तस्याऽऽनन्दांशो जीवेऽपि वर्तते । अग्नेः स्फुलिङ्गवदथवा सिन्धोर्जलकणवत् जीवेऽपि आनन्दानुभूतिर्जायते । किन्तु आनन्दोऽयं स्वल्पांशो विषयजन्यश्च भवति । भरतप्रभृतिरसज्ञानां लक्ष्य तु तस्यैव जीवगतस्याऽऽनन्दांशस्योद्बोधनं प्रतिभाति । अनादिकालादारभ्य विविधजन्मनि परिभ्रमन् जीवो नानावासनाभिः परिव्यासोऽस्ति । मनुष्यजीवनेऽपि सा वासना जीवे तिष्ठत्येव । किन्तु तत्र तस्मिन् जीवे काव्यार्थानुचिन्तनरूपं वैशिष्ट्यमवश्यमेव समुद्भवति । ततः स जीवो विभावादिभी रसमनुभवति । इत्थं भूतं रसास्वादनमेव भरतादिरसज्ञानामभिमतं प्रतीयते । वस्तुत इयं रसानुभूतिः परमानन्दरसास्वादस्य पूर्वपीठिकैव, विषयप्रवृत्तजनैरनायासेन लभ्या च । किन्तु परमतत्त्वगतपूर्णानन्दस्यानुभूतिः पूर्वापेक्षयाऽतिदुष्करा, सर्वैर्दुर्लभ्या च । अनुमीयते तस्मादेव कारणात् भरतप्रभृतिभी रसाचार्यैर्निःश्रेयसः साधनीभूतश्रवणादीनां विषये न किमपि विचारितम् , न च संसारचक्रे निखिलानर्थमूलस्य जीवबन्धनस्य मूलमज्ञानस्योच्छेदनार्थमेव किमपि निरूपितम् । निखिलनिगमसिन्धून् निर्मथ्य भरतमुनिना या नाट्यसुधा समुद्भाविता, तया केवलं जीवगताऽऽनन्दांशस्यैवाऽऽस्वादनं भवति, यः पूर्णब्रह्मानन्दस्य क्षुद्रांश एव । इत्थञ्च रसशास्त्रज्ञभक्तिरसशास्त्रज्ञयोः रसविषये समानलक्ष्येऽपि सारभूतसिद्धान्ते महदन्तरमस्तीति विदितमेव प्रेक्षावतां सत्साहित्यपाथोदधिमन्थनमन्दरायमाणानां शेमुषीजुषाम् ।

एवञ्च प्रतीयते भरतादिप्रतिपादितजीवगताऽऽनन्दांशो भक्तिरसप्रतिपादकानामनभिमतमेव, तेषां चरमं लक्ष्यन्तु परमानन्दराशेर्भगवद्गतस्याऽऽनन्दस्य रसास्वादनमेव । अर्थात् पुष्कलरसावाप्तिरेव भक्तिरसज्ञानामभिमतम् । सा च तदैव भवेद् यदा परमानन्दस्वरूपो भगवान् मनोगतः सन् तदाकारो भवेत् , तदनन्तरमेवासीमापरिच्छिन्नरसानुभूतिर्भवति । उक्तञ्च मधुसूदनस्वामिना—

> भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
> मनोगतस्तदाकारो रसतामेति पुष्कलम् ॥ भक्तिरसायने १।१०

यदा चित्तवृत्तिर्द्रवतां प्राप्य विभु-नित्यपूर्णबोधसुखात्मकं भगवन्तं गृह्णाति तदा तया न किमपि प्राप्यमस्ति लोके[1]। अतो भक्तिरसप्रतिपादितसाधनैर्मनसि विषयान् प्रति काठिन्यम्, भगवन्तं प्रति चित्तद्रवत्वं च संस्थापनीयम्, यतो हि तदनन्तरमेव भगवत्साक्षात्कारो जायते[2]।

भक्तिरसप्रतिपादितसिद्धान्तोऽयं भरतादिसिद्धान्तान् नातिक्रमते, किन्तु तेषां पल्लवनमात्रमेव चकार। तेषामभिप्रायोऽयं प्रतीयते भगवतः पराङ्मुखो भूत्वा जलधारावत् मानवजीवस्य विषयेषु स्वाभाविकी प्रवृत्तिः[3], विषयेष्वेव सरलरीत्या रसास्वादनं भवति। तमेव पन्थानमवलम्ब्य भरतमुनिना रसास्वादनं प्रतिपादितम्। यतो हि यावन्मानवचित्तवृत्तिः परमरसास्वादस्याऽऽनन्दांशमात्रे लौकिकजीवगतरसे पूर्णतया रसज्ञत्वं नानुभवति, तावत् कथं परमानन्दस्य पूर्णरसास्वादने स्पृहालुता भवेत्। अर्थात् प्रथमं जीवगताऽऽनन्दं प्राप्यैव भगवद्विषयाऽऽनन्दः प्राप्यते सोपानक्रमिकविकासरूपेणेति। एवञ्च प्रथमभूमिकारूढजनानां कृते प्राकृतरसस्य लक्ष्यं प्रदर्श्य मुनिना तत्रैव परमतत्त्वविषयायप्राकतरसायापि स्वीकृतिः प्रदत्ता[4]। वस्तुतस्तेन परमानन्दरसस्वरूपमलक्षितमेव वर्तते।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं यद् भरतमुनिना 'गुडजिह्विका' न्यायेन प्राकृतजनानां प्राकृतरसपरिचयद्वारा-'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति रीत्या अप्राकृतरसे ( दिव्यरसे भक्तिरसे ) चेतोऽवगाहनाय प्रथमं प्राकृतरस एव प्रतिपादितः। एवञ्च प्रयोजनपार्थक्यात् प्रस्थानपार्थक्यमप्यभूत्। इत्थंभूतो भक्तिरसो भरतादीनां दृष्टिपथात् दूरमेव वर्तते। एवं च रससाधनायां प्राचीनार्वाचीनयोर्लक्ष्यभेदः परिदृश्यते।

## प्राक्तनरससिद्धान्तात् भक्तिरसस्य पार्थक्यम्

प्रोक्तप्रकारेण प्राचीननवीनयोर्लक्ष्यभेदे सति रसस्य निष्पत्तावास्वादने च भेदः स्वाभाविक एव वर्तते। लक्ष्यभेदेन सर्वस्मात् प्राक्तनरससिद्धान्तात् प्रभिन्नोऽयं भक्तिरससिद्धान्तः, अतस्तस्य तात्त्विकदृष्ट्या प्राचीनैः सह न कुत्रापि पूर्णरूपेण समन्वयः सम्भवति।

यथाहि-विभावादिभिः कारणैः सह स्थायिभावानां संयोगादनुकार्ये रामादौ प्राधान्येन रसस्य निष्पत्तिरुत्पत्तिर्वा भवति, ततो नटे स आरोप्यते। इत्थंभूतस्य भट्टलोल्लटस्य रसनिष्पत्तिविषयकोत्पत्तिवादेन सहाऽऽरोपवादेन सह वा न भक्तिरसस्य सङ्गतिः सम्भवति।

---

१. भक्तिरसायने १।३०।　　२. भक्तिरसायने १।३१।
३. कठोपनिषदि २।१।　　४. भक्तिरसार्णवे पृष्ठे ५८।

एवमेव शङ्कुकस्यानुमितिवादेन सहापि समन्वयो न भवति, यतो ह्यनुकार्ये मुख्यरामादिरूपे गृहीतनटरूपपक्षेऽकृत्रिमरूपे गृहीतविभावादिहेतुनाऽनुकार्यभिन्ननटे रतिरनुमीयते। एतयोर्द्वयोः पक्षयोः रसविदां विप्रतिपत्तयो विदिता एव। भक्तिरसदृष्ट्या च भक्तिरसे भक्तस्य समास्वादितो निजभाव एव रसरूपतां प्राप्नोति, न तु तस्योत्पत्तिरनुकार्ये, न वा नटे पक्षधर्मता संभवति। यतो हि समास्वाद्यत्वात् रसः सामाजिकेषु तिष्ठति न त्वनुकार्ये रामादौ, तस्यावर्तमानत्वात्, तत्परत्वाभावाच्च[1]। न च नटे पक्षधर्मताऽपि संभवति। अपि च पक्षधर्मताग्रहणं तु यद्वा नटेऽनुकार्यगतभावस्याऽऽरोपो नाट्ये संभाव्यते किन्तु भक्तिरसे रसानुभूतिः श्रवणादिद्वारा जायते। तत्कथमत्र रसस्योत्पत्तिरारोपो वानुमातुं शक्यः।

अनेनैव प्रकारेण भट्टनायकस्य भावकत्वभोजकत्वव्यापारयोरपि नात्र सङ्गतिः, तत्र च भावकत्वव्यापारेण विभावादीनां साधारणीकरणं भोजकत्वव्यापारेण च सत्त्वोद्रेकजन्यप्रकाशात्मिकाऽऽनन्दात्मिका च संविद्विश्रान्तिः सिध्यति। ततो रस उपभुज्यते।

इत्थमेवाभिनवगुप्तस्य प्रमातृगत-सहजातमनोभावस्याऽऽस्वादनेन भक्तिरसास्वादनं न सम्भवति। यतो ह्यभिनवगुप्तमते नाट्ये सम्पूर्णसामाजिकानां मनोभावः प्रधानपात्रस्य मनोभावेन, प्रधानपात्रस्य च मनोभावः सहृदयमनोभावेन सह तादात्म्यं भजते, तत्तु भक्तिरसे न संभवति। यतो हि भक्तिरसे सम्पूर्णसामाजिकानां मनोभावः प्रधानपात्रस्य भावे विलयः, प्रधानपात्रगतभावस्य सहृदयगतभावेन सहैक्यं न सम्भवति। अपि च यथा लौकिकरसे भावस्याऽऽश्रया नाट्यगतपात्राणि भवन्ति, न तथा भक्तिरसे, यतो हि भक्तिरसे भावस्याश्रयस्तु भक्त एव भवति। लौकिकरसे शृङ्गारस्याऽऽश्रय आलम्बनञ्च परस्परं दुष्यन्तः शकुन्तला च, किन्तु भक्तिरसे राधाकृष्णयोरालम्बनरूपेण भक्तस्य चाऽऽश्रयरूपेण प्रतिपादनं भवति।

प्रोक्तचतुर्षु मतेषु आत्मस्वरूपस्य रसस्य नित्यता न सिध्यति। अत एव भावत्रयीसमूहालम्बनज्ञानानन्तरं जायमाना व्यवधानरहिता भगवत्प्रीतिरेव भक्तिरसरूपेण समास्वाद्यते भक्तैः[2]। तस्मादेव कारणात् भक्तिरसज्ञैर्भक्तिरसमूला नवीना पद्धतिः परिकल्पिता काव्यशास्त्रजगति।

भक्तिरसमार्गे स्थायिभावस्य परिकल्पना सर्वथा नवीना। भक्तिरसशास्त्राचार्यैस्तु 'जात एव हि जन्तुरियतीभिः संविद्भिः परीक्षितो भवति' इति वक्तुं न शक्यते, 'न वा'

१. रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः॥ दशरूपके ४।३८।

२. भक्तिरसायने ३।१३, २३, २४।

न ह्येतच्चेतनाशून्यः प्राणी भवति इत्येवं वक्तुं शक्यते[1]। ते तु केवलं भगवद्विषयक-रतिमेव स्थायिभावेन मन्यन्ते। भावोऽयमुपार्जितः सम्वर्द्धितश्च भवति। प्राक्तनसंस्कारत्वेन स जन्मजातोऽपि दृश्यते,

## स्वतन्त्रभक्तिरसस्य स्थापना

तत्त्वातत्त्वविचारं विनैव परम्पराग्रहग्रहवशादेव भक्तिरसखण्डनार्थं बद्धपरिकरैः शास्त्रकोविदैर्भक्तिरसस्य स्वतन्त्रसत्ता नाङ्गीक्रियते। केवलं भावरूपत्वेन रसान्तरान्तभूतत्वेन वा भक्तिरसं स्वीकुर्वन्ति। एतत्समर्थकाः प्राचीनाचार्येष्वभिनवगुप्त-धनिक-धनञ्जय-मम्मट - भोजराज - विश्वनाथ - पण्डितराजजगन्नाथप्रभृतयस्तथाऽऽधुनिकेषु च रङ्गाचार्यरेड्डी-प्रो॰ मा॰ दा॰ अलतेकर-प्रो॰ वी॰ पराञ्जपे-श्री पी॰ वी॰ काणे-प्रो॰ द॰ सी॰ पङ्गु-प्रो॰ रा॰ जोग-रा॰ टिङ्गरोकरप्रभृतयश्च सन्ति।

विवेकपूर्वकं भक्तिरसस्थापने दृढसन्नद्धाः प्राचीनाचार्येषु रसज्ञेषु शाण्डिल्यः, नारद- श्रीबोपदेव- महाप्रभुचैतन्य रूपगोस्वामी - जीवगोस्वामी - मधुसूदनसरस्वती-प्रमुखास्तथाऽऽधुनिकेषु भक्तशिरोमणिश्रीसूरदास- सन्तशिरोमणिभक्तप्रवरश्रीतुलसीदास-श्रीकरपात्रस्वामि-कविराजकृष्णदास विष्णुपुरीगोस्वामी-विश्वनाथचक्रवर्ती-डा॰ बाटवे-डा॰ रावजीमोडकर-रा॰ प्रधान-रा॰ भागवत-रा॰ म॰ गोरे-प्रो॰ द॰ केलकर-प्रो॰ रं॰ रा॰ देशपाण्डेयप्रभृतयः सन्ति।

रसाचार्येण भरतमुनिना शृङ्गारादिनवरसाः स्वीकृताः किन्तु भक्तिरसविषये न किमपि प्रोक्तम्। पश्चादभिनवगुप्तानुसारेण भरतमुनिमते 'अत एवेश्वरप्रणिधानविषये भक्तिश्रद्धे-[2]' इत्यादिना निराकारोपासनायाः साकारोपासनायाश्च साक्षात् सच्चिदानन्दो ब्रह्मैवाऽऽलम्बनं वर्तते। अतो भक्तिज्ञानयोश्च शान्तरस एवान्तर्भावः कर्त्तव्यः। दशरूपककारेण भक्तिर्भावरूपैव स्वीकृता[3]। भोजराजेन रससंख्यां वर्द्धयित्वापि तत्र भक्तिरसस्य गणना न कृता। अतो विचार्यते यत् तन्मतेऽपि भक्तेःरसत्वं नाङ्गीक्रियते। 'रतिर्देवादिविषया व्यभिचारि तथाञ्जितः' इत्यादिना मम्मटमते भगवद्विषयिणी रतिर्भाव एव न तु रस इति। विश्वनाथेन वात्सल्यरसं स्वतन्त्ररूपेण स्वीकृत्यापि भक्तिरसो न स्वीकृतः।

संस्कृतकाव्यशास्त्राणामाचार्येषु पण्डितराजजगन्नाथेन किञ्चिदुदारदृष्ट्या निष्पक्षतया च भक्तिरससम्बन्धिविचार उद्भावितः। तन्मते भक्तिरसो दशमरसरूपेण

१. अभिनवभारत्यां पृष्ठे २८२।

२. नाट्यशास्त्रे ६।८३ अभिनवभारत्यां पृष्ठे ७७७। मधुसूदनशास्त्रिसम्पादिते

३. दशरूपके ४।८३।

स्वीकर्तव्यः। यतो हि व्यवहारे भक्तिरसः सर्वैर्मनुष्यैरनुभूयते। एतन्मते स्वतन्त्रभक्तिरसस्यालम्बनविभावः साक्षाद् रसस्वरूपसच्चिदानन्दघन एव, उद्दीपनभावो भागवतश्रवणादिरूपः, अनुभावस्तु भगवद्गुणगणश्रवणजन्यो रोमाञ्चाश्रुपातादिः, सञ्चारिभावो हर्षादिः भगवद्विषयिणी रतिः (भक्तिः) स्थायिभावो वर्तते। अतो भक्तेः कथं न रसत्वमिति। अपि च यदि 'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः' इति भरतसूत्रमेव रसनिष्पत्तिविषये प्रमाणम्, तर्हि किं बाधकं भक्तिरसनिष्पत्तौ। विभावादिसर्वसहायकानां समवाये सत्यपि भक्तिर्दशमो रसः स्वीकरणीयः[1]। किन्तु रसनिष्पादनाय सर्वसामग्रीसत्त्वेऽपि परम्पराग्रहग्रस्तः स भक्तिरसं पृथङ् न मन्यते। अपि च स अन्यालङ्कारिकवत् भक्तिरसस्य शान्तादिरसेषु, शान्तरसस्य वा भक्तिरसे नान्तर्भावं करोति। यतो हि भक्तिरसस्य स्थायिभावोऽनुरागप्रधानभगवद्विषयिणी रतिः[2], शान्तरसस्य च वैराग्यप्रधानो निर्वेदो वर्तते[3]। अत एव तयोः परस्परं नान्तर्भावमर्हति। एवञ्च तेन भक्तिशान्तयोर्भेदं प्रदर्श्य परम्पराव्यामोहेन श्रृङ्गारेतररतरपि भावमात्रमेवेति स्वीकृतम्। अतो देवादिविषयिणी रतिः भावमात्रमेव।

अपि चास्मिन् विषये तेन नूतनभावोऽप्युद्भावितः। कामिनीविषयिणी रतिरेव कथं न भावः, यतो हि रतित्वेन कामिनीविषयिणी रतिर्देवादिविषयिणी रतिर्वा तुल्यैव। अथवा भगवद्विषयिणी रतिरेव (भक्तिः) रतित्वेन श्रृङ्गाररसस्यापि स्थायिभावोऽस्तु, कामिनीविषयिका रतिः सञ्चारिभावश्चास्तु, तयोर्हि विनिगमनाविरहात्[4]। तत्र तस्मै समाधानं तेनैव दत्तम्, यत् साहित्यशास्त्रे भरतमुनिरीत्यैव रसादीनां व्यवस्था कार्या। अर्थाद् भरतमुनिमते कान्तादिविषयिका रतिरेव श्रृङ्गाररसस्य स्थायिभावः, देवादिविषयिका रतिस्तु भावमात्रमेव। एतदेव मन्तव्यम्। अन्यथा पित्रादीनां पुत्रादिकं

---

१. भगवदालम्बनस्य, रोमाञ्चाश्रुपातादिभिरनुभावितस्य, हर्षादिभिः परिपोषितस्य, भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात् भगवदनुरागरूपा भक्तिश्चात्रस्थायिभावः।

रसगंगाधरे प्रथमानने पृष्ठे १८६।

२. न चासौ शान्तरसेऽन्तर्भावमर्हति, अनुरागस्य वैराग्यविरुद्धत्वात्।

रसगंगाधरे प्रथमनने पृष्ठे १८६।

३. निर्वेदः स्थायिभावोऽस्ति शान्तोऽपि नवमो रसः॥ काव्यप्रकाशे ४।३४

४. न च तर्हि कामिनीविषया अपि रतेर्भावमस्तु, रतित्वाविशेषात्, अस्तु वा भगवद्भक्तेरेव स्थायित्वम्, कामिन्यादिरतीनां च भावत्वं, विनिगमकाभावात्।

रसगंगाधरे पृष्ठे १९०।

प्रति या रतिः सैव स्थायिभावः, जुगुप्साशोकौ च कथं न सञ्चारिभावः स्यातामिति[1]। अतो भरतमुनिना व्यवस्थापिता रसस्य नवसंख्यैवोचिता। देवादिविषयकरतिकामिनी-विषयकरत्योश्च तेन सादृश्यमुद्भावितम्, तत्तु नोचितम्। यतो हि भगवद्विषयकरतौ प्रेमाराध्यसुखस्य श्रीकृष्णसुखस्यैव वा केवलं प्राधान्यम्, किन्तु कामिनीविषय-करतौ चाऽऽत्मनः सुखस्य प्राधान्यं भवति। एवञ्च पण्डितराजजगन्नाथमतानुसारेण भक्तिरसोऽस्ति किन्तु परम्पराग्रस्ततया तेन पुरातनसरणिर्नोलङ्घिता। परवर्तिन आचार्या तामेवान्वसरन्।

श्रीहेमचन्द्राचार्यमतेऽपि भक्तिर्न स्वतन्त्रो रसः, अपि तु सा रतेरेव विशेषभेदो वर्तते। यतो ह्युत्तमेऽनुत्तमस्य या रतिः सैव भक्तिरिति कथ्यते। अतो भक्तिरसः स्वतन्त्ररूपेण पृथक्तया न स्वीकर्त्तव्यः[2]। एवमेव शार्ङ्गदेवमतेऽपि केचिद् भक्तिस्नेहलौ-ल्यादीनामपि रसत्वं, तस्य स्थायिभावान् श्रद्धार्द्रताभिलाषांश्च स्वीकुर्वन्ति। तत्तु नोचितं वर्तते, यतो हि ते सर्वे रतेरेव विशेषभेदा भवितुमर्हन्ति[3]।

कतिपयाऽधुनिकविद्वांसोऽपि भक्तेः रसत्वं न स्वीकुर्वन्ति। यथाहि श्रीरङ्गाचार्यम-तानुसारेण 'रतिः' विस्तारात्मिका वर्तते। अतस्तत एव राष्ट्र-नृप-देव-गुरुप्रभृतीन् प्रति भक्तेर्विकासो भवति। अतः सा रतिरेव सर्वेषां पूर्वोक्तभावानां स्थायिभावो नदीनां पतिः समुद्र इव। तत्र वक्तव्यमिदमेकस्मादेव स्थायिभावाद् विभिन्नरसनिष्पत्त्या तु रसशास्त्रमर्यादालङ्घनं भवेत्। श्रीरंगाचार्यस्यापरेयमापत्तिर्यद् रसस्थापनाय विभावा-दियोजनया सहैव चारित्रिकवर्णनमप्यपेक्ष्यते। चारित्रिकवर्णनं विना केवलं भक्ति-वर्णनेन भक्तिमार्गावलम्बनेन वा भक्तिः स्वतन्त्ररसरूपेण भवितुं नार्हति। अतो भक्तिर्न स्वतन्त्ररसः। अन्यथा रसशास्त्रमर्यादा भज्येत। तथापि प्रोक्ताऽऽपत्तिः समीचीना नास्ति। यतो हि भक्तिरसे न केवलं भक्तिरेव वर्ण्यते, अपि तु तत्र रसनिष्पत्त्यर्थं सकलसाम-

---

१. अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात्? न स्याद् वा कुतः शुद्धभावत्वं जुगुप्साशोकादीनामित्यखिलदर्शनव्याकुली स्यात्।
रसगंगाधरे प्रथमानने पृष्ठे ११९।

२. स्नेहो भक्तिर्वात्सल्यमिति हि रतेरेव विशेषाः... ... .. अनुत्तमस्य उत्तमे रतिः प्रसक्तिः सैव भक्तिपदवाच्या। काव्यानुशासने पृष्ठे ९८।

३. भक्तिं स्नेहं तथा लौल्यं केचिन्मन्वन्ते रसान्।
श्रद्धार्द्रताभिलाषांश्च स्थायिनस्तेषु ते विदुः॥
तदसत्, रतिर्भेदौ हि भक्तिस्नेहौ नृगोचरौ।
व्यभिचारित्वमनयोः नृनार्योः स्थायिनौ तु तौ॥
—संगीतरत्नाकरे पृ० ८३९।

अश्रवोऽपि वर्ण्यन्ते। तत्र हि निखिलरसानन्दमूर्तिर्भगवान् एव भक्तिरसस्य विषयालम्बन-भावः, भगवतो भावुकभक्तजनाः प्रियवल्लभाश्च भक्तिरसस्याऽऽश्रयालम्बनभावाः भागवतपुराणादीनां श्रवणम्, भगवत्सम्बद्धाः स्थल-शील-शक्ति-सौन्दर्याङ्गसौरभादयश्चो-द्दीपनभावाः। प्रेमवशेन नृत्यं गानं भावविह्वलो भूत्वा रुदनं हसनादिकञ्चानुभावाः। भगवद्रतिश्च ( भक्तिः ) स्थायिभावो भवति। भक्तिभावापन्नैर्भक्तैः सह भगवतो लीलाविलास एव भक्तिरसस्याऽऽत्मा वर्तते। एतावत् सामग्रीसमवायेऽपि भक्तिरस-स्याभावः कथम्?

श्री वा० ना० देशपाण्डेयमते भक्तिरसोऽद्भुतरसेऽन्तर्भवितुमर्हति, यतो हि रहस्यवादिकाव्यदृष्ट्या भक्तिरसस्य चापि सम्बन्धो भगवतो विराट्शक्त्या, अनन्त-सौन्दर्येण, अनिर्वचनीयरूपमाधुर्येण, ऐश्वर्यमाधुर्येण, लीलामाधुर्येण भक्तानां च रहस्यपूर्णदिव्यानुभूतिभिश्च भवति[१]। एवमेव प्रो० मा० दा० अलतेकरमहोदयेन भक्तिरसस्य शृङ्गाररसे[2], प्रो० वी० पराञ्जपेमहोदयेन च शान्तरसे भक्तिरसस्यान्त-र्भावः कृतः[3]। पी० वी० काणेमहोदयेन परम्पराविरुद्धत्वेन प्रायः शृङ्गारपरकवर्णनत्वेन वीररसस्य कतिपयभेदानां सादृश्येन च भक्तिरसः स्वतन्त्ररूपेण न स्वीकृतः[४]। एवमेव प्रो० द० सी० पङ्गुमहोदयमतानुसारेण निर्जीवमूर्तिं प्रति कृताऽऽत्मनिवेदने रसानुरूपभाववेगानामौत्कट्यं तीव्रता वा कथमपि न सम्भवति। अतस्तां निर्जीवमूर्तिं प्रति कृताऽऽत्मनिवेदनात्मिका भक्तिर्भावमात्रमेव न तु रसः[५]। एवमेव प्रो० रा० जोगमते भक्तेरलौकिकत्वेनाव्यापकत्वेन च भक्तिरसो न स्वतन्त्ररसः[६] तथा प्रो० रा० हिंगणेकरमते भक्तिः क्रियाविहीनतया न स्वतन्त्ररसो भवितुमर्हति[७]।

## भक्तिरसविरोधस्य कारणानि तेषां निराकरणञ्च

पूर्वोक्तविवेचनस्य सारोऽयं यद् भक्तिरसविरोधिनां विदुषां मते भक्तिरसविरोधस्य मुख्यतया निम्नाङ्कितानि कारणानि सन्ति—

( क ) भक्तिरसस्य स्वीकृतौ सत्यां रसादीनां भावादीनाञ्च प्रामाणिकव्यवस्थापक-भरतादिनिर्णीतशास्त्रमर्यादोलङ्घनं भवेत्, येन निखिलरसादिप्रतिपादककाव्यसाहित्य-दर्शनमस्तव्यस्तं भूत्वा वितण्डाग्रस्तं जायेत, येन च नूतना समस्या काव्यसाहित्यशास्त्रे-ऽव्यवस्था चोत्पद्येताम्। अर्थात् रसशास्त्रे परम्पराभङ्गो भवेत्।

---

१. रसविमर्शे पृष्ठे २६३। २. रसविमर्शे पृष्ठे २६२।
३. रसविमर्शे पृष्ठे २६३। ४. रसविमर्शे पृष्ठे २६१।
५. रसविमर्शे पृष्ठे २६३। ६. रसविमर्शे पृष्ठे २६२।
७. रसविमर्शे पृष्ठे २६१।

( ख ) भक्तिः केवलं भावमात्रमेव, न तु स्वतन्त्रो रसः ।

( ग ) भक्तिर्मूलभावो नास्ति ।

( घ ) निर्जीवमूर्ति प्रत्यात्मनिवेदनासक्तिरूपभक्तौ भावावेगानां तीव्रताया औत्कट्यस्य चासत्त्वात् सा केवला क्रियाहीनैव ।

( ङ ) भक्तिः सार्वजनीनापि नास्ति । अर्थात्तस्यां व्यापकता न विद्यते, तस्याः क्षेत्रं परिसीमितमेव । अत एव सा रसरूपो भवितुं नार्हति ।

( च ) यदि भक्तिरसस्य रसान्तरेषु समुचिततयाऽनायासेन निर्विघ्नेन वान्तर्भावः स्यात्तर्हि रसान्तरकल्पनं नोचितं प्रतिभाति विदुषां मते, संख्यागौरवात् ।

तदित्थम्ः—

( अ ) भक्तिरसस्य शान्तरसेऽन्तर्भावः ।

( आ ) भक्तिरसस्य श्रृङ्गाररसेऽन्तर्भावः ।

( इ ) भक्तिरसस्याद्भुतरसेऽन्तर्भावः ।

( ई ) भक्तिरसस्य वीरकरुणादिवष्न्तर्भावः ।

## ( क ) भक्तिरसस्वीकारे परम्पराभङ्गनिरासः

स्वतन्त्रस्य भक्तिरसस्य स्वीकारे परम्पराभङ्गरूपप्रथमाऽऽपत्तिर्निर्मूला, अयथार्था च । यतो हि काव्यपदार्थो मनुष्याणां जलतरङ्गवन्नित्यपरिवर्तनशीलरचनात्मकक्रियाशक्तेः परिणामो वर्तते । काव्यक्षेत्रे साहित्यक्षेत्रे वा परिवर्तितयुगानुरूपा नूतना नूतना भावना प्रवृत्तिश्च, तस्या नवीनाभिव्यक्तिः, तस्या नूतनमाध्यमाऽऽलम्बनं च जायते । इदमेव भारतीयसजीवचिन्तनधारायाः काव्यशास्त्रस्य साहित्यशास्त्रस्य वा क्रमिकविकासस्य जाज्वल्यमानं प्रमाणमस्ति । भरतात् परवर्तिन आचार्या मुनिमतं विखण्ड्य रसालंकार-गुणरीतिभावादिषु[1] प्रायः सर्वेषु क्षेत्रेषु नूतनं तथ्यम्, नूतनकाव्यसिद्धान्तम्, नूतनकाव्य-सम्प्रदायस्य संस्थापनं कृतवन्तः, तेषां सिद्धान्तानां मान्यता च जाता । अत एव पण्डित-

---

१. यथा श्रीभरतमुनिमतं गुणादिविषये विरुध्यते खण्ड्यते च । तत्र मुनिमते दशगुणाः प्रतिपादिताः । यथा—

श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते ॥

नाट्यशास्त्रे १६।९६ पृष्ठे १३१८ मधुसूदनशास्त्रिसम्पादिते

वामनाचार्यमते भरतदण्डिप्रभृतिकृता गुणा एव क्रमेण शब्दगुणा अर्थगुणाश्च भवन्ति । एवञ्च तन्मते विंशतिर्गुणा सन्ति । काव्यालङ्कारे ३।१।४ । भोजराजमते बाह्यगुण ( शब्दगुणः ) आभ्यन्तरगुण-( अर्थगुणः ) वैशेषिकगुणभेदेन सर्वप्रथमं गुणस्य त्रयोभेदाः । ( स० कण्ठा० पृ० ५० ) तथा ( अलङ्कारशेखरे-३।१।१ ) तत्र

राजजगन्नाथस्य कथनमिदं यद् देवादिविषयकरतेर्भक्तिरसरूपत्वेन स्वीकृतौ सत्यां भरतादिनिर्णीतकाव्यशास्त्रीयमर्यादाभङ्गो भवेत्, तन्न नोचितम्, यतो हि स्वयमेव तेन सञ्चारिभावविषये भरतादिनिर्णीतत्रयस्त्रिंशद्व्यभिचारिभावातिरिक्ता नूतना चतुस्त्रिंशद्व्यभिचारिभावाः स्वीकृताः[1]। एवमेव मम्मटादिभिः प्राचीनैः कृतस्य काव्यलक्षणस्य तद्भेदस्य चोलङ्घनं कृतम्, तत्र किं मर्यादाभङ्गो नास्ति ? वस्तुतस्तत्र मर्यादोलङ्घनं नास्ति, यतो हि यद्येवं न स्यात्तर्हि नवीनपदार्थस्योद्भावना कथं स्यात् ? कथं वा रसगङ्गाधरप्रभृतिः साहित्यरत्नं दृष्टिगोचरं भवेत्। अतः 'यथोत्तरं मुनिनां प्रामाण्यम्' इति रीत्या नूतनविचारसरणिः समादरणीया। अत एव प्रोक्ततत्त्वहीनविचारेण भक्तिरसो न तिरोधीयते। अन्यथा सत्यान्नेत्रनिमीलनमेव वक्तव्यम्। अतः समस्तसाहित्यरसिकैरन्धपरम्पराहितैः पक्षपातशून्यैश्च भक्तिरसः स्वीकर्तव्यः।

'अष्टौ नाट्ये रसाः स्मृताः' इत्यादिना भरतमुनिस्वीकृताष्टरसादतिरिक्तो मम्मटेन 'शान्तोऽपि नवमो रसः' इत्यादिना शान्तरूपनवमरसः, विश्वनाथेन च 'स्फुटं चमत्कारितया वात्सल्यं च रसं विदुः' इत्यादिरूपेण वात्सल्यरूपो दशमोरसः स्वीकृतः, तर्हि सर्वानुभवसिद्धो भक्तिरसः कथं न स्वीक्रियेत ? तेन किं रसज्ञाः परम्पराग्रहपङ्कनिमग्ना न भवेयुः ? अत एव न्यायमार्गे स्वप्रतिष्ठारक्षणार्थमपि भक्तिरसस्तैः स्वीकर्त्तव्यः।

## ( ख ) भक्तिः केवलं भावमात्रमेवेत्यस्य निरासः

स्वतन्त्रभक्तिरसस्य स्वीकारे भक्तिः केवलं भावमात्रमेवेति द्वितीयाऽऽपत्तिः समीचीना नास्ति। तत्र 'रतिर्देवादिविषया व्यभिचारितथाञ्जितः' इत्यादिना प्रायः सर्वेषां काव्यरज्ञानां साहित्यिकानां मते देवादिविषयिणी भगवद्विषयिणी वा या रतिः, सा केवलं भावमात्रमेव, न तु भक्तिरस इति यः पक्षो वर्तते, स तु न समीचीनः, यतो हि

बाह्यगुणाः युवत्यः जाति-वयोरूप-लावण्यादिसदृशाः, आभ्यन्तरगुणाः तस्याः शील-वैदग्ध्य-सौभाग्यादिसदृशाः, वैशेषिकगुणाः तस्याः विशेषावस्थायां समुत्पन्ना अविनयादिसदृशाः भवन्ति। तस्याः दोषोऽयं सुगन्धितकाष्ठादीनां प्रज्ज्वलने सति काष्ठादेः धूमसदृशः सहृदयग्राह्य एव भवति। भोजकृतशृङ्गारप्रकाशे पृ० ३०२ प्रोक्तास्त्रयोगुणाः क्रमशः प्रत्येकं चतुर्विंशतिप्रभेदेन सहिता द्वासप्ततिप्रभेदाः वर्णिता भोजेन

सरस्वती कण्ठाभरणे पृष्ठे ५०

तद्विपरीतं ध्वनिसिद्धान्तप्रतिष्ठापकाचार्याणां मते माधुर्यौजःप्रसादभेदेन त्रय एव गुणाः भवन्ति। भामहकृतकाव्यालङ्कारे २।१ 'माधुर्यौजः प्रसादाख्यास्त्रयस्तेन पुनर्दश' का० प्र० ८।६८। एवमेव विश्वनाथमतेऽपि त्रय एव गुणाः। ध्वनिवादीनां मते गुणाः रसोत्कर्षकत्वेन रसमात्रधर्माः, न तु रीतिवादिनामिव शब्दार्थधर्माः भवन्ति।

१. गुरुदेवनृपपुत्रादिविषयारतिश्चेति चतुस्त्रिंशत्। रसगंगाधरे पृष्ठे २६६।

भक्तिरसज्ञानां मते सामान्यदेवविषयिका रतिर्भावो भवतु किन्तु सामान्यदेवापेक्षया 'रसो वै सः' इत्यादिश्रुत्या प्रतिपादितपरात्परभगवद्विषयिणी परमविलक्षणा या रतिः, सा तु न भावत्वमर्हति, अपि तु रसत्वमेव । सूत्रेऽपि 'देवः' एव कथितः, आदिपदेन तत्र इन्द्रादिदेवगुरुमातृपितृस्वामिप्रभृतिविषयिका रतिरेव गृह्यते । ते सर्वे सामान्यजीवविशिष्टा एव परमात्मापेक्षया । अतः साक्षात् परमात्मविषयिका रती रसपदवाच्यैव । यतो हि इन्द्रादिदेवविषयिण्यां कान्तादिविषयिण्याञ्च रतौ सुखांशस्य लेशोऽपि नास्ति, किन्तु सुखाभास एव, तेन रसो न पुष्यति । परमात्मविषयिणी रतिस्तु पूर्णसुखस्य निधिरेवास्ति । परमात्मविषयिका रतिर्दिव्यमहत्प्रकाशयुक्ता सूर्यसदृशी, किन्तु इन्द्रादिदेवविषयिका कान्तादिविषयिका च रतिः खद्योतेव निष्प्रभा । अर्थात् कान्तादिविषयिणी रतिः क्षणिकाऽऽनन्दजनिका, भगवद्विषयिणी रतिस्तु सततं सर्वत्र पूर्णानन्ददायिका चिरस्थायिनी च । तस्मादविद्यया मोहितस्य मलिनसत्त्वप्रधानस्य देवस्य विषये या रतिः सा यदि भावो भवति तदा भवतु नाम, तत्तु समुचितमेव, किन्तु परमानन्दरसस्वरूपभगवद्विषयिणी रतिस्तु रस एव, अत एव सा रतिः कदाचिदपि भावो भवितुं नार्हतीति । अत एव मधुसूदनस्वामिमते जीवत्वविशिष्टाः परमानन्दभिन्ना ये देवादयस्तद्विषयिका रतिरेव भावपदेनोक्तम् , न तु परमात्मविषयिका रतिः, परमात्मविषयिका रतिस्तु स्थायिभावत्वेन रसत्वेनाभिधीयते[1] । एवं सत्यपि कष्टं यन्नेत्रं नीमिल्य केचन रसज्ञाः भक्तिरसं भावमात्रमेव कथितवन्तः । औपनिषदानाम् ऋषिणां मतेऽपि साधनभक्त्या भग्नवारणशुद्धचैतन्यसम्पृक्तो रत्यादिस्थायिभाव एव भक्तिरसः । अत एव रसजन्याऽऽनन्दो ब्रह्मानन्दसहोदर इति कथ्यते । श‍ृङ्गारादिनवरसास्तु ब्रह्मानन्दसहोदरा एव सन्ति । एवञ्च भक्तिरसब्रह्मानन्दयोस्तु तत्त्वतस्तादात्म्यमेव विद्यते । अत एव मधुसूदनस्वामिमते समाधिजन्यब्रह्मानन्दस्य भक्तिरसस्य च नामभेदेऽपि तत्त्वत एक एव[2] । भक्तिरससंस्थापकश्रीरूपगोस्वामी समाधिजन्यब्रह्मानन्दं भक्तिरसतुलनायां परमाणुतुल्यमपि न स्वीकरोति[3] । प्रतिपादितञ्च

---

१. देवान्तरेषु जीवत्वात् परमानन्दप्रकाशनात् ।
तद्योज्यं परमानन्दरूपे न परमात्मनि ॥ भक्तिरसायने २।७५

२. समाधिसुखस्यैव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात् , तस्मात् भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति ॥ भ० र० टीकायाम्

३. ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ॥ भ० र० सिं० १।१।१६

भागवतेऽपि यद् ब्रह्मानन्दापेक्षया भक्तिरसास्वाद एव परमश्रेष्ठः[1] इति। आनन्दवर्धनाचार्यमतेऽपि सर्वापेक्षया भक्तिरस एव सर्वश्रेष्ठः[2]।

शृङ्गारादिनवरसानां स्थायिभावा विभावादयश्च सर्वे रसोद्बोधकाः पदार्थाः लौकिका एव भवन्ति किन्तु भक्तिरसस्य स्थायिभावा विभावादयः रसोद्बोधकाश्च सर्वेऽलौकिका एव भवन्ति। यथा हि भक्तिरसस्य स्थायिभावो भगवद्विषयिणी रतिः, निखिलरसानन्दमूर्तिःसम्पूर्णसौन्दर्यनिधिर्भगवान् तस्य राधादिप्रियवल्लभा भक्तजनाश्चाऽऽलम्बनविभावाः, अनन्यासक्तिः, प्रेमाश्रु, रोमाञ्चः, दिव्योन्मादजन्यानेकानेकलोकबाह्यसीमातीतप्रणयव्यापाराश्चानुभावाः, हर्षादयश्च सञ्चारिभावा भवन्ति। एवञ्च भक्तिरसस्योद्बोधकाः सर्वे पदार्था अलौकिका एव। अत एव भक्तिरसज्ञानां विदुषां मते स्वीकृता पराभक्तिरेव सर्वश्रेष्ठरसः कथ्यते[3]।

एवं सत्यपि महदाश्चर्यं वर्तते यत् मलिनसत्त्वाश्रितेषु नवरसेषु यत्र केवलं चिदानन्दोंऽशमात्रमेव स्फुरति, तत्रापि साहित्यरसज्ञैः रसानुभूतिः स्वीक्रियते। एवमेव कान्ताविषयकरतिजन्यशृङ्गाररसः सर्वेषु रसेषु प्रधानरस इति तैः स्वीक्रियते। किन्तु 'एतस्यैवानन्दस्य मात्रया उपजीवन्ति' इत्यादिश्रुतिप्रतिपादितो यो ब्रह्मानन्दो वर्तते, तद्विषयकं सम्पूर्णाऽऽनन्दानां श्रेष्ठं साक्षाच्चिदानन्दात्मकं ब्रह्मानन्दादप्यधिकं भगवद्भक्तिजन्यपरमानन्दमपि रसरूपतयाऽस्वीकृत्य मिथ्याप्रशंसापोषितचाटुकारवृन्दवन्दितराजविषयकरतिसदृश्येव भक्तिर्भावरूपैवेति स्वीकृतमिति महत्कष्टम्? अपि च साक्षात् सुखविरोधिनो रौद्रकरुणभयानकवीभत्सादयो रसरूपेण स्वीकृताः किन्तु अनन्तगुणाधिकभगवद्विषयकरतिजन्याऽऽनन्दो रसरूपेण न स्वीकृतः, अतः परं किमाश्चर्यम्? अत एव ज्ञायते गतानुगतिकास्ते सर्वे आचार्याः सत्यासत्यविचारपराङ्मुखाः

---

१. या निर्वृतिस्तनुभृतां तव पादपद्म।
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात्॥
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्,।
किन्त्वन्तकासिलुलितात् पततां विमानात्॥

—भागवते ४।६।१०

२. या व्यापारवतीरसान् रसयितुं काश्चित्कवीनां नवा,
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं,
श्रान्ता नैव च लब्धमब्धिशयनं त्वद्भक्तितुल्यं सुखम्॥ ध्वन्यालोके पृ० ५६७

३. पराभक्तिः प्रोक्ता रस इति रसास्वादनचणैः॥

भक्तिचन्द्रिकायां, पृष्ठे १३० निर्णयसागरसंस्करणे।

सन्तः प्राचीनदुराग्रहैर्ग्रस्ता एव । अन्यथा कथं रसोद्बोधकसकलसामग्रीसमवेताऽपि भक्तिः रसरूपा न भवेत् ? विवेचने तु वस्तुतो भक्तिरस एव सर्वश्रेष्ठो रसः ।

केषाञ्चिन्मते भक्तिरसस्य पक्षद्वयं वर्तते । काव्यशास्त्रीयपक्षः, आध्यात्मिकपक्षश्च । तत्र काव्यशास्त्रीयदृष्ट्या शब्दनिबद्धैर्विभावानुभावसञ्चारिभावैः सम्पुष्टा भगवद्विषयिणी रतिरेव भक्तिरसत्वेनाभिव्यज्यते । आध्यात्मिकदृष्ट्या तु भक्तिः स्वयमेव रसो निगद्यते[१] अस्तु तावत् किन्तु भक्तानां दृष्टौ तु श्रवणकीर्तनादिद्वारा द्रुतस्य भक्तचित्तस्य भगवदाकारतैव भक्तिरसः । भक्तिप्रतिपादकैर्विभावादिनिरूपकैः काव्यैः प्रतीयमान आनन्दोऽपि भक्तिरस एव । भक्तमनसि स्थायिभावतया प्रतिबिम्बितः परमानन्दस्वरूपो भगवान् स्वयमेव रसत्वं समधिगच्छति[२] । सर्वेषामिन्द्रियाणां भगवद्रूपाऽऽनन्दमयत्वमपि भक्तिरस एव कथ्यते[३] ।

काव्यशास्त्रदृष्ट्या भक्तिरसस्य स्थायिभावो भगवद्विषयिणी रतिर्वर्तते[४] । शृङ्गाररसस्य च कान्ताविषयिका रतिः । यद्यपि रतित्त्वेनोभयत्रैक्यम्, तथापि सूक्ष्मदृष्ट्या भेदस्तत्रापि । यतो हि शृङ्गाररसस्य स्थायिभावो दाम्पत्यविषयिका रतिः, अत एव तत्र सुरतस्पृहा भवति[५], किन्तु भगवद्विषयकरतौ तादृशी न कापि वाञ्छा भवति भक्तानाम् । तत्र तु भगवतो दिव्यगुणादिश्रवणद्वारा द्रुतचित्तस्य निरवच्छिन्ना धारावाहिनी भगवदाकाराकारितावृत्तिः समुत्पद्यते[६] । तस्यामेव द्रुतचित्तवृत्तौ विभावादिना रसरूपतयाभिव्यक्तं परमानन्दलक्षणं स्थायिभावं रसं वदन्ति रसविदः[७] ।

---

१. ईश्वरविषया रतिरेव भक्तिरसः । वाचस्पत्ये बृहत्संस्कृताभिधाने

२. भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो रसतामेति पुष्कलम् ।। भक्तिरसायने १।१०

३. यत्र मनः सर्वेषामिन्द्रियाणामानन्दमात्रकरपादमुखोदरादिभगवद्रूपता तत्र भक्तिरस एव ।                    भक्तिमार्तण्डे पृष्ठे १२० ।

४. स्थायीभावोऽत्र सम्प्रोक्तः श्रीकृष्णविषया रतिः । भ० र० सिं० २।५।२

५. कामः शरीरसम्बन्धविशेषस्पृहयालुता । भक्तिरसायने २।३

६. मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।। भागवते ३।२९।११

७. भगवद्गुणश्रवणादिजनितद्रुतिरूपायां मनोवृत्तौ विभावादिभी रसरूपतयाभिव्यक्तो भगवदाकारतारूपरत्याख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोगः ( भक्तिरसः ) ।

भक्त्यधिकरणमालायाम् पृष्ठे १७ ।

विश्वनाथमतेऽपि विभावादिभिर्व्यक्तरत्यादिस्थायिभाव एव रसत्वं प्राप्नोति[१]। स्थायिभाव एव रस इत्यस्मिन् विषये भक्तिरसायनकारस्य विचारस्तु शैत्यपावनत्वेन 'गङ्गायां घोषः' इति वदौपचारिकमात्रमेव, न तु तथ्यमिति[२]। बोपदेवमते परमानन्द-रसस्वरूपतया व्यासादिप्रभृतिभिर्निरूपितस्य विष्णोस्तद्भक्तानां वा रसात्मकस्य चरितस्य श्रवणादिजन्यश्चमत्कार एव भक्तिरसः कथ्यते[३]। तस्माद् भक्तिरसएव सर्वेषु रसेषु श्रेष्ठतमः, सर्वेषामुपजीव्यश्च, । स एव प्राधान्येन मानवेषु श्रद्धोपासनादिरूपेण दृश्यते। अत एव भक्तिरसो भावमात्रमेव भवितुं नार्हति, स स्वतन्त्ररसतया स्वीकर्तव्यो रसिकैः।

यद्यपि संस्कृतकाव्यशास्त्रस्य महाविदुषा श्रीजगन्नाथाचार्येण सहृदयहृदयस्वाद्यत्वात् प्रत्यक्षप्रमाणेन तर्कसम्मतयुक्त्या च भक्तेः रसत्वं स्थापितम्, तथापि पुनः परम्पराभङ्ग-भीत्या तस्याः रसत्वं निराकृतम्। परम्पराभङ्गरूपदोषस्य निरासः पूर्वमेव कृतः।

भक्ताचार्यैर्भरतमुनिप्रतिपादितरससूत्रानुसारेण भक्तिरसः प्रतिपादितः। यद्यपि भक्तिरसस्य बीजं बोपदेवेन मुक्ताफले, लक्ष्मीधरेण च भगवन्नामकौमुद्यां, ततः पूर्वं नारदेन स्वकीये भक्तिसूत्रे, शाण्डिल्येन स्वीये भक्तिसूत्रे च स्थापितम्, ततः पूर्वमपि भक्तिरसस्य बीजं वैदिकवाङ्मयेऽपि समुपलभ्यते, किन्तु रसशास्त्रदृष्ट्या भक्तिरसस्य साङ्गोपाङ्गनिरूपणं तु रूपगोस्वामि मधुसूदनस्वामि-जीवगोस्वामि-नारायणभट्ट-कविकर्ण-पूर्ण-विश्वनाथचक्रवर्ति-करपात्रस्वामिप्रभृतिभिः कृतं स्वस्वग्रन्थेषु।

भक्तिरसज्ञानां मते भक्तिरस एव मूलरसोऽस्ति, अन्ये तु तस्यैव प्रभेदाः सन्ति। कविकर्णपूरमतेन शृङ्गारादयो नव, वात्सल्यमिति दश, प्रेम चेत्येवमेकादशरसेन सह द्वादशो भक्तिरसः स्वीकृतः[४]। अन्ये सर्वे भक्तिरसज्ञास्तु भक्तिरसमेव मूलरस-रूपेण स्वीकुर्वन्ति।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं भरतप्रतिपादितरससूत्रानुसारेण सर्वेषां रसज्ञानां मते तत्रापि भक्तिरसज्ञानां मते भक्ती रस एव भवितुमर्हति न तु भावः।

## (ग) भक्तिर्मूलभावो नास्तीत्यस्य खण्डनम्

भक्तिर्मूलभावो नास्तीति तृतीयाऽऽपत्तिरपि समीचीना नास्ति। यतो हि भक्ति-

---

१. विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिस्थायिभावः सचेतसाम्॥ साहित्यदर्पणे ३।१

२. स्थायी भावो रस इति प्रयोगस्तूपचारतः॥ भक्तिरसायने ३।१४

३. व्यासादिभिर्वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरितस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो भक्तिरसः। मुक्ताफले पृष्ठे १६७।

४. अलङ्कारकौस्तुभे पृष्ठे ११०।

रसज्ञानां मते भक्तिरसस्य भक्तिरेव मूलस्थायिभावः । तत्र विचारणीयोऽयं विषयो यद् भगवद्विषयिका भक्तिः स्थायिभावत्वं कथं प्राप्नोति । यतो हि पूर्णभक्तिस्तु प्रेमाभक्तिरिति कथ्यते । तस्याः पूर्वमेव रतिर्भक्त्वा स्थायिभावत्वं लभते । एवं चात्यन्तप्रवृद्धा भक्तिरेव प्रेमाभक्तिः । अपि च विभावादिभिः परिपोषिता रतिरेव रसत्वमेतीति सिद्धान्तः किन्तु प्रेमा भक्तिस्तु विभावादिं विनापि स्वसत्त्वेन रसत्वमधिगच्छति । रतिर्भावान्तरो वा स्थायिभावः सन्नेव रसरूपेण परिणमते । एवं रसरूपात् पूर्वं स्थायिभाव एव भावपदेनाप्युच्यते । इत्थं च भक्तेः कथं स्थायिभावत्वमिति । मनसः शुद्धसत्वप्रधानावस्था भावः, स एव भक्तितत्त्वस्य मूलस्थायिभावः, स च रति-प्रेम-स्नेहादिशब्देनाप्यभिधीयते । इत्थं भूतो भाव एव रसप्रक्रियया रूपगोस्वामिमतानुसारेण स्थायिभावः सञ्चारिभावश्चेति । तन्मते उभावपि भावपदेनाभिधीयते । भावाभिनिष्पत्तिविषयेऽधिकारिभेदप्रसङ्गे तेन प्रतिपादितम्—गरिष्ठम् (कर्कशचित्तम् तथा लघिष्ठम् (कोमलचित्तम् ) इति भेदेन तस्य साधकस्य भेदद्वयमिति । तत्र प्रथमोऽपि वज्र-सुवर्ण-जतुसादृश्येन त्रिविधः । तत्र भावरूपाग्निना वज्रचित्तं कदापि न द्रवति, सुवर्णचित्तं तापाधिक्येन द्रवति, जतुचित्त तु तापलेशेनापि मासृण्यमेति । भावविषये चित्तद्रवत्वविषये वा स्वामिमधुसूदनस्य विचारो प्रदर्श्यते—चित्त जतुरिव साधनैः प्रवहणशीलत्वमेति । यथाग्निना प्रवहणशीलं जतुः पात्रविशेषे संस्थाप्य विशिष्टाऽऽकृतिरूपेण परिकल्प्यते तथैव काम-क्रोध-लोभ मोह-हर्ष-विषादादिभिर्भावैः जतुरूपं चित्तं द्रवति, द्रवितं चित्तं यदा भगवदाकाराकारितं भवति तदा तदेव भक्तिरित्युच्यते । अत एव तस्य भक्तिलक्षणस्य भावोऽयं यदा श्रुतश्रवणादिभागवतधर्मैर्द्रुतं चित्तं धारावाहिकतां प्राप्य भगवदाकारतायां परिणमते तदा द्रुतमनोवृत्तिरेव भक्तिरिति कथ्यते[१] । द्रुतमनोवृत्तित्वं नाम भगवदाकाराकारितत्वम् ।

चित्तस्य भगवदाकारतायां प्राप्तायां सत्यां भगवद्रूपणैव सर्वे पदार्था दृश्यन्ते । यतो ह्युपाधिनिष्ठत्वेन यदा बिम्बस्य प्रतीतिर्भवति तदैव सः प्रतिबिम्बत्वेनाभिधीयते । स च भक्तेः पराकाष्ठा विद्यते । निखिल विश्वं भगवन्मयमेव ये भक्ताः पश्यन्ति त एव परमभागवता इति कथ्यन्ते । इत्थं च भगवदाकारता परिणतिरूपा भक्तिरेव मूलस्थायिभावत्वं प्राप्नोति । तत्र भगवान् परमानन्दरसरूपो यदा मनोविशिष्टं भगवत्स्वरूपं विभावादीनां संयोगादभिव्यज्यते तदा परमानन्दरूपभक्तिरसः समास्वाद्यते । अथवा प्रकारान्तरेण भगवदाकारतारूपपरिणतिरियं-यदाऽग्निसंयोगेन जतुर्द्रवति तदा तस्मिन् यो धातुरागो निक्षिपेत् पुनश्च तापकापगमे जतोः काठिन्ये सति स एव धातुरागः

---

१. द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता ।
　सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ भक्तिरसायने १।३

स्थायीरूपेण तिष्ठति। एवमेव यदा कामादिभिश्चित्तं द्रवति, तदा तस्मिन् यदि भगवत्प्रेमरूपधातुरागो निक्षिपेत् तदा सः चित्ते स्थायित्वं प्राप्नुयात्। चेतसः पौनःपुन्येन काठिन्ये सति तन्नैव मुञ्चति। पुनः काठिन्यानन्तरं चेतसो द्रवत्वे सति तत्र निक्षिप्तराग एव प्रतिभासते। यथा श्रूयते कामादिरागैर्यदा गोस्वामितुलसीदासः स्वपत्नीमनुगच्छतिस्म तदा तस्मिन् सा भगवत्रूपानुरागमेव स्थापितवती। तदन्तरं गोस्वामिमहोदस्य चित्त भगवदनुरागी बभूव। दृश्यतेऽत्रापि प्रथमं कामादिरागैर्द्रुतचेतस्येव भगवद्भावस्थापनम्, अतः प्रोक्तप्रक्रिया समीचीना प्रतिभाति। अत एव भगवद्भक्तिरेव स्थायिभावो भक्तिरसस्येति भक्तिरसज्ञानां विदुषां मतम्।

तत्र प्रष्टव्यमेतत्—प्रोक्तप्रकारेण भक्तिर्भगवदाकारितरूपा भगवत्प्रेमरूपा चेति द्विविधा भवितुमर्हति। अपि च भक्तिरेवाऽऽलम्बनविभावः स्थायिभावश्चेति भवेत्, तत्कथं सम्भवति? उच्यते तत्र, नात्र विरोधः, यतो हि बिम्बप्रतिबिम्बभावेन तयोर्भेदो व्यवहारसिद्धो वर्तते। प्रतिपादितञ्चैतत् रूपगोस्वामिना रतिविमर्शप्रसङ्गे भक्तिरसामृतसिन्धौ—

आविर्भूय मनोवृत्तौ व्रजन्ती तत्स्वरूपताम्।
स्वयं प्रकाशरूपाऽपि भासमाना प्रकाश्यवत्॥ १।३।२

अयमभिप्रायो मनोवृत्तौ भगवद्रतिरुत्पद्य भगवदाकारतां प्राप्नोति। एवं भक्तिः प्रकाशरूपा भवति किन्तु तस्याः प्रतीतिस्तु प्रकाश्यसादृश्यमाप्नोति। तत्र प्रकाश्यो भगवान् स्वयमेव। यथा प्रदीपो यस्मिन् प्रकोष्ठे प्रज्वलति, तत्र तस्य प्रकाशः तद्वदेव प्रतिभाति तथैव यदा रतिर्भगवन्तं प्रकाशयति, तदा सा भगवत्स्वरूपेणैव प्रतीयते। अनेन प्रकारेणाऽऽलम्बनविभावस्य स्थायिभावस्य चैक्यापत्तिर्दूरं पलायिता। इयमेव भगवद्भक्तिर्भक्तिरसाचार्याणामभिमता स्थायिभावरूपेण। तत्र तापकादीनामपि सहयोगो भवति। इत्थं च मिश्रितभाव एव तेषामास्वादगोचरः। अत एव तेषामभिमतोऽयं सर्वेषां रसानां मूलं भगवद्रतिरेवेति। तेनैव कारणेन भक्तिरसो मुख्यगौणभेदेन द्विविधः। एवञ्च मिश्रितभावानामास्वादगोचरस्यापि समाधानं जायते। तस्मान्नात्र कस्यापि विसंवादस्यावकाशः।

किन्तु शृङ्गारादिलौकिकरसेषु भगवदाकारताया निर्वाहः कथं स्यादिति चेदुच्यते तत्रापि लौकिकरसविषयेषु भक्तिरसज्ञा निभ्रान्ता एव। यतो हि 'आनन्दाद् ह्येवेमानि भूतानि जायन्ते'[1] इत्यादिश्रुत्या सर्वे प्राणिन आनन्दादुत्पद्यन्ते, आनन्देन जीवन्ति, तस्मिन्नेव विलयन्ति च। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्या केवलं ब्रह्मैव सत्यम्।

१. तैत्तिरीयोपनिषदि ३।२।१

विश्वस्य सम्पूर्णपदार्था ब्रह्ममया एव, अतस्ते सर्वे पदार्था आनन्दरूपा एव। अत एव कान्तादावपि ब्रह्मण एवाऽऽनन्दांशो वर्त्तते, किन्तु मायायाः प्रभावेण कान्तादिः ब्रह्ममयत्वेन न प्रतीयत इति त्वन्यत्।

आवरण-विक्षेपरूपेण मायाया द्वे शक्ती, तत्राऽऽवरणशक्त्या सत्यस्य तिरोधानं विक्षेपशक्त्या च नवीनतत्त्वस्य प्रकाशनं भवति। यथाहि - आवरणशक्त्या रज्ज्वाः तिरोधानं क्रियते, विक्षेपशक्त्या च तत्राविद्यमानस्य सर्पस्य प्रतीतिः। तथैव कान्तादौ मायाया आवरणशक्त्या ब्रह्मण आनन्दांशस्तिरोधीयते, विक्षेपशक्त्या चासत्कान्तादिश्च पुनः प्रतीयते। कान्तादावप्यानन्दस्य कारणं सुखस्वरूपचैतन्यघनं ब्रह्मैव। अतो मनोवृत्तेस्तदाकारतायां सत्यामप्यावरणशक्त्या तन्न प्रतीयते। कान्तादौ ब्रह्म सत्यमेवास्ति, किन्तु ब्रह्मरूपेण न ज्ञायते, ज्ञायते तु कान्तात्वरूपेणैव। यदा विभावादीनां संयोगात् सत्त्वोद्रेकादिनाऽऽवरणभङ्गो जायते तदैव क्षणमात्रं ब्रह्मानन्दोऽनुभूयते। तत्र केवलमावरणस्यैव भङ्गः, न तु तत्र विक्षेपस्य सर्वथाऽभावो भवति। अतो ब्रह्मानन्दस्य प्रतिभासत्वेऽपि कान्तादीनां प्रतीतिर्भवत्येव। तत्र लौकिकवाक्यं प्रवर्त्तकं भवति, किन्तु काव्यवाक्यं तु प्रवर्त्तकं न भवति, अपि त्वास्वादयोग्यमेव भवति। एवञ्चाऽऽनन्दांशपूर्ण-कान्तादीनां प्रतिभासश्चेतसि भावरूपतां धारयति किन्तु तत्र जाड्यस्य सम्मिश्रणमस्ति। अतस्ते भावाः पूर्णरसत्वं न प्राप्नुवन्ति, किन्तु जाड्यस्यामिश्रणात् भगवद्विषयकभावः पूर्णानन्दत्वं प्राप्नोति। विवेचनस्य तात्पर्यमिदमेव यद् भगवद्विषयिका भक्तिरेव मूलभावो स्थायिभावो वा विद्यते।

## (घ) भक्तेर्निष्क्रियत्वनिरासः

भक्तिरसविरोधिभिरुच्यते यद् भक्तिर्निष्क्रिया भवतीति। यतो हि तत्र निर्जीवमूर्ति प्रत्यात्मनिवेदनासक्तित्वेन भक्तौ भाववेगानामौत्कट्याभावात्तत्र क्रियाहीनत्वं भवति। अत एव भक्ती रसो भवितुं नार्हति, अपि तु केवलं भावमात्रमेव भवितुमर्हति।

तदेतन्न समीचीनम्। यतो हि श्रीमद्भागवत-भक्तिरसायनोज्ज्वलनीलमणि-भक्तिरत्नावली-भक्तिरसामृतसिन्धु-भक्तिरसार्णव-गीतगोविन्दप्रभृतिभक्तिग्रन्थेषु भक्तानां भक्तिप्रभावापन्नानुभावाः प्रभावपूर्णतया च वर्णिताः, येन निष्क्रियत्वस्यारोपः स्वयमेव खण्ड्यते। तत्तद्भक्तिग्रन्थेषु भक्तानां क्रिया विशदरूपेण वर्णिताः, तर्हि कथं तस्या निष्क्रियत्वम्? मानवानां ज्ञान-क्रिया-भावनारूपत्रिविधव्यापारेषु भावनैव कार्ये प्रेरकतया मुख्या। भक्तौ भावनायाः प्राणवत्तया भावावेगानां प्राधान्यमिति भक्तिशास्त्रप्रवर्त्तकाना-मभिमतम्। स्वेष्टं प्रति भावनाया उत्कृष्टावस्थायां यत्र तीव्रवेदनयाऽश्रुकणाः निःसरन्ति

तत्रैवाऽऽनन्दस्य शतसहस्त्रपाटलप्रसूनान्यपि विकसन्ति। इत्थंभूताया वेदनाया आनन्दस्य च विरोधाभासोऽन्यत्रदुर्लभैव। इत्थंभूतदिव्योन्मादविशिष्टावस्थायामेव भक्तः कदाचित् हसति, कदाचिद् रोदिति, कदाचित् प्रलपति, कदाचित् तूष्णीं भवति, कदाचिच्चोच्चैः हरिगुणगणं गायति[1]।

अपरञ्च भक्ता निर्जीवमूर्तिं प्रत्यात्मनिवेदनं न कुर्वन्ति किन्तु मूर्त्युपलक्षितं निखिलजगन्नियन्तारं चराचरव्यापिनं चेतनरूपेण सर्वत्र समस्थितं सर्वान्तर्यामिणं सच्चिदानन्दघनं परमप्रेमास्पदं परमेश्वरं प्रत्यात्मनिवेदनं कुर्वन्ति।

महाकविजयदेवो गीतगोविन्दे राधिकामेकान्तप्रेमनिर्भरभक्तरूपेण निरूपयन् तस्याः प्रेमोन्मादस्यातीव मर्मस्पर्शिचित्रणमकरोत्। यथाहि विरहोन्मादिन्या राधिकाया वक्षःस्थलस्थमालापि स्वकृशतनुवद् भारतयैव तया समनुभूयते। सा सरसमसृणचन्दनस्य लेपमपि सशङ्कतया विषवत् पश्यति, मदनानलदग्धदेहा उच्चैर्निःश्वसिति। जलकणयुक्ता नालविहीननलिनीव नेत्रे इतस्ततो निक्षिपति। सन्ध्याकालेऽपि कपोलतलं करपल्लवेष्वाश्रित्य हरिं ध्यायति। सा किसलयकुसुमशय्यामग्निमिव विलोकयति। विशुद्धप्रेमभावनया सा हरिं रटति पौनः पुन्येन। सा कदाचिद् वेदनाधिक्येन सीत्करोति। कदाचित् विलपति। कदाचिदुद्भ्रान्ततया इतस्ततः परिधावति। कदाचिद् भूमौ पतति। कदाचिच्च मूर्च्छति। इत्थं च राधिकाया बहवोऽनुभावाः परिदृश्यन्ते। तत्कथं तत्र निष्क्रियता वक्तुं शक्यते। अतो भक्तिरसे निष्क्रियत्वस्याऽऽरोपो न कर्त्तव्यः[2]। एवमेव निखिलरसानन्दमूर्तिर्भगवान् श्रीकृष्णोऽपि स्वप्रियतमाया विरहतापेन दह्यते। दीर्घमुष्णं च निःश्वसति। समुत्सुकनयनैश्चतुर्दिक्षु पश्यति। कदाचिदन्यमनस्कतया कुञ्जे गच्छति निर्गच्छति चेत्यादयः सर्वे भावाः राधाकृष्णयोरेकान्तप्रेमनिर्भरभक्तानामेव वर्तन्ते। ते च भगवद्विषयकानुभावाः। यदि राधिका 'एकान्तप्रेमनिर्भरभक्तरूपेण' न निरुप्यते चेत्तर्हि जयदेवस्य विलासिन्या राधायाः श्रीकृष्णस्य च विलासकला अकालकवलिता भवेत्। अस्तु विचार्यतेऽधुना यस्मिन् भक्तिरसे एतावदधिकतलस्पर्शिमानसिकदशानां मार्मिकाभिव्यञ्जना दृश्यते, तत्र च प्रतिक्षणं जीवनस्यापारपरिस्थितीनां शतसहस्त्रश उच्चावचव्यापारा दृश्यन्ते, तत्र निष्क्रियत्वस्याऽऽरोपो महान् भ्रम

---

१. एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः।
हसत्यथोरोदिति रौति गायत्युन्मादवन्नृत्यतिलोकवाह्यः॥ भाग० ११।२।४०
क्वचिद् रुदन्त्यच्युतचिन्तया क्वचिद् हसन्ति नन्दन्तिवदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः॥
भागवते ११।३।३२

२. गीतगोविन्दे-देशाख्य-एकातालीताले-अष्टपद्याम् ६

एव । यतोहि तत्र विस्मयहर्षाहंभावादयः पूर्वोक्तानुभावाश्च सन्ति । भक्तिभावापन्नपुरुषोऽहर्निशं भगवतो भजने कीर्तने स्मरणे वन्दानादिक्रियासु च संलग्नो भवति । येनान्यजनोऽपि तस्य प्रभावेण प्रभावितो भवति । इत्थंभूतेऽपि तत्र निष्क्रियत्वस्याऽऽरोपोऽरमणीयविचार एव तथाऽन्धपरम्परानुमोदनमात्रमेव प्रतीयते । कथमन्यथा सक्रियायामपि भक्तौ निष्क्रियत्वस्याऽऽरोपः स्यात् ।

## (ङ) भक्तेः सार्वजनीनत्वम्

भक्तिरसस्य व्यापकत्वे सार्वजनीनत्वे वा किमपि वक्तव्यं न नास्ति, यतो हि भक्तिः सर्वस्मिन् काले सर्वेषु देशेष्वत्यधिकमहत्त्वपूर्णरूपेण दृश्यते । प्रमाणं चात्र सर्वदेशेषु विभिन्नरूपेण नामान्तरेण च तस्य विपुलवाङ्मयमेव । तस्याः बहवो भेदा यथाहि-देशभक्तिः, प्रभुभक्तिः, राजभक्तिः, स्वामिभक्तिः, मातृभक्तिः, पितृभक्तिः, गुरुभक्तिः, देवभक्तिरित्यादयः । मराठिलेखकश्रीशिवरामपन्तमहोदयेन देशभक्तिरसः, तस्य स्थायिभावश्च देशाभिमानमिति प्रतिष्ठापितम्[1] । तन्मते यत्र निरभिमानतया श्रद्धया च प्रभोर्गुणानां संकीर्तनम्, यत्र च स्वाभिमानसहितेन नम्रतापूर्वकेण श्रद्धाभावेन देशस्य गौरवं गीयते तत्र तत्र भक्तिरसः स्वीकर्त्तव्य एव । तत्रापि प्रथमो भगवद्भक्तिरसः, द्वितीयश्च देशभक्तिरसः, अन्यत्र तु भावानुकूलो रसो मन्तव्यः[2] ।

डा० बाटवेमहोदयेन 'रसविमर्शः' नामकग्रन्थे भक्तिरससमर्थकानां विदुषां मतं समुल्लिख्य मानसशास्त्रानुसारेण भक्तिरसो वैशद्येन व्यापकरूपेण च स्थापितः । तन्मतानुसारेण मानवजातेरारम्भकालादेव सर्वेषु देशेषु विभिन्नरूपेण भक्तिर्नैरन्तर्येण प्रचलति । प्रमाणं चात्र निखिलवैदिकवाङ्मयमेव ।

पाश्चात्त्यदृष्ट्याऽऽधुनिकानां मते सर्वप्रथमं मानवैः प्रतिक्षणं परिवर्तमानं त्रिलक्षणं जगद् दृष्टम् । दृष्ट्वा चाऽऽश्चर्यान्वितैः प्रभावितैश्च तैर्मानवैर्विभिन्नदेवताः कल्पिताः । अत एव तस्य परिणामस्वरूपं वैदिकवाङ्मयेषु वायु-वरुणाऽऽदित्यरुद्रेन्द्रप्रभृतयश्च बहवो देवाः समुद्भाविताः । एवञ्च निखिलनिरीहैक एव परमात्मा 'एकं सद् विप्रा बहुधा वदन्ति' इत्यादिना नानारूपेण निरूपितः । प्रोक्तदेवानां शक्तिं पराक्रमं च विलोक्य मनुष्या विस्मयविमुग्धा बभूवुः । ते मानवाश्चिन्तितवन्तो यद् यदि वयं तेषां शक्तिपुञ्जभूतानां देवानां केनापि प्रकारेण प्रसादं लब्धुं प्रभवेम तर्हि ते देवा विपत्तौ साहाय्यं करिष्यन्ति । एवञ्च स्वरक्षाभावनयाभिभूता मानवा देवानुपासितवन्तः । तान् देवान् प्रति प्रथमं मानवानां मनसि विभ्रमस्य भावना जाता, पश्चात् सैव शनैः

---

१. जीवन आणि साहित्ये पृष्ठे ४१ ।

२. रससिद्धान्तः स्वरूप और विश्लेषण नामकग्रन्थे पृष्ठे २८५ ।

शनैः श्रद्धाभावनायां परिणता बभूव, कालान्तरे च सैव मनोरागरूपेण रूपान्तरिता जाता, तस्या भावनायाः परिणामस्वरूपतयैव भक्तभगवतोः ( आराध्याऽऽराधकायोः ) मध्ये विविधस्नेहसम्बन्धसूत्रमवतीर्णम् ।

भारतीयवैदिकदर्शनपुराणकाव्यशास्त्रादिदृष्ट्या मानवसमुदायस्य भारतीयपारिवारिकजीवने मुख्यतया स्वामिभावरूपसम्बन्धः, सेवकभावरूपसम्बन्धः, सुहृद्भावरूपसम्बन्धः, वात्सल्यभावरूपसम्बन्धः, दाम्पत्यभावरूपसम्बन्धश्चेति पञ्चविधोथ्यः सम्बन्धः स्थापितः, स एव स्वपरभेदाभावाद् भक्तभगवतोऽपि मध्ये समुद्भावितः । एतेषां सम्बन्धानां पृष्ठभूमिकाऽऽधारेणैव भक्तानां शान्तस्वभावः, दास्यस्वभावः सख्यस्वभावः, वात्सल्यस्वभावः, मधुरस्वभावश्चेति पञ्चस्वभावा भक्तिशास्त्रे निरूपिताः । भक्तः स्वस्वभावानुसारेण स्वेष्टदेवे प्रोक्तपञ्चविधसम्बन्धेष्वनन्यतमैकस्नेहसम्बन्धमाध्यमेन तदनुरूपगुणान् स्वस्मिन् समारोपयति । तेनैव भावेन भक्तः स्वेष्टं समाराधयति । प्रोक्तपञ्चविधसम्बन्धेषु दाम्पत्यसम्बन्धः, तस्य माधुर्यभावश्च भक्तिशास्त्रे सर्वश्रेष्ठः स्वीक्रियते । यतो हि तस्य माध्यमेन मनोरागश्चरमोत्कर्षं प्राप्नोति ।

आध्यात्मिकसाधनान्तर्गते सामान्यतः परमेश्वरानुभूतिः रूपकशैल्या, दाम्पत्यभावपरकशैल्या चेत्यादिप्रकारेण व्यक्ता भवति । तत्र दाम्पत्यभावपरकशैल्येव सर्वोत्तमा, यतो हि तस्या माध्यमेन भक्तो निःसंकोचभावेन सर्वथा सम्भ्रमरहितः सन् भगवतः समक्षं स्वात्मानं प्रकटयति ।

उपरि लिखितो भक्तस्य भावो निर्गुणब्रह्मापेक्षया सगुणब्रह्मण्यधिकमुपयुज्यते । अतो ज्ञानमार्गापेक्षया भक्तिमार्गस्य प्राधान्यमभवत् । किन्तु ज्ञानिभक्तेष्वपि पूर्वोक्तभावनाद्वयं भवति । अत एव तत्र प्रतीकोपासना प्रारब्धा । रामकृष्णादयश्च भगवद्रूपेण पूजिताः । भक्तैर्भगवता सह प्रायः सर्वेऽपि लौकिकस्नेहसम्बन्धाः स्थापिताः । एवञ्च परमेश्वरानुरागस्य भावना संमिश्रिता जाता । भक्तैर्भगवतो धात्वादिप्रतिमा मनोमयप्रतिमा च कल्पिता । भक्तिकाव्यस्य परिशीलनेन ज्ञायते यत् भगवतो मनोमयप्रतिमां प्रति भक्तस्य बहवः सम्बन्धा भक्तिकाव्ये प्रतिष्ठिताः । तस्मादेव कारणादानन्द - विषाद - दैन्य - चिन्ता - व्याधि - भय - गर्व - व्रीडा-जिज्ञासाप्रभृतयो विविधमधुरभावा भक्तिशास्त्रेऽनायासेन समावेशिताः । एवञ्च प्रोक्तविविधसम्बन्धेषु ( भावेषु ) परमोत्कृष्टश्रृङ्गारभाव एव, यो भावसाधनायां भक्तिरसरूपेण परमोन्नयनं प्राप्तः । गोपीकृष्णयोः सम्बन्धः रूपकशैल्या जीवात्मपरमात्मरूपेण स्थापितः । एवञ्च कालान्तरे लौकिकश्रृङ्गार एव भक्तिरूपेण रूपान्तरितो बभूवेति केषाञ्चिन्मतम् । इयं भावना न केवलं श्रीवल्लभ-चैतन्य-राधावल्लभादिसम्प्रदायेष्वेव, अपि तु रामोपासनायामपि, ततः परमाधुनिकसूफीसम्प्रदायेऽपि परिलक्ष्यते । ततः

पूर्वमपि १३०० ईशवीयतमे थामस डी० हेल्समहोदयेनापि स्वग्रन्थे ईसाइधर्मस्य भक्तिस्वरूपं तादृशमेवोपस्थापितम्। अत एव भक्तेर्मूलाधारो रतिर्भावो भवितुं नार्हति, अपि तु स्थायिभावतया भक्तिरस एव मन्तव्यः।

व्यापकत्वेन च भक्तिरसे एवान्ये सर्वे रसाः समाविश्यन्ते, अत एव रूपगोस्वामिना शान्त-दास्य-सख्य-वात्सल्य-मधुराः पञ्चैव मुख्यभक्तिरसाः तथा शृङ्गारादिसप्तरसाः गौणभक्तिरसाः स्वीकृताः। ते च गौणसप्तरसाः मुख्यरसानां सञ्चारिभावतयैव परिकल्पिता भक्तिरसज्ञैः। अपि च भक्तिरसे विविधभावानां यावदधिकं सम्मिश्रणं दृश्यते, न तावदधिकमन्यरसेषु दृश्यते। यस्मिन् रसे भावानां यावदाधिक्यं भवति, स रसः तावदेव प्रभावोत्पादकः समास्वाद्योग्यश्च भवति। अत एव शृङ्गारः करुणश्च भयानकवीभत्सरसापेक्षयाऽधिकमहत्त्वपूर्णो वर्तते। वस्तुतो भगवता सह संस्पृष्टा सर्वे भावा नूतनदिव्यालोकैश्चमत्क्रियन्ते। उत्कृष्टाऽऽस्वादयोग्याश्च जायन्ते।

मनुष्येषु प्राय आकर्षणविकर्षणयोरथवा रागद्वेषयोश्च विशिष्टं प्रवृत्तिद्वयं प्राप्यते। तत्र रागैर्मानवस्य विविधाऽऽकर्षणप्रवृत्तीनामभिव्यञ्जना भवति। इदमेव रहस्यं प्रेमभक्तिरसस्य कल्पनायाः। मनुष्यस्येयं शाश्वतवृत्तिः प्रेमरतिर्वा कान्ताविषयकत्त्वेन, देवतादिविषयकत्वेन, अपत्यविषयकत्वेन वा क्रमशो यदि शृङ्गाररसः, भक्तिरसः, वात्सल्यरसश्च कथ्यते चेत्तत्र का क्षतिर्भवेत्? वस्तुतो व्यापकत्वादुदात्तत्वाच्चमत्कारपूर्णत्वाच्च भक्तिरससमक्षं शृङ्गारादिरसाः क्षुद्रायन्ते। अलौकिकभक्तिरसस्य रसत्वं महत्त्वं च प्रतिपादयन् श्रीमधुसूदनस्वामी स्पष्टमभिधत्ते यदन्यरसा इव विभावादिभिः संयोगैर्भक्तिरपि चित्रफलकवदह्लादकारिका सती रसत्वं प्राप्नोति। रसज्ञैर्देवादिविषयिका या रतिर्व्यक्तव्यभिचारिभावश्च भावरूपेण कथितः, न तु रसरूपेण तत्तु समीचीनं नास्ति। यतो हि तादृशीभावना तु जीवांशविशिष्टसामान्यदेवान् प्रत्येव संगच्छते, न तु साक्षात् परमानन्दरसस्वरूपपरमात्मानं प्रति भवेत्। यतो हि सामान्यदेवादिभिः सम्बद्धा रतिः परमानन्ददायिनी भवितुं न शक्नोति, किन्तु तद्भिन्ना परमात्मविषयिका रतिः (भक्तिः) परमानन्दरूपपरमात्मनो भक्तिश्च परानन्दप्रकाशिनी भवति। कान्तादिविषयकशृङ्गाररसेषु रसत्वस्य यथेष्टं परिपोषणं कदापि न संभवति। किन्तु भक्तिरसे पूर्णाऽऽनन्दः समनुभूयते। काव्यप्रकाशकारेण मम्मटाचार्येण रसस्य यद् व्यापकं लक्षणं निष्पादितम्, तत्तु वस्तुतो भक्तिरसे एव सम्भवति। तेन प्रतिपादितं रसस्य स्वरूपमन्यरसापेक्षया भक्तिरसे एव परिदृश्यते[1]।

---

१. पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारी शृङ्गारादिको रसः। का० प्र० ४।२६-२८ टीकायाम्

यदा भगवद्रतिरूपस्थातिभावः, निखिलरसानन्दमूर्तिपरमात्मरूपाऽऽलम्बनविभावं प्राप्य रामाञ्च-हर्षाश्रुपातादिसञ्चारिभावानां संयोगैर्भक्तिरसरूपेण परिणमते तदा भक्तिभावापन्नसहृदयभक्तजनानां मनसि लोकोत्तरः, दैवीविभूतिसम्पन्नोऽलौकिको भक्तिरसोऽनुभूयते। इत्थं च भक्तिरसास्वादजन्यपरमानन्दरससमुद्रे निमग्ने सति सर्वाणि भौतिकसुखानि गोष्पदानि मन्यन्ते भक्तिरसज्ञाः।

भक्तिरसस्य तादृशवैशिष्ट्येन विमुग्धः सन् निर्गुणोपासकः कबीरोऽपि प्रेममार्गस्य पथिकः सञ्जातः। डिमडिमघोषेण समुद्घोषितं तेन यद् भक्तिं विना निखिलदोषमूलस्य संसारस्य जन्ममरणरूपभवबन्धनं न विनश्यति। अत एव तेन हरिः प्रियरूपेण स्वात्मानं च प्रियारूपेण स्वीकृत्य विरहिण्याः स्वस्या आत्मदशायाः यादृशं माधुर्यमयं हृदयग्राह्य मर्मस्पर्शिनिवेदनं कृतं तथाऽन्यत्र दुर्लभमेव[1]। एवं भक्तिरसनिमग्ना मीरा सम्पूर्णैश्वर्यं लोकलज्जां च विहाय गिरिधरगोपालेन सह तादात्म्यानुभावार्थं सततं सत्प्रयासं कृतवती। एवमेव प्रेमोन्मत्तो भूत्वा गौराङ्गमहाप्रभुचैतन्यः समस्तोत्तरभारतं भगवद्भक्तिरसेनाऽऽप्यायितवान्। तेनैव भक्तिरसेनानुरञ्जितो मंसूरमहोदयोऽपि शूलारोहणमपि स्वीचकार। अपि च भगवद्भक्तिरसायनेन सतृप्तः ईशामसीहमहोदयो गाँधिमहोदयश्चापि भगवच्चरणारविन्दमेव गृहीतवान्। एवं च दृश्यते विश्वस्य वाङ्मये सर्वदा बाहुल्येन तादृशा दृष्टान्तः समुपलभ्यते येन भक्तिरसस्य सार्वजनीनत्वं व्यापकत्वं च परिज्ञायते।

अलौकिकभक्तिरसस्य चमत्कारेण चमत्कृतैर्भक्तिरसरसिकैः कैलाशधाम, गोलोकादयः, स्वर्गापवर्गादयः, सार्वभौमसामाज्यं, योगसिद्धयः, धर्माः, पुरुषार्थचतुष्टयं, सालोक्यादिमुक्तिचतुष्टयेत्यादीनि सर्वाण्यपि त्यज्यन्ते। एवञ्च भक्तिरसज्ञाः साधकाः स्वेष्टं विहाय धर्मार्थकामकमोक्षमपि नाभिलषन्ति, अभिलषन्ति च केवलां भक्तिमेव। कामुकस्य कामिनीं प्रति, लुब्धकस्य धनं प्रतिः यादृशोऽनुराग आकर्षणं वा भवति तादृशैव भक्तस्य स्वेष्टदेवं प्रत्यविचलोऽनुरागो जन्मजन्मान्तरपर्यन्तं भवति। एवञ्च दृश्यते यद् भक्तिरसवच्चमत्कारो न कुत्रापि लभ्यते। अनया दृष्ट्याऽपि भक्तिरसस्य प्राधान्यम्। हिन्दीसाहित्ये तु कबीर तुलसी-सूर-रसखान-प्रभृतिभिर्निर्गुणसगुणोभयविधोपासकैर्भक्तसाधकैर्विपुलं भक्तिवाङ्मयं व्यरचि।

सामान्यतो मानवजीवनमतिविस्तृतं सङ्कीर्णञ्च विद्यते। अत एव मनुष्यस्य मनोभावानामियत्ता नास्ति। अतो ये विद्वांसः शृङ्गारादिनवरसातिरिक्तं भक्तिरसं स्थापितवन्तः, तेषां प्रयासः प्रशंसनीय एव। अनया दृष्ट्या भक्तिरसोऽतिविस्तृतस्तथा तस्य विपुलं वाङ्मयमपि प्रशंसनीयमेव। श्रीरूपगोस्वामिश्रीजीवगोस्वामिप्रभृतिभिर्गौ-

१. बीजके शब्द ९४

डीयवैष्णवाचार्यैश्च राधाकृष्णयोर्लीलाविलासमेव गृहीत्वा सावयवो भक्तिरसो निरूपितः, सर्वश्रेष्ठरसरूपेण स्थापितश्च । पूर्ववत्त्यलङ्कारशास्त्रे रसशास्त्रे कामशास्त्रादिषु वा व्यवहृतान् पारिभाषिकशब्दान् तत्र वर्णितान् विभावानुभावसञ्चारिभावान्, नायकनायिकभेदादींश्च भक्तिरसज्ञाः स्वीकृत्य नायकशिरोमणिश्रीकृष्णस्य नायिकाशिरोमणिराधिकायाश्च लीलापरिवेशरूपेण भक्तिरसमपूर्वतया विस्तारितवन्तः। एतत्सर्वं निरूपणं वैष्णवाचार्याणामाध्यात्मिकसिद्धान्तस्य मूलं वर्तते। अनन्यतमभक्तिरसस्य प्रथमं चरमं च लक्ष्यं भगवद्भक्तिप्राप्तिरेव । एवञ्च भक्तेर्गूढतत्वानि साहित्यशास्त्रीयपारिभाषिकशब्दावल्यामभिव्यज्य साहित्यशास्त्रस्य च विशिष्टाङ्गं शृङ्गारं भक्तिसिद्धान्तनिकषे परीक्ष्य गौडीयवैष्णवाचार्याः काव्यानुरागिभ्यो भगवद्प्रेमानुरागिभ्यश्च भक्तिरसरूपेणानुपमं रसायनं प्रदत्तवन्तः। एवञ्च प्रतीयते वैष्णवाचार्याणां भक्तिरसविवेचनं पूर्णत आध्यात्मिकं वर्तते । तच्चाऽऽत्मपरमात्मनोरान्तरिकसंयोगस्य मार्मिक्यभिव्यक्तिर्विद्यते । वृन्दावनस्थगोस्वामिपादैर्भक्तिरसो यथा व्याख्यातः न तथा कैश्चिदन्यैः काव्यरसज्ञैर्विवेचितः। मनुष्यहृदयस्थपरमात्मन उपलब्धये तेषां वैष्णवाचार्याणां भक्तिरसस्थापनप्रयत्नोऽतीव श्लाघनीयो विद्यते । अत एव मुमुक्षुभिर्भक्तिरस एव समुपासनीयः।

पूर्वप्रतिपादितभक्तिरसविवेचनस्य निर्गलितार्थोऽयं यद् भक्तिरससदृशः समास्वाद्यः, मोक्षोपकारकः, व्यापकः, सार्वजनीनः, सुलभः, परमानन्दप्रदायकः, लोकोत्तरः, विलक्षणः, विराट्, विशिष्टविपुलवाङ्मयपरिपुष्टो भक्तिशास्त्रस्य मानसशास्त्रस्य दर्शनशास्त्रस्य काव्यशास्त्रस्य च निकषेऽपि परिपूर्णतया शुद्धत्त्वेनावतीर्णोऽन्यो रसो नास्ति । एवं सत्यपि भक्तिरसस्यास्वीकारे नास्ति किमपि समुचितं कारणमिति । भक्तिरसविषयकस्य धार्मिकस्य साहित्यिकस्य च विपुलविशिष्टसम्पत्तेर्विद्यमानत्वेऽपि तथा च रससिद्धिविषयकसम्पूर्णविशिष्टसामग्रीणां समवायेऽपि भक्तेः रसत्वास्वीकारे गतानुगतिकानां परम्पराभिमानादतिरिक्तमन्यत् किञ्चिदपि कारणं न प्रतिभाति । एवञ्च ज्ञायते काव्यशास्त्रस्य सम्यगध्ययनदृष्ट्या विकासदृष्ट्या चैतादृशो मिथ्या परम्पराभिमानः सर्वथा उपेक्षणीयः।

वस्तुतो भक्तिरस एव रसानां राजा विद्यते । स एव सरसभारतीयवाङ्मयस्य प्रथमो रसः, यत्र सर्वे रसा अनायासेनान्तर्भवन्ति । भक्तिरसस्य सर्वश्रेष्ठसमर्थकेन श्रीरूपगोस्वामिना पारलौकिकदिव्यरसराट्भक्तिरसस्य व्यापकतां निस्सीमतां च प्रतिपादयता सत्यमेवोक्तं यद् भक्तिरसो निःसीमजलधिसदृशोऽतुलः, कुलरहितो दुर्विगाहश्च वर्तते । अत एवालौकिकदिव्यरसराट्भक्तिरसार्णवस्य स्रोतसि निमज्ज्यैव भक्तिरसः संस्पृश्यते[1] । एवञ्च ये रसज्ञाः साधकास्तत्र गत्वा सानुरागाः सन्तः साधनां कुर्वन्ति त एव भक्तिरसं

---

१. उज्ज्वलनीलमणी– २६

प्राप्नुवन्ति, नान्यः। संसारसागरनिवर्त्तकं भक्तिरसं विना जन्ममरणबन्धनेभ्यो विमुक्तये नास्ति कश्चिदन्यः पन्थाः। अत एव श्रुतावुद्घोषितं यद्-'नान्यः पन्था विद्यतेऽयनाय' इति

## [अ] शान्तरसे भक्तिरसस्य नान्तर्भावः

रसान्तरेऽन्तर्भावरूपा द्वितीयाऽऽपत्तिरपि न समीचीना, यतोहि सर्वेषां रसानां पृथक्-पृथक् स्थायिभावो वर्तते, सर्वेषां च स्वस्मिन्नेव पूर्णत्वमप्यस्ति। स्वयमेव पण्डितराजजगन्नाथेन भक्तिरसस्य स्थायिभावो भगवद्विषयिका रतिः, शान्तरसस्य च निर्वेदः, अपि च भक्तिरसो रागात्मकः, शान्तरसश्च वैराग्यात्मकः, अतस्तयोः परस्परं नान्तर्भाव इति स्वीकृतम्। अन्यच्च शान्तरसस्य विषयो ज्ञानमार्गः, भक्तिरसस्य च प्रेममार्गः। मोक्षरूपपुरुषार्थेन सह शान्तरसस्य सम्बन्धः, केवलमद्रुतचित्तवृत्तिः पुरुष एव तस्याधिकारी, किन्तु भक्तिरसस्य सम्बन्ध ऐकान्तिकरूपेण भगवत्प्रीत्यर्थेन भक्तिरूपपुरुषार्थेन सह वर्तते, आराध्यसुखत्वमेव तस्योद्योगमात्रम्, अतो द्रुतचितवृत्तिः पुरुषो भक्तिरसस्याधिकारी इत्यादि सर्वं प्रपञ्चित भक्तिरसायने। तयोः पार्थक्य स्वीकुर्वता मधुसूदनस्वामिना भक्तिरसायने प्रपञ्चितं यदन्यजीवांशदेवादिसम्बन्धतया तद्विषयकरतिर्भावो भवतु, किन्तु निखिलरसानन्दमूर्तिपरमानन्दपरमप्रेमस्वरूपपरमात्मना सह सम्बद्धतया ब्रह्मानन्दप्रदायिनी रतिर्भक्तिरस एव परिणमते। अतो भक्तिरसो दशमो रसः स्वीकर्त्तव्यः[1]।

ज्ञानमार्गमनुसरन् नित्यानित्यवस्तुविवेकद्वारा मोक्ष एव शान्तरसस्य प्रतिपाद्यः, किन्तु भक्तिरसस्य मुख्यप्रतिपाद्याऽऽत्मनिवेदनासक्तिः, यस्याश्चरमं लक्ष्यं भगवत्यनुरक्तिरेव। भक्तिरसे भगवत्प्रीतिवाञ्छाया एव परमं प्राधान्यम्, किन्तु शान्तरसे वासनानां पूर्णं बलयस्य निर्विकारत्वस्यैव च प्राधान्यम्। भक्तिरसे तु लौकिकमोहमायापरकसम्बन्धपरित्यागपूर्वकं निजस्वभावानुसारेण परमात्मना सह तदनुरूपं स्वसम्बन्धिना सह विरहपीडानुभूतिः, मिलनाऽऽनन्तानुभूतिश्च तीव्रतया साधकैरनुभूयते। अपि च शान्तरसे आत्मज्ञानमपरिहार्यं किन्तु भक्तौ हृदयस्य पवित्रतैवावश्यकी। शान्तरसे लौकिकविषयवस्तु प्रति जुगुप्सायाः प्रामुख्यम्, यतो हि जुगुप्सया एव लौकिकविषयं प्रति वैराग्यं जायते। भक्तिरसे यद्यपि जुगुप्सा न सर्वथा परिहार्या तथापि तस्याः प्रदर्शनं भगवत्समक्षं स्वदीनता हीनता-प्रदर्शनार्थायैव। किन्तु भक्तिरस्य सर्वप्रमुखमधुररसे जुगुप्सा सर्वथा परिहार्यैव, तत्र तस्याः सर्वथाऽभावो विद्यते। यतो हि तत्र भक्तिरसे शक्ति-शक्तिमतोश्च किं वा भगवतस्तस्य प्रियवल्लभानां च नित्यं लीलाविलासो भवति। शान्तरसे भगवत ऐश्वर्यज्ञानाय कर्कशतर्कस्य भवभीतेश्च प्राधान्यम्, किन्तु भक्तिरसे श्रद्धया विश्वासेन च सह भगवत्स्नेहद्वारा दुर्वासनानामुपशमनं क्रियते। तार्किकबुद्धि-

१. भक्तिरसायने २।७५

जन्यज्ञानरूपकृपाणमार्गे प्रचलनं सर्वथा दुःसाध्यम्, किन्तु श्रद्धाविश्वासाश्रितप्रेममार्गे प्रचलनं सुलभं सुखसाध्यं च वर्तते। यद्यपि शान्तरसेऽपि भगवद्भावप्रतीतिर्भवति तथापि तत्र सा प्रतीतिर्नियन्त्रिता भवति। यतो हि भक्तिरसे भावप्रतीतौ यावती तीव्रता, न तावती तीव्रता शान्तरसे भवति। भावनायास्तीव्रतयैव भक्तिरसः सर्वेषु रसेषु सर्वश्रेष्ठः, तत्रापि तीव्रतायाश्चरमोत्कर्षत्वेन भक्तिरसस्य प्रभेदो मधुररसः सर्वश्रेष्ठतमः स्वीक्रियते सहृदयैः स्वानुभूतिरसिकैः साम्प्रदायिकैर्भक्तिरसज्ञैः।

भगवदनुभूतेस्तारतम्यं भक्तिरससिद्धान्तिनां शान्तरससिद्धान्तिनां कृते वैडाली-वानरीवृत्तिभ्यां सुस्पष्टं भवितुमर्हति। भक्तानां कृते वैडालीवृत्तिर्भवति। यस्यां वृत्तौ भगवान् भक्तस्य सर्वं योगक्षेमं स्वयमेव वहति यथा मार्जारी स्वीयं शिशुं दन्तैः सुदृढं परिगृह्णात्यपि पीडां न प्रापयति न वा पातयति। शान्तरसाश्रितानां कृते स्वयमेव भगवान् ग्रहणीयो भवति। मनागपि प्रमादेन भगवतोऽपरिग्रहणे पतनभयं भवति। यथा वानरीशिशुः स्वीयां मातरं वानरीं स्वयमेव सुदृढं यथा स्यात्तथा परिगृह्णाति न तु माता शिशुं गृह्णाति। स्वीयरक्षाया भारं वानरीशिशुः स्वयमेव वहति, वानरी निरपेक्षा भवति। एवमेव शान्तरसे ज्ञानिनं प्रति भगवानुदासिनो भवति।

यद्यपि विषयविरागः, निर्विकारता, नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः शमदमादिषट्सम्पत्तिमुमुक्षादिसाधनाश्च भक्तिशान्त्योश्च समानमेव ग्राह्याः, किन्तु भावानां तीव्रोत्कटप्रेमानुभूति-रसार्द्रता-सर्वग्राहिता-प्रेमभावोत्पादकादीनां दृष्ट्या तयोः रसयोर्महदन्तरं वर्तते। भक्तिरसस्य प्रभावोत्कटतया भगवत्प्रेमजनितदिव्योन्मादस्य भाववेगानां तीव्रतायाश्च मार्मिकाभिव्यञ्जना भागवते-भक्तिरत्नावली भक्तिरसायन-भक्तिरसामृतसिन्धुप्रभृतिभक्तिशास्त्रेषु सम्यक् प्रकारेणाऽभूत्। अस्याः पराभक्तेः दिव्योन्मादपूर्णावस्थायां भावविह्वलो भूत्वा भक्तः कदाचिन्नृत्यति, कदाचिदानन्दातिरेकेण तारतरस्वरेण हरिगुणगुणान् गायति। कदाचिद् हसति, कदाचिद् रौति। इत्थं च भक्तानां सर्वे व्यवहारा लोकवाह्या इव प्रतीयन्ते। तदानीं भक्तस्य भावाः परमात्मनः भावेन साधर्म्यं स्थापयन्ति। तदा भक्तस्य भावनात्मकजीवने तीव्रवेदनशीलता, उत्फुलता च प्रकटीभवति, तत्र सर्वं विहाय भगवतः सर्वत्र सततं दिव्यानुभूतिश्चानुभूयते भक्तसाधकेन। इत्थंभूतस्य भक्तिभावस्योत्कटतायां या भावकलिका विकसन्ति तासां कलिकानां भक्तिरस एव सम्भावना, न तु शान्तरसे शृङ्गाराद्यन्यरसेषु वा। अतः शान्तरसे भक्तिरसस्यान्तर्भावः कथमपि न संभवति।

अत एव मराठिभाषाविज्ञेन डा० वाटवेमहोदयेनापि भक्तिरसस्य शान्तरसेऽन्तर्भावो नाङ्गीक्रियते। यतो हि तन्मते शान्तरसस्योद्गमभूमिर्वैराग्यम्, तस्य सम्बन्धश्च ज्ञानमार्गेण सह वर्तते। अतः शान्तरसे भावनापेक्षया ज्ञानस्य प्राधान्यम्। श्रुतिस्मृति-

शास्त्रपुराणगुरुजनोपदेशादिभिः साधनचतुष्टयं प्राप्य मुमुक्षवो ब्रह्मप्राप्त्यर्थं सततं प्रयतन्ते। तदर्थं मनसा वाचा कर्मणा सुखदुःखकामक्रोधमोहमायादीनां परित्यागं करोति साधकः। शान्तभावसाधनया शान्तरसे साधकोऽद्वैतं ब्रह्म प्राप्नोति। किन्तु तद्विपरीतं भक्तिभावसाधनया भक्तिरसे द्वैतादद्वैतं साधयति साधकः। एवञ्च शान्तरसापेक्षया भक्तिरसस्योपादेयता पार्थक्यं च सर्वथा सिध्यति। अतस्तयोः परस्परमैक्यमन्तर्भावो वा कथमपि न सिध्यति।

मोक्षशास्त्रदृष्ट्या ज्ञानाश्रितशान्तमार्गस्य प्रेमाश्रितभक्तिमार्गस्य च पृथक् पृथक् महत्त्वं विद्यते। भागवतानुसारेणाऽभेदभक्तिः, अद्वैतभक्तिः, मुक्तिभक्तिश्चेत्यादिरूपेण भक्तेर्भेदत्रयं स्वीकृतम्। तेन च विलोक्यते यद् भक्तिरस एव शान्तरसस्यान्तर्भावः कर्त्तव्यः। गीतायामपि भक्तेर्महत्त्वं वर्णयन् स्वयमेव भगवता प्रोक्तं यद् भक्तिपूर्वकेण मां (भगवन्तं) जानन्तो भक्ता अन्ते मयि परब्रह्मण्येव प्रविशन्ति। अर्थात् मोक्षं लभन्ते[1]। एवमेव नारदमुनिनापि प्रोक्तं यद् भक्तिरेव मोक्षप्रदायिका ज्ञानकर्मादिभ्यश्च परमश्रेष्ठा[2], फलरूपत्वात्। एवञ्च भक्तिर्मोक्षप्रदायिका सिद्ध्यति। सा च द्वैतादारभ्य अन्ततोगत्वा सोऽहमितिरूपाद्वैते पर्यवस्यति। इत्थंभूतद्वैताद्वैतयोर्मणिकाञ्चनसंयोगोऽन्यत्र दुर्लभमेव। भक्तदृष्ट्यापि भक्तिमार्गः सर्वोपरि सिध्यति। परमात्मानुभवस्य ऐश्वर्यभावमाधुर्यभावयोर्मध्ये माधुर्यभाव एव भक्तैः सर्वोत्कृष्टतमः स्वीकृतः।

मनुष्याणां कल्याणं विधित्सया भगवता भागवते मार्गत्रयं ज्ञानं कर्म भक्तिश्चेति प्रतिपादितम्[3]। तैरेव भक्तः कल्याणमधिगच्छति। तत्र भगवान् ज्ञानयोगेन निर्विशेषब्रह्मरूपेण, कर्मयोगेन परमात्मरूपेण, भक्तियोगेन च साक्षात् स्वयं निजात्मतत्त्वेनावभासते। ज्ञानयोगकर्मयोगादिकं विहाय भगवान् केवलं प्रेमरसपूरितभक्त्या एव (भक्तिरसेन) प्रसीदति। परमभक्तिरसज्ञचैतन्यमते कृष्णप्रेमरसेनैव भगवान् वशीभवति[4]। तात्पर्यमिदं यद् भगवद्रूपे एव कामस्य प्रेमभावस्य वाऽऽध्यात्मिककल्पना भक्तिरसे एव साकारतया प्रादुर्भवति। अत एव भारतीयदर्शनदृष्ट्या भगवत्समर्पितकामशक्तिरपि भगवद्रूपैव[5]। अतः शान्तरसे भक्तिरसस्य नान्तर्भावः कर्त्तुं शक्यते।

---

१ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ श्रीमद्भग० १८।५५

२. सा तु कर्मज्ञानभ्योऽप्यधिकतरा, फलस्वरूपत्वात्। ना० भ० सू० २५।२६

३. योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥ — भागवते ११।२०।६

४. चैतन्यचरितामृते मध्य० परि० २४।

५. प्रजनश्चास्मि कन्दर्पः ... ... ... । श्रीमद्भगवद्गीतायाम् १०।२८

रसदृष्ट्यापि शान्तरसापेक्षया भक्तिरसे सर्वाधिकभावनात्मकता कार्यप्रेरकता च दृश्यते। ज्ञानं भावना क्रिया चेति मानसिकव्यापारत्रयं विद्यते मनुष्याणाम्। तेषु भावनायाः तीव्रतया तथा तज्जन्याऽनुभावरूपक्रियात्मकसंवेगानां कारणेन च चित्तवृत्तयः सर्वाधिकं रमन्ते। मनोविकाररहिते विरतिपूर्णशान्तरसे तादृश्यश्चित्तवृत्तयो रन्तुं न समर्था भविष्यन्ति। शान्तरससाधनायां ज्ञानस्य तज्जन्यफलस्य चास्वादनं केवलं ज्ञानिसाधकैरेव क्रियते। अत एव तदास्वादनं परिमितमेव, किन्तु भक्तिरससाधनायां भक्तेः सर्वोत्तमं फलं प्रेमानन्दानुभूतिश्चान्यैरप्यनुभूयते। अतः शान्तरसे भक्तिरसस्य नान्तर्भावः स्वीक्रियते भक्तिरसज्ञैः।

धार्मिकदृष्ट्यापि शान्तरसापेक्षया भक्तिरसस्य सर्वाधिकमहत्त्वं परिलक्ष्यते। भारतीयधर्मभावना ज्ञानात्मकापेक्षया भावात्मिका वर्तते। भावात्मकोत्कटता-व्यापकता च केवलं भक्तिरसे एव सम्भवति, नत्वन्यत्र।

दार्शनिकदृष्ट्या परमशक्तिर्मति भगवत्यैश्वर्यशक्तिरस्ति, तया एव भगवान् निश्चयेन सर्वव्यापकः, अनादिः, अखण्डः, अच्छेद्यः, अभेद्यः सनातनश्च निगद्यते। किन्तु भगवत ऐश्वर्य-ब्रह्मत्वापेक्षयाऽधिको तस्य माधुर्यगुणो वर्तते। अनुरागे एव भगवतोऽनिर्वचनीयस्य चारितार्थ्यं भवति। तेनैव माधुर्यगुणेनैव सः परमात्मा ऐश्वर्यब्रह्मत्वादिकं च विहाय भक्तानामनुरञ्जनाय कदाचिद् धूलिधूसरितः सन् गोकुले वृन्दावने वा गोपबालकैः सह क्रीडति, कदाचिद् गोपवनिताभिः सह मधुरलीलां करोति, कदाचिद् भक्तरक्षणाय नग्नपद्भ्यां धावन् ग्राहं हन्ति, कदाचित् स्तम्भं विस्फोट्य सहसाऽवतीर्णो भवति, भक्तान् रक्षति च। अत एव कथ्यते यो भक्तो भगवन्तं ज्ञानमयं ब्रह्ममयं च वेत्ति, स तु वस्तुतः तस्यांशमात्रमेव जानाति, किन्तु यस्तं प्रेममयमवगच्छति, वस्तुतः स एव तत्त्वज्ञः, स एव वस्तुतः सर्वांशेन तं जानाति। अत एव 'प्रेमा पुमर्थो महान्' इत्यभिधाय परमपुरुषार्थमोक्षापेक्षया प्रेमैव परमपुरुषार्थः स्वीकृतो भक्तैः। भागवतानुसारेण भगवतो ब्रह्म-परमात्मा भगवानिति रूपत्रयं निगदितम्[1]। तत्र विशुद्धज्ञानमयं ब्रह्म, तदेव ज्ञानिभिरुपास्यम्[2]। परमात्मा योगिभिरुपास्यते[3]। किन्तु परमानन्दरसस्वरूपो भगवान् प्रेममार्गिभक्तैः समुपास्यते। भक्तैरुपास्यो भगवत्स्वरूपमेव भगवान् कथ्यते[4]।

पूर्वोक्तविवेचनस्य सारोऽयं प्रतिभाति यद् भक्तिरसः शान्तरसात् न केवलं पृथगेव अपि तु भक्तिरसो भावनायाः तीव्रता-व्यावहारिकता-व्यापकता-पारस्परिकश्रेष्ठता-

---

१. विदन्ति तत्त्वतत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ भागवते १।२।११

२. ब्रह्मसंहितायाम् ५।४६। ३. भागवते १।६।४२।

४. श्री जीवगोस्वामीकृत भागवतस्य १।२।११ श्लोकस्य टीकायाम्।

सर्वजनसुलभतादिकारणैरपि सर्वश्रेष्ठः, रसराजश्च विद्यते । तस्मादेव कारणात् भक्तिरसः शान्तरसे, तयोः परस्परं वा नान्तर्भावः कथमपि भवितुमर्हतीति ।

## [आ] श्रृङ्गाररसे भक्तिरसस्य नान्तर्भावः

श्रीअलतेकर,[1] श्रीकोल्हटकरप्रभृतीनां[2] विदुषां मते भक्तिरसस्य मूलभावना या रतिः सैव श्रृङ्गाररसस्यापि मूलभावना (स्थायिभावः)। एवञ्चोभयत्र रतित्वेनैकैव रतिः स्थायिभावः। अतः श्रृङ्गाररस एव भक्तिरसस्यान्तर्भावः करणीयः। अतस्ते भक्तिरसस्य पार्थक्यं न स्वीकुर्वन्ति। तत्तु समीचीनं नास्ति। यतो हि रतिर्विस्तारात्मको ऽत्यन्तव्यापकश्चभावोऽस्ति, या च रतिः समाजस्य विविधस्नेहसम्बन्धसूत्रानुसारेण विविधभूमिकां धारयति । अत एव भक्तिरसस्य मूलभावना रतिः स्वौत्कट्येन लौकिकश्रृङ्गाररसस्य मूलभावनारत्यपेक्षया सर्वथा भिन्नास्ति। अन्यच्च श्रृङ्गारशब्दो लौकिकप्रेमभावार्थे रुढो वर्तते। अत एव श्रृङ्गाररसे भक्तिरसस्य नान्तर्भावः समीचीनः।

श्रृङ्गाररसभक्तिरसयोरापाततो बहुविधसादृश्यं विलोक्यते, किन्तु तथ्यमिदं नास्ति। वस्तुतो द्वावपि परस्परं सर्वथा भिन्नावेव। यथाहि तत्त्वतः श्रृङ्गाररसः पूर्णत ऐहिको लौकिकश्चास्ति, किन्तु भक्तिरसस्तु सर्वांशत एव पारलौकिक आध्यात्मिकश्चास्ति। श्रृङ्गाररसस्य विषयो वैषयिकं सुखं भवति। किन्तु भक्तिरसस्य विषयो विशुद्धं पारमार्थिकं सुखम्। श्रृङ्गाररसस्याऽऽलम्बनभावः प्राकृतजनो भवति, किन्तु भक्तिरसस्याऽऽलम्बन-भावस्तु स्वयं जगदाधारो निखिलप्रेमरसानन्दमूर्तिः परमेश्वर[3] एव। श्रृङ्गाररसे आलम्बनभावः स्थूलः सजीवश्च किन्तु भक्तिरसे तु निर्गुणः सगुणो वा, सूक्ष्मः परात्पर श्चापि भवति। अन्यच्च निर्जीवमूर्तिरपि प्रतीकरूपेण तस्यालम्बनभावः। श्रृङ्गाररसे समवयस्कताया अपेक्षा, किन्तु भक्तिरसे वयसो भेदोऽपि भवति।

वैषयिकसुखस्य विपुलवासनामध्ये निमज्जतोः स्त्रीपुरुषयोः स्नेहसम्बन्धस्य वाचकः श्रृङ्गारः, यत्र विशुद्धप्रेमभावस्य सर्वथाऽभाव एव। प्राकृतस्त्रीपुरुषयोः स्नेहसम्बन्धः सामान्यतो विषयवासनावासितो भवति, यत्र बहिर्मुखवैषयिकसुखस्य प्राधान्यम्। अत एव प्राकृतजनानां प्रणयव्यापारः कामोऽभिधीयते। सः कामो मनसो विकारो निकृष्ट-प्रवृत्तश्चास्ति, विशुद्धप्रेमभावस्य प्रतिबन्धकश्चापि। किन्तु भक्तिरसे प्रकृतिजन्यकामः संयमितो भूत्वा विशुद्धप्रेमभावे परिणमते। एवञ्च स्वाभाविकविशुद्धप्रेमभावेऽनन्तताया असीमतायाः परात्परतायाश्च भावो भवति। तदर्थं प्रेमाधारस्य विशिष्टताऽपरिहार्यैव। अत एव तादृशविशिष्टप्रेमाधारस्य स्थानं परमात्मैव भवितुमर्हति, यतो हि स एव विशुद्धप्रेम्णः परमविषयः। हृदयस्थितस्य जीवस्यातिगूढरहस्यं प्रेमैव भवति। तत्प्राप्त्यर्थं

१. रसविमर्शे पृष्ठे २६२। २. रसविमर्शे पृष्ठे २६३।

३. हिस्ट्री आफ संस्कृत पोइटिक्स पृष्ठे ३०० श्री वी० पी० काणे कृते।

भक्तिरससाधनाया अपेक्षा विद्यते। इत्थं च शृङ्गाररसभक्तिरसयोः परस्परं पार्थक्यं भक्तिरसस्य श्रेष्ठता च सिध्यति।

शृङ्गाररसे मुख्यतः शारीरिकसम्बन्धतया, ततोऽप्यधिकं तु वैषयिकसुखसम्बन्धतया एव स्नेहः समुदयति किन्तु भक्तिरसे प्रेम मानसिकधरातलादारभ्याऽऽध्यात्मिकधरातले चरमोत्कर्षत्वं प्राप्नोति। तस्मिन्नेवाऽऽन्तरिकता, व्यापकता, सूक्ष्मता स्थायित्वञ्च भवति। तस्य सम्पूर्णोऽनुभवश्चात्मनिवेदनेन सम्प्रेरितः परिप्लावितश्च भवति। तस्यौदार्यं माधुर्यञ्चानिर्वचनीयमेवास्ति। एवञ्च भक्तिरसोऽयं ( प्रेम ) मानवजीवनस्य स्थूलव्यवहारे सूक्ष्मदिव्यज्योतिर्विद्यते। तयोः ( कामप्रेम्णोः ) पार्थक्यं विवेचयतां गौडीयवैष्णवाचार्याणां मते 'आत्मेन्द्रियप्रीतिरिच्छा' कामः ( शृङ्गारः ), 'कृष्णेन्द्रियप्रीतिरिच्छा' प्रेम इति निरूपितम्।

भक्तिरसस्याऽऽनन्दातिरेकेणाऽऽत्मसंपृक्तपरसंपृक्तभावनाभ्यः सर्वथा विनिर्मुक्तो भक्तः सच्चिदानन्दमयो जायते। किन्तु वैषयिकवासनावासिते लौकिकशृङ्गाररसे न तादृशी स्थितिः। जडोन्मुखशृङ्गाररसस्यापेक्षया चिदुन्मुखस्य भक्तिरसस्य श्रेष्ठतां प्रतिपादकानां दार्शनिकभक्तानां मते यदा सर्वप्रथमं लीलार्थं भगवता सृष्टिर्निर्मिता तदा स्वात्मानमपि द्विविधमकरोत् सः। तत्रैको नारायणोऽपरश्च तस्य शक्तिर्लक्ष्मीः। सा प्रवृत्तिनिवृत्तिरूपा भवति। यतो हि सा भगवत इच्छारूपा वर्तते। यां विना सोऽपूर्णो भवति। अत एव प्रवृत्तिनिवृत्तिरूपा सा शक्तिः भगवतः प्रसन्नार्थं पूर्णार्थं वाऽऽत्मानं समर्प्य अतीव प्रसीदति। भक्तिरसे तादृशात्मसमर्पणभावस्यौत्कर्ष्यं भवति। अत एव कान्ताभावस्योपासना भक्तिरसे सर्वश्रेष्ठा कथ्यते।

किन्तु लौकिकप्रीतौ प्रेम जडोन्मुखं भवति, अत एव कान्ताभावोपासनायां जडासक्तेरेव प्राधान्यम्। लौकिकस्नेहस्य विषयत्वे सति तदेव प्रेम शृङ्गाररसस्य विषयो जायते, अतस्तत्प्रेम अनुरागस्य निम्नतमं रूपम्, किन्तु तत्प्रेम यदा कदाचिदुन्मुखं भगवद्विषयकं वा जायते तदा तदेव प्रेम उज्ज्वलरसरूपे परिणमते। अयमेवोज्ज्वलभक्तिरसो ( मधुररसः ) भक्तिरसभेदेष्वपि परमश्रेष्ठतमः कथ्यते। भक्तेरिममेव भेदं माधुर्योपासनं विलोक्य केचन भक्तिशृङ्गारयोः पार्थक्येऽसमर्था अभूवन्। किन्तु सैद्धान्तिकदृष्ट्या व्यावहारिकदृष्ट्या च यत्र शृङ्गाररसे लौकिका एव विषयालम्बनान्याश्रयालम्बनानि च भवन्ति, अपि च तत्रैव संयोग-वियोगजन्ये सुखदुःखेऽपि वर्तेते अर्थात् शृङ्गाररसस्य सम्बन्धः संयोगवियोगजन्यसुखदुःखेन सह वर्तते। भक्तिरसस्य तु सम्बन्धः सर्वशक्तिमता सर्वव्यापकेन भगवता सह भवति। स भगवान् तु दुग्धेषु घृतमिव, तिलेषु तैलमिव, काष्ठेषु वह्निरिव विश्वस्य सर्वस्मिन् वस्तुनि व्यापकोऽस्ति[1]। तत्रोच्यते यदि

---

१. तिलेषु तैलं दधनीव सर्पिरापः स्रोतस्स्वरणीषु चाग्निः॥ श्वे० उ० १।१५

भगवान् सर्वव्यापकस्तदा कथं तस्य वियोगो जायते ? तत्र समाधत्ते साधकावस्था सिद्धावस्थाभेदेन साधना द्विविधा । तत्र साधकावस्था प्रथमावस्था, यस्यामवस्थायां साधकभक्तः परमप्रियतमस्य परमात्मनः परिचयं लभते शनैः शनैः साधको भगवतः सौन्दर्यांशमपि प्राप्याऽऽनन्दातिरेकेण विह्वलायते । सा च विह्वलता यथा यथा वर्द्धते तथा तथा भक्तसाधकानां विरहपीडाऽपि प्रखरतरा जायते । मायायाश्चाकचिक्येन यदा कदाचित् सा विरहपीडा वर्द्धते तदा भक्तो विरहाकुलो जायते । तदा तीव्रतमविरहपीडया व्याकुलीक्रियमाणः स भक्तो भगवन्तं प्रति स्वेच्छया व्यवहरति । अनयैवाऽऽध्यात्मिकविरहवेदनया साधकः सत्यमनुशीलयति, साधनायाः दीपशिखां प्रज्वालयति सर्वदा । अतो विरहदशायामेव भक्तो भगवतोऽद्भुतमधुरलीलामनुभवति । अत एव भक्तानां दृष्टौ विरहदशा वरदानरूपैव । भक्तानां कृते सा विरहदशा भगवत्प्राप्त्यर्थममोघमस्त्रं विद्यते । अत एव सा विरहदशैव भक्तैः सदाऽभिलष्यते । या परमगतिः योगिभिः दुःसाध्यसाधनैः प्राप्यते सैव विरहिणीभिः ( गोपवनिताभिः ) भक्त्यैव अनायासेन प्राप्यते । श्रीशङ्कराचार्येणापि प्रोषितपतिकास्नेह इवोपासना स्वीक्रियते[1] । इत्थं च जडाजडनिखिलचराचरे सर्वाधिकं सत्यं सनातनं वस्तु विरह एव वर्तते । स एव निमित्तभेदेन जलतरङ्गवन्नानारूपं गृह्णाति, अतो विरहभाव एव वस्तुतो भक्तिरसस्योद्गमभूमिर्विद्यते ।

तद्भिन्ना सिद्धावस्था भगवता सह पूर्णमिलनावस्था वर्तते । यत्र भक्तः सर्वतोभावेन भगवति प्रविशति । यदा भक्तैर्ज्ञायते यदर्थमहमज्ञानवशात् 'नाभिस्थितकस्तूरिकामृगवत्' यत्र तत्र भ्रमामि, स तु परमात्मा मम हृदय एव विराजते 'ईश्वरः सर्वभूतानां हृद्देशे तिष्ठत्यर्जुन' इति गीतोक्तवचनात्, तदा भक्तानामनन्तवियोगोऽनन्तसंयोगे परिणमते । तात्पर्यमिदं यद्यपि भक्तिरसे सर्वत्र भासमानपरमेश्वरस्य संयोगो वियोगो वा तात्त्विकदृष्ट्या नास्ति, तथापि साधनावस्थायां वियोगदशा समुद्भाव्यतेऽनुरागस्य परिपक्वातायै । किन्तु श्रृङ्गाररसस्येव भक्तिरसस्याऽऽधारो न लौकिकः, अपि तु परमविशुद्धोलौकिक एव । अतो विप्रलम्भदृष्ट्यापि तयोर्भेदः परिलक्ष्यते ।

अपि च श्रृङ्गाररसस्य विप्रलम्भदशायामात्मविश्वासापेक्षया प्रियविश्वासस्य प्राधान्यम्, किन्तु भक्तिरसस्य विप्रलम्भदशायां साधक आत्मविश्वासेनैव विरहपयोधौ स्वजीवनतरणिमवतारयति । श्रृङ्गाररसे तदानीं पर्यन्तमेव विरहपीडासह्या, यावद् विरही जानाति यन्मम प्रियतमोऽपि मामभिवाञ्छति । किन्तु भक्तिरसे आत्मविश्वासस्य प्रियविश्वासस्य च साहाय्येन विरहिसाधको दुःखमपि सुखत्वेनैव गणयति । तस्य तात्पर्यमिदं नास्ति यद् श्रृङ्गारे आत्मविश्वासस्य सर्वथाऽभाव एव, किन्तु तत्राऽऽत्मवि-

१. ब्रह्मसूत्रे १।१।४ शाङ्करभाष्यम् ।

श्वासापेक्षया प्रियविश्वासस्यैव प्राधान्यम् । शृङ्गाररसस्य भक्तिरसस्य वाऽऽधारशिला तु स्नेह एव, तं विना तयोर्गगनचुम्बिप्रासादस्य निर्माणं कथं भवेत् ? किन्तु शृङ्गारे प्रियविश्वासस्य प्राधान्यम् , भक्तिरसे तु प्रियविश्वाससहकृताऽऽत्मविश्वासस्य प्राधान्यं भवति । एवञ्च विप्रलम्भान्तर्गते मानदशानां तदुपशमनोपायानां च सुस्पष्टपरियोजना शृङ्गारे एव भवितुमर्हति, भक्तिरसे तादृश्याः परियोजनायाः सम्भावना न कथमपि सम्भवति निराकारब्रह्मणा सह । यद्यपि लौकिकसम्बन्धस्य सादृश्यं यत्किञ्चिद्-भेदेन सहोभयत्र तौल्यमेव, तयोर्मुख्यवैषम्यं तु भक्तिरसे शृंगाररसस्य भेदानां यथाकथञ्चित्समावेशः सभाव्यते, किन्तु शृङ्गाररसे भक्तिभेदानां समावेशः कथमपि भवितुं नार्हतीति । एवञ्च दृश्यते शृङ्गाररसस्याऽऽलम्बनानि लौकिकव्यापारा एव किन्तु भक्तिरसस्याऽऽलम्बनं त्वलौकिकसम्बन्धव्यापार एव ।

यदि च कथ्यते भक्तिरसे पूर्णानन्दः समनुभूयते साधकैस्तत्र किं मानमिति, तर्हि तथैव शृङ्गारादिरसेऽप्यानन्दानुभूतौ किं मानमिति ? तत्र रसज्ञानां मते यथा शृङ्गारादिवासनावासिताः सहृदया एव प्रमाणमिति कथ्यते तथैव भक्तिवासनावासिता भक्ता एव भक्तिरसास्वादनेऽपि प्रमाणमिति कथ्यते । तस्माद् तयोर्भक्तिरसशृङ्गाररसयोः सर्वथा पार्थक्यमेव, अतः शृङ्गाररसे भक्तिरसस्य नान्तर्भावः सम्भवति भक्तिरसज्ञानां मते ।

कतिपयप्राचीनानां भक्तिरसस्यास्वीकारे हिन्दीभाषायाः सुप्रसिद्धकविश्रीजय-शङ्करप्रसादेनेदं कारणमुक्तं यत् तेषां मते वस्तुतो भक्तिरसः शृङ्गाररसस्यैव दार्शनिक-रूपान्तरमेव वर्तते । शृङ्गाररसस्यैव रसधारादार्शनिकपृष्ठभूमौ भक्तिरसरूपे प्रवाहिता नामान्तरेण । प्राचीनरसज्ञानां मते भक्तिरापाततो द्वैतमूला एव, तस्माद् भक्तौ रसाभावं मन्यन्ते रसज्ञाः । तेषां मते द्वैतमूलाभक्तिः 'तद्ज्ञानं तुच्छत्वात् बन्धनमुच्यते' इत्युक्त्वा बन्धनमूलैव । किन्तु तन्नोचितं, यतो ह्यद्वैतब्रह्मैव भक्त्यर्थं द्वैततया परिकल्प्यते । अतः स भक्तिरसः स्वीकर्त्तव्य एव । अत एव कालान्तरे बुद्धिवादप्रभावेण सः सम्यक्प्रकारेण पल्लवितः पुष्पितः फलवान् च बभूव । अतस्तयोः परस्परं नान्तर्भावः कर्त्तव्यः । यतो हि तयोः परस्परमन्तर्भावोऽव्यवहार्योऽसङ्गतश्च प्रतिभासते । अत एव भक्तिरसः सर्वस्वतन्त्रः सर्वश्रेष्ठः रसराजो वर्तते ।

## [ इ ] अद्भुतरसे भक्तिरसस्य नान्तर्भावः

अद्भुतरसे भक्तिरसे चाऽऽकस्मिकघटनायाः समावेशो भवति । तयोः रसयोर-प्रत्याशितघटनां विलोक्य केषाञ्चिन्मतेऽद्भुतरस एव भक्तिरसस्यान्तर्भावः क्रियते । तत्तु समीचीनं नास्ति । यतो हि भक्तिरसे आकस्मिकघटनया भक्तेरालम्बनं भगवन्तं प्रति भक्तस्य चेतसि स्नेहः श्रद्धा चोदेति । गीतोक्तदृशा भगवतो विराटस्वरूपं विलोक्य

भक्तचेतसि भगवन्तं प्रति श्रद्धानुरागौ चोदितस्तत्र तस्यापेक्षया स्वस्य लघुतापि ज्ञायते, यथा ध्रुवादीनामभूत् । किन्तु अद्भुतरसे श्रद्धास्नेहादीनां सद्भावानां कथापि दुर्लभा । तत्र केवलमाश्चर्यभावनाया एव प्राधान्यं भवति । किन्तु भक्तिरसे भगवत ऐश्वर्यमाधुर्ययोश्च बोधेन भक्तचेतसि भक्तिभावावेगः समुदेति न त्वाश्चर्यम् , यतो हि भक्तहृदये सर्वदा भगवन्तं प्रति श्रद्धास्नेहादिरूपानुरागज्योतिर्ज्वलयति, यया रञ्जितो भक्तोऽद्भुतमपि भक्तित्वेनैव वर्णयति । वस्तुतो भक्तिरसेऽनुरागस्य प्राधान्येनाद्भुतो भक्तिरसस्य संचारिभावमात्रं जायते ।

भक्तिविषयककाव्येऽपि भगवतोऽद्भुतविभूतिर्वर्ण्यते तत्रापि मुख्यं लक्ष्यं तु तस्यैश्वर्यलीला-माधुर्यलीलादीनां च महत्त्वस्य प्रदर्शनमात्रमेव । साधकः स्वसाध्यस्य लीलाविलासं दृष्ट्वा विस्मयविमुग्धो जायते । तत्र विस्मयो भक्तिरसस्य सञ्चारिभावमात्रम् । एवमेवाऽऽधुनिकरहस्यवादिकाव्येषु प्रभोः कल्पितमूर्त्तेर्मानसिकप्रत्यक्षीकरणं भवति । तत्र च भगवन्तं प्रति स्नेहस्याकर्षणमेव तिष्ठति । इत्थं च परिज्ञायते भक्तिरसेऽनुरागस्य श्रद्धायाश्च प्राधान्यम् , अद्भुतरसे तु केवलं विस्मयस्यैव प्राधान्यम् । तस्मादमुद्भुतरसे भक्तिरसस्यान्तर्भावो न भवितुमर्हतीति ।

## [ई] वीरकरुणरौद्रभयानकवीभत्सरसेषु भक्तिरसस्य नान्तर्भावः

वीराद्युपर्युक्तरसानां भक्तिरसस्य चाऽऽलम्बनभावस्य स्थायिभावस्य च पार्थक्येन भक्तिरसायने मधुसूदनस्वामिना तेषां परस्परमैक्यं न स्वीकृतम् । एवञ्च तन्मते युद्धवीरदानवीरधर्मवीरदयावीरादीनामालम्बनभावस्य स्थायिभावस्य च पार्थक्यं स्पष्टमेव । अतो रौद्रभयानकवीभत्सादीनां भगवद्प्रीतिविरोधित्वेन तेषां भक्तिरसे अथवा तेषु भक्तिरसस्यापि नान्तर्भावो भवितुं शक्नोति ।

एवं भक्तिरसस्य साधनविषयेऽपि 'धर्मेण पापमपनुदति तस्माद् धर्मं परमं वदन्ति" इत्यादिना धर्मस्य भक्तेः सहायकत्वेन कथं न भगवत्प्राप्तौ साधनं तथा शमोऽपि विषयवैमुख्यसम्पादकतया कथं न भक्तिरसस्य साधनमिति प्रश्ने उच्यते ? पापनाशकत्वेन धर्मः, विषयवैमुख्येन च शमः परम्परया यथाकथञ्चिद् भक्तिरसस्य साधनं भवेत् किन्तु साक्षात्साधनं नास्ति । आलम्बनस्य पार्थक्यात् । यथा हि—

राज्यं च वसुदेवश्च भार्यामातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ।।

इत्यादिना स्पष्टतया युधिष्ठिरस्य धर्मोत्साहो ज्ञायते किन्तु भगवद्विषयिकाया रतेरभावाद् न तत्र भक्तिरसो निष्पद्यते । एवमेव विरागमूलकशान्तरसेऽप्यनुरागमूलकभक्तिरसस्य नान्तर्भावः, न वा तौ परस्परमन्योऽन्यस्य च पूरकौ स्तः । एवमेव ईर्ष्याभयजन्यद्वेषस्य भगवद्विषयकत्वेऽपि साक्षात् चित्तद्रुतिविरोधित्वेन न तस्य भक्ति-

रसत्वप्राप्तिः । एवमेव भगवत्प्रीतिविरोधित्वेन रौद्रभयानकौ च भक्तिरसत्वेन भक्तैर्नास्वाद्येते । अत उभावपि भक्तिरसात् पृथगेव । एवं च दृश्यते वीरकरुणादिरसेषु भक्तिरसस्य, भक्तिरसे च तेषां नान्तर्भावः सम्भाव्यते । तस्मात् सर्वाधारसर्वव्यापक-भगवद्विषयकत्वेन भक्तिरस एव परमोपादेयः सर्वश्रेष्ठो रसराजश्चाभिधीयते ।

इत्थं च स्वव्यापकत्व-स्वभाविकत्व--सर्वजनसुलभत्व-क्रियाशीलत्व-विलक्षणत्व-सार्वत्रिकत्व-भावोत्कटत्वादिगुणवैशिष्टतया समाधिसुखवदेव भक्तिरसः समास्वाद्यते भक्तिरसज्ञैः । अत एव भक्तिरसज्ञानां मते काव्यशास्त्ररसज्ञैः समादृताः शृङ्गारादिनव-रसास्तु केवलं ब्रह्मानन्दसहोदरा एव, किन्तु भक्तिरसस्तु साक्षाद् ब्रह्मानन्दरूपेणैव समास्वाद्यते । रूपगोस्वामिमते समाधिजन्यब्रह्मानन्दस्तु भक्तिरसास्वादस्य परमाणु-तुल्यमपि भवितुं नार्हति[1] । भागवतकारवेदव्यासमते भक्तिरसास्वादस्तु ब्रह्मानन्दादपि श्रेष्ठतमो वर्तते[2] । तन्मते भक्तिरसामृतसुधासमुद्रे निमज्जन्तः साधकाश्चतुर्वर्गमपि तृणोपमं मन्यन्ते । इत्थंभूतस्य भक्तिरसस्य केष्वपि रसेषु नान्तर्भावो भवितुमर्हतीति । न च भक्तिरसे एव तेषां शृङ्गारादिरसानामन्तर्भावो भवितुमर्हति ।

## भक्तिः पञ्चमपुरुषार्थः

भारतीयदार्शनिकदृष्ट्या संस्कृतसाहित्यकाव्यशास्त्रीयपरम्परायां सर्वेषां रसानां येन केनापि पुरुषार्थेन सह सम्बन्धो विद्यते । अत एवाभिनवगुप्तमते पुरुषार्थोपयोगित्वेना-ऽऽनन्दाधिक्येन वा शृङ्गारादिनवविधा एव रसाः प्रकीर्तिताः[3] । एवमेव पुरुषार्थाना-मपि येन केनापि रसेन सह सम्बन्धो वर्तते । तत्र धर्मार्थकामैः सह वीरादिरसानां, मोक्षेण सह शान्तरसस्य च सम्बन्धोऽस्ति । एवमेव भक्तिरूपपुरुषार्थेन सह भक्तिरसस्य सम्बन्धोऽस्ति भक्तिरसज्ञानां मते । एवञ्च भक्तिरपि पञ्चमपुरुषार्थः सिध्यति । पुरुषार्थचतुष्टयस्य कथनं तूपचारमात्रमेव । तत्र पुरुषार्थचतुष्टयातिरिक्तस्य भक्तिपुरुषार्थस्य स्वीकारे चिरकालात् प्रतिष्ठापितसिद्धान्तस्य हानिः स्याच्चेत्तत्रोच्यते-तेन कापि क्षतिर्न भवेत् , परम्परायाः लङ्घनं भवेच्चेत् तेन किम् ? तदर्थमेवोक्तं महाकविना विल्हणेन—

प्रौढिप्रकर्षेण पुराणरीतिः व्यतिक्रमश्लाघतमः पदानाम् ।
अत्युन्नतस्फोटितकञ्चुकानि बन्द्यानि कान्ताकुचमण्डलानि[4] ॥

---

१. ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणी कृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ॥ भक्तिरसामृतसिन्धौ १।१।१६

२. भागवते–४।६।१० ।

३. ते नवैव रसाः । पुमर्थोपयोगित्वेन रञ्जनाधिक्येन वा इयत्तामेवोपदेशयत्वात् । अभिनवभारत्यां प्रथमभागे पृ० ३४१ ।

४. विक्रमाङ्कदेवचरिते–१।१५

अर्थात् यथा कामिनीकुचकाठिन्येन यदि तस्याः कञ्चुक्याः शीर्णत्वं भवेत् तर्हि तत्र कुचकाठिन्यस्य प्राशस्त्यमेव न तु दौर्गुण्यम्, तथैव यदि परम्परागतस्य मार्गस्य प्राशस्त्येन कर्मणा लङ्घनं भवेत् तत्र न कोऽपि दोषो मन्यन्ते विपश्चितः। एवमेव गतानुगतिकेन परम्परावर्णितस्य पुरुषार्थचतुष्टयरूपमार्गस्य प्रकृष्टतमेन भक्तिरूपपुरुषार्थेन लङ्घनं भवेत् तथापि तत्र विरोधो नोद्भाव्यः सुधीभिः। परम्परानिरूपितत्वेन पुरुषार्थचतुष्टयस्यैवौचित्यमिति न मन्तव्यम्। अत एवोक्तं कविताकामिनीकामुकेन[1] कविकुलगुरुकालिदासेन-'पुराणमित्येव न साधु सर्वम्[2]' अर्थात् अन्धपरम्परया नेत्रोन्मिल्य पुरातनं सर्वं सत्यं तथा नवीनं सर्वमसत्यमिति न वक्तव्यम्। तत्र नीरक्षीरन्यायेन स्वन्यायोचितबुद्ध्या निर्णेतव्यम्।

तस्माद् दुःखादत्यन्तभिन्ना सुखानुभूतिरूपा भक्तिरपि पञ्चमपुरुषार्थः स्वीक्रियते स्वामिमधुसूदनाचार्यैः। पुरुषार्थचतुष्टयस्य कथनं तु गतानुगतिकैव[3]। अपि च विचार्यते-धर्मार्थकाममोक्षा न स्वरूपत्वेन पुरुषार्थः स्वीक्रियन्ते विद्वद्भिः। अपि तु तज्जन्यसुखमेव पुरुषार्थत्वेन स्वीक्रियते।

तत्रादौ धर्मादीनां स्वीकरणं पश्चात् तज्जन्यसुखस्य च पुरुषार्थत्वेन स्वीकारे गौरवं भवति। अतो धर्मादिविशेषं विहाय केवलं सुखमात्रमेव पुरुषार्थ इति स्वीकृते सति समाधिसुखादपि महत्तमं भक्तिसुखमपि स्वतन्त्ररूपेण पञ्चमपुरुषार्थः सिध्यति[4]। एवञ्च भक्तिरूपपुरुषार्थः परमानन्दस्वरूपतया धर्मार्थकाममोक्षादिषु मध्ये एव सन्निवेशयितव्यः, अथवा पृथग्रूपेण पञ्चमपुरुषार्थः स्वीकर्त्तव्यः[5]। तस्माद् भक्तिः पञ्चमपुरुषार्थः, तस्य पञ्चमपुरुषार्थस्य भक्तिरसेन सह सम्बन्धो विद्यते नात्र विचिकित्सा लेशोऽपि।

---

१. भासो हासः कविकुलगुरुः कालिदासो विलासः— प्रसन्नराघवे—

२. मालविकाग्निमित्रे—१।२

३. दुःखासंभिन्नसुखं हि परमः पुरुषार्थ इति सर्वतन्त्रसिद्धान्तः। धर्मार्थकाममोक्षश्चत्वारः पुरुषार्थ इति प्रसिद्धिस्तु लाङ्गलजीवनमितिवत् साधने फलत्ववचनादौपचारिकी। भ० र० (टीकायाम्) पृ० १४।

४. धर्मार्थकाममोक्षाणां स्वतः पुरुषार्थत्वाभावात् तज्जन्यसुखस्यैव पुरुषार्थत्वे गौरवादननुगमाच्च धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्। तत्रैव पृ०१६

५. पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वतन्त्ररूपेण वा भक्तियोगः पुरुषार्थः परमानन्दस्वरूपत्वादिति। भ० र० पृ० १७ ग्रन्थकारकृतटीकायाम्।

## भक्तिरसस्य प्रभेदाः

प्राक्तनवर्तमानकालिकसद्भक्तिवासनाविगलिते द्रुते चित्ते प्रेमाभक्तियुक्तविभावानुभावसञ्चारिसंयोगाद् भक्तिरसः साधकैरास्वाद्यते । स च भक्तिरसो भक्तिरसज्ञानां विदुषां मते मुख्यगौणभेदेन द्वादशप्रकारो वर्तते, तत्र शान्तभक्तिरसः, प्रीतिभक्तिरसः, प्रेयोभक्तिरसः, वात्सल्यभक्तिरसः, मधुरभक्तिरसश्चेति पञ्चमुख्यभक्तिरसाः, तथा हास्यभक्तिरसः, अद्भुतभक्तिरसः, वीरभक्तिरसः, करुणभक्तिरसः, रौद्रभक्तिरसः, भयानकभक्तिरसः, बीभत्सभक्तिरसश्चेति सप्तगौणभक्तिरसाः प्रतिपादिताः श्रीरूपगोस्वामिना 'भक्तिरसामृतसिन्धौ' महता संरम्भेण ।

१–शान्तभक्तिरसः—स्वविभावानुभावसात्त्विकसञ्चारिभिः परिपोष्यमाना शान्तिरतिरेव शान्तभक्तिरसरूपेणाभिव्यज्यते । तस्य स्थायिभावः शान्तरतिः, तस्याश्च समासान्द्रश्चेति द्वौ भेदौ । तत्र योगिनो सम्प्रज्ञातसमाधौ भगवत्स्वरूपा समुद्भूता रतिः समा[1] इति तथा च या परमात्मदर्शनोद्भूता रतिः सा निर्विकल्पसमाधेरपि सहस्रगुणाधिकसान्द्रत्वात् सान्द्रेति कथिता[2] । शान्तभक्तिरसे नराकृतिश्चतुर्भुजः परमात्मा विषयालम्बनरूपः, सनकसनातनादयस्तपस्विनश्च ज्ञानिनो मुमुक्षां त्यक्त्वा श्रीकृष्णतद्भक्तकृपया भक्तिवासनायुक्ता यदि भवेयुस्तदा ते आश्रयालम्बनानि । तत्त्वविचारवनशैलादिवासिजनसङ्गसिद्धक्षेत्राद्या उद्दीपनविभावाः । नासिकाग्रदृष्टिरवधूतचेष्टा निर्ममता भगवद्विद्वेषिजनेऽपि द्वेषराहित्यं तद्भक्तजनेऽपि नातिभक्तिर्मौनं ज्ञानशास्त्रेऽभिनिवेश इत्यादयोऽनुभावाः । शीतासाधारण-शीतसाधारणभेदेनानुभावो द्विविधः, तत्र निरपेक्षता, निष्कामता, निर्वैरभावः, निरहङ्कारता, निर्भयता, सुखदुखसमभावः, ध्यानमित्यादयश्च शीतासाधारणानुभावास्तथा जृम्भा, अङ्गपीडनम्, स्तवनमित्यदयश्च शीतसाधारणानुभावाः कथ्यन्ते । अश्रुपातरोमाञ्चाद्याः प्रलयवर्जिताः सात्त्विकभावाः, निर्वेदमतिधृत्यादयः सञ्चारिणः सन्ति[3] । यद्यपि नाट्ये निर्विकारप्राधान्येन शमस्थायी शान्तस्य स्थानं न स्वीक्रियते, नाट्ये तस्याभिनयस्याशक्यत्वात्, किन्तु रतियुक्तत्वेन

---

१. समाधौ योगिनस्तस्मिन्न सम्प्रज्ञानाम्नि ।
लीलायामपि लब्धेऽस्य बभूवोत्कम्पिनी तनुः ॥
भ० र० सि० ३।१।२४ कारिकोदाहरणम्

२. सर्वाविद्याध्वंसतो यः समन्तादाविर्भूतो निर्विकल्पे समाधौ ।
जाते साक्षात् यादवेन्द्रे स विन्दन् मय्यानन्दः सान्द्रतां कोटिघासीत् ॥

३. भक्तिरसामृतसिन्धौ--प० वि० प्रथमलहर्याम् ।

भक्तिरसशेस्तत्र शान्तभक्तिरसः स्वीक्रियते[1]। शान्त भक्तिरसस्योदाहरणं यथा—

कदा शैलद्रोण्यां पृथुलविटपि क्रोडवसतिः,
वसानः कोपीनं रचितफलकन्दाशनरुचिः।
हृदि ध्यायं ध्यायं मुहुरिह मुकुन्दाभिधमहं,
चिदानन्दं ज्योतिः क्षणमिव विनेष्यामि रजनीः[2] ॥

२–प्रीतिभक्तिरसः—स्वानुरुपैर्विभावानुभावसात्त्विकसञ्चारिभिः परिपुष्टा भगवद्विषयिणी प्रीतिरेव भक्तानां चेतसि समास्वाद्यतां प्राप्य 'प्रीतिभक्तिरस'संज्ञां प्राप्नोति[3]। प्रीतिभक्तिरसस्य स्थायिभावो भगवद्विषयिणी रतिरेवेति। अनुग्राह्यस्य दासत्वात् सम्भ्रमप्रीतिर्लौल्यभेदाच्च गौरवप्रीतिरिति तस्य द्वौ भेदौ स्तः। तत्र स्वानुरूपविभावादिभिः परिपुष्टा सती संभ्रमयुक्ता प्रीतिरेव सम्भ्रमप्रीतिरसरूपे परिणमते। आलम्बनभावस्तस्य निष्कारणकरुणावरुणालयः, अशरणशरण्यः, दिव्यगुणगणविशिष्टः, सुदृढव्रतः, सर्वज्ञः, सर्वरक्षकः, कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः, सर्वशक्तिमान् परमाराध्यः परमात्मा विषयालम्बनंतथा प्रभुनिदेशवशवर्त्तिनः, प्रभुताज्ञानविनम्रधियः, विश्वस्ताः, आज्ञापालकाः, भगवद्विषयकश्रद्धावन्तः, दासभावापन्नाः भक्ता आश्रयालम्बनानि भवन्ति। तेषां दासभावापन्नानां भक्तानां चाधिकृताश्रितपारिषदनुगेति चत्वारो भेदा भवन्ति। तत्राधिकृतस्तु भगवत्प्रदत्तां कामपि सेवां सम्पादयन् भगवन्तं सेवते यथा जगतः स्रष्टा प्रजापतिर्ब्रह्मा, देवानां राजा महेन्द्रश्चेति। शरण्यः, ज्ञानिचरः, सेवानिष्ठश्चेति भेदेन केवलं भगवन्निष्ठ आश्रितो भक्तः त्रिप्रकारको भवति, तत्र शरणागतः सुग्रीवविभीषणादयस्तथा जरासन्धवद्धराजादयश्चेति। ज्ञाननिष्ठास्तु भगवत्तत्त्वं विज्ञाय मोक्षस्यापि कामनां विहाय केवलं भगवन्तं समाश्रिताः शौनकादयः। सततं भगवत्सेवापरायणा हनुमत्पुण्डरीकादयः सेवानिष्ठभक्ताः सन्ति। भगवत्सेवापरायणा अपि समये समये ये भगवन्तमपि मन्त्रयते, ते दारुकोद्धवनन्दादयः पारिषदो भक्ताः सन्ति। ये च भक्ताः सर्वदा भगवतोऽनुगमनं सेवनं वा कुर्वन्ति तेऽनुगभक्ता इति कथ्यन्ते। तस्य च पुरस्थव्रजस्थभेदेन द्वौ भेदो भवतः। धुर्य-धीर-वीरभेदेन पारिषद्भक्तस्य भेदत्रयमिति। उद्दीपनभावस्तु साधारणासाधारणाभ्यां द्विविधः। तत्र साधारणस्तु भगवदनुग्रहप्राप्तिः, तत्पदरजः प्राप्तिः, तद्भक्तानां सान्निध्यम्, तेषां सत्सङ्गः, भुक्तावशिष्टप्रसादप्राप्तिश्चेति,

---

१. 'रससिद्धान्तः स्वरूप और विश्लेषण' पृष्ठे २७४ आनन्दप्रकाश दीक्षित कृते।

२. भ० र० सि० ११ कारिकोदाहरणस्थात् पृ० ३२०।

३. आत्मोचितैर्विभावाद्यैः प्रीतिरास्वादनीयताम्।
नीता चेतसि भक्तानां प्रीतिभक्तिरसो मतः ॥ भ०र०सिं०३।२।३।

असाधारणस्तु भगवदीषद्‌हास्यम्, तस्य गुणगणश्रवणं कीर्त्तनं, मुरलीनादः, शृङ्गनादादयश्चोद्दीपनभावेति कथ्यन्ते। अनुभावश्चापि साधारणासाधारणभेदेन द्विविधः, तत्र स्वकर्त्तव्यपालनम्, स्वेष्टे परमनिष्ठा, भगवद्‌भक्तेषु द्वेषराहित्यम्, तेषु मैत्रीभावाश्चासाधारणानुभावास्तथा भगवत्सम्मानितेषु मित्रेषु सम्मानम्, तद्‌भिन्नेषु वैराग्यश्चेति साधारणानुभावा भवन्ति। स्तम्भादयाः सर्वे सात्त्विकभावा भवन्त्यत्र। सामान्यतया यद्यपि सर्वे सञ्चारिभावाः स्वीक्रियन्ते तथापि मदश्रमत्रासापस्मारालस्यौग्र्यक्रोधासूयानिद्रादयः प्राधान्येन स्वीक्रियन्तेऽत्र।

प्रभुताज्ञानयुक्तत्वेन भक्तानां चेतसि समुत्पन्नः कम्पः समादरो वा सम्भ्रमः, तेन चैक्यं प्राप्तवती प्रीतिरेव सम्भ्रमप्रीतिरिति कथ्यते। सा च सम्भ्रमप्रीतिः प्रेम-स्नेह-रागभेदेन त्रिविधा भवति। शङ्काराहितवद्धमूला प्रीतिः प्रेमेयुच्यते, तेन प्रेम्णा चित्तस्य सान्द्रद्रवस्थितिरेव स्नेह इति, दुःखेष्वपि सुखमनुभाविका विशिष्टभावदशैव रागश्चेति कथ्यते। सा संभ्रमप्रीतिर्योगायोगभेदेन पुनर्द्विधा, अयोगोऽप्युत्कण्ठित-वियोगभेदेन द्विविधो जायते, तत्रादृष्टपूर्वस्य परमात्मनो दिदृक्षोत्कण्ठत्वम्, तत्रोत्कण्ठायामौत्सुक्य-दैन्यनिर्वेदचिन्ताचापल्यजडतोन्मादमोहानां प्रावल्यं भवति। स्वेष्टस्य क्षणमपि विच्छेदो वियोगः, तत्र वियोगे तापः, कृशता, जाड्यम्, धैर्याभावः, व्याधिरुन्मादः, मूर्च्छा, जागरणम्, अवलम्बशून्यता, मृतिरिति दशावस्था समुत्पद्यन्ते।

गौरवप्रीतिः—गौरवप्रीतिः स्वविभावादिभिः परिपुष्टा सती गौरवप्रीतिरसरूपेण भक्तसहृदयसाधकैः समास्वाद्यते। श्रीकृष्णस्य लाल्यानां प्रद्युम्नसाम्बादीनां सम्बन्धिनां श्रीकृष्णे गौरवमयीप्रीतिः गौरवप्रीतिः, सा एव स्वविभावादिभिः परिप्रष्ठासती गौरव-प्रीतिरसरूपे परिणमते। रक्षकः, पालकः, बुद्धिबलविद्यायुक्तः श्रीकृष्णोऽत्र विषयालम्बनम्। श्रीकृष्णस्य प्रेमभाजनानि प्रद्युम्नादय आश्रयालम्बनानि। श्रीकृष्णस्य वात्सल्येन सूर्यस-स्मितप्रेषणादय उद्दीपनभावाः। श्रीकृष्णस्य मार्गानुसरणम्, नमस्क्रिया, विनयाधिक्यम्, निजप्राणपरित्यागेनापि तस्याऽऽज्ञापरिपालनमित्यादयोऽनुभावाः। सम्भ्रमप्रीतिवत् सर्वे स्तम्भादयः सात्त्विकभावास्तथा तद्‌वदेव सञ्चारिभावाश्चात्र भवन्ति। पुनरस्या अपि सम्भ्रमप्रीतिवदेव योगायोगादिप्रभेदा भवन्ति। प्रीतिभक्तिरसस्योदाहरणम्—

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशे विशन्तु स्फुटं,
धातारं प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम्।
तद्‌वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गण—
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः॥

श्रीरूपगोस्वामिनः, भा० वा० रा० पृ० ४६

## ३–प्रेयो भक्तिरसः

स्वसमुचितविभावादिभिः परिपुष्टिं गता सख्यरतिर्भक्तानां चेतसि प्रेयोभक्तिरसरूपेण समास्वाद्यते[1]। दास्यभावस्य ( प्रीतिभक्तिरसस्य ) प्रवृद्धा प्रीतिरेवोक्तरसरूपेण बुध्यते। दास्यभावे भक्तः प्रभोः समीपं मर्यादया विजृम्भतो नियन्त्रितश्च तिष्ठति। येन स्वहृदयस्थं भावं नोपस्थापयति। किन्तु रसेऽस्मिन् भक्तः सम्भ्रमप्रीतेः स्थाने प्रागाढविश्वासात् सम्पूर्णप्रतिबन्धरहितो भवति। एवञ्चात्र विमुक्तसंभ्रमसख्यरतिरेवास्य रसस्य स्थायिभावात्वेन निगद्यते।

द्विभुजश्रीकृष्णोऽस्य रसस्य विषयालम्बनं तस्य वयस्याश्चाश्रयालम्बनानि। सम्बन्धप्रागाढ्यात् पुरव्रजस्थभेदेन वयस्यस्य द्वौ भेदौ स्तः। तत्र पुरस्था भीमार्जुनादयः, मैत्रीभावदृष्ट्या व्रजसम्बन्धिभक्ताः सुहृत्सखाः, प्रियनर्मसखाः सखायश्चेति चतुर्धा भवन्ति। तत्र वयसा श्रीकृष्णापेक्षया श्रेष्ठाः, वात्सल्यभावेन युक्ताः, अत एव तत्रक्षणे सदा तत्पराः सुभद्रबलभद्रादयः सुहृत्सखाः। समवयस्काः, अत एव श्रीकृष्णेन सह निःसङ्कोचभावेन कन्दुकादिक्रीडायां तत्पराः श्रीदामसुदामप्रभृतयः प्रियसखाः। श्रीकृष्णस्य परमरहस्यकार्येषु सहायकाः, प्रेयसीरहस्यसहाय्याः शृङ्गारभावानुमोदकाः सुवलादयो गोपाः प्रियनर्मसखाः तथा आयुषा श्रीकृष्णापेक्षया कनिष्ठाः प्रीतिसमन्विताः सेवासुखाभिलाषिणो मरन्दमणिबन्धादयः सखाय इति कथ्यन्ते।

ते चतुर्विधा भक्ता अपि नित्यप्रिय-सुचर-साधकभेदेन त्रिधा। तेषु केचित्स्वभावतः स्थिरमतयो मन्त्रिवत्तमुपासते, केचित्स्वभावचपलास्तं विदूषका इव परिहासयन्ति, केचित्सरलस्वभावाः सरलतापूर्वकं तं सेवन्ते, केचिन्नानाक्रीड्या विस्मापयन्ति। एवञ्च मित्राणि तस्य श्रीकृष्णस्य तं विविधस्वभावयुक्तैः सेवयन्तः पवित्रमैत्रीविचित्रचारुतां वर्धयन्ति। श्रीकृष्णस्य कौमारपौगण्डकैशोराणि वयांसि[2] तथा शृङ्गं, वेणुः, शंखादयश्चोद्दीपनभावा भवन्ति। रसेऽस्मिन् पौगण्डवयसः प्राधान्यम्, व्रजे कौमारमपि सम्मतम्, कैशोरं तु सर्वत्रैव गृह्यते।

---

१. स्थायी भावो विभावाद्यैः सख्यमात्मोचितैरिह।
नीतश्चित्ते सतां पुष्टिं रसः प्रेयानुदीर्यते॥ भक्तिरसामृतसिन्धौ ३।३।१।

२. कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।
कैशोरमापञ्चदशात् यौवनं तु ततः परम्॥
अष्टमासाधिकदशवर्षपर्यन्तं श्रीकृष्णस्य व्रजे प्रकटविहारः। अत एव कृष्णस्याल्पकालत एव वृद्धया मासचतुष्टयाधिकवत्सरपर्यन्तं कौमारम्। ततः परमष्टमासाधिकपर्यन्तं पौगण्डम्। ततः परं दशवर्षपर्यन्तं कैशोरम्। ततः परमपि सर्वकालं व्याप्य दशवर्षं कैशोरं तत्रैव सदा स्थितिः।

रसेऽस्मिन् मुष्टामुष्टिलगुडालगुडिकन्दुकद्यूतवाहादिक्रीडाभिः श्रीकृष्णस्य मनोरञ्जनम्, पर्यङ्कदोलादिषु तेन सह समुपविश्य प्रहसनम् , विविधपरिहासः, जलविहारः, लास्यादयः, सर्वसाधारणक्रिया अनुभावा भवन्ति । स्वेदः, रोमाञ्चः, स्वरभङ्गः, कम्पादयश्च सात्त्विकभावास्तथा उग्रता, त्रासः, आलस्यञ्च विहाय सर्वे सञ्चारिणोऽत्र परिगणिताः । तत्र योगे मृतिक्लमादयस्तथाऽयोगे मदहर्षगर्वनिद्राधृत्यादयः परित्यज्यन्ते । उत्तरोत्तरं परिवर्धमाना विमुक्तसंभ्रमस्थायिरूपसख्यरतिरेव क्रमशः प्रणय-प्रेम स्नेह-रागादिरूपेण परिणमन्ते । तत्र च विप्रयोगे ( वियोगावस्थायाम् ) तापः जागर्यालम्बनशून्यताऽधृति-जडताव्याधिरुन्मादमूर्च्छामृतिश्चेति दशदशा[1] अपि समुद्भाविताः ।

प्रीतिभक्तिरसे वात्सल्यभक्तिरसे च विषयाश्रयालम्बनयोरन्योन्यं गौरवलाघवरूप-भिन्नता भवति किन्तु प्रेयोभक्तिरसेऽस्मिन् विषयाश्रययोः सर्वथा साम्यहेतुत्वादास्वा-द्याऽऽधिक्यं जायते । तच्च सख्यभावापन्नसहृदयसाधकैकगम्यमस्ति ।

रसोऽयं प्रेयोरतिस्तथा प्रेयान्रस इति रूपेण श्रीमधुसूदनस्वामिनाऽपि स्वीकृतः[2] । श्रीनारायणभट्टेनापि सख्यरतिस्थायिभावः प्रेयोभक्तिरसः स्वीकृतः[3] ।

पूर्वोक्तविवेचनानुसारेण सजातीयमाधुर्यभावेन सहैव प्रेयोरसः चित्ते कमपि चमत्कारं जनयति । रसेऽस्मिन् भगवतो भक्तस्य च भावः समान एव, सेव्यसेवकयोर्भेदो नात्र सम्भवति । एवञ्च सर्वेषु रसेषु प्रेयोभक्तिरस एवातिशयप्रियो रसस्तदुपासकानां रसज्ञानां मते । स च प्रेयोरसः सख्यभावापन्नानां भक्तरसज्ञानां चेतस्येव प्रस्फुटति । प्रेयोभक्तिरसस्योदाहरणं यथा—

रहसि संविदं हृच्छयोदयं प्रहसितानन्नं प्रेमवीक्षणम् ।
बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ भागवते १०।३१।१७

## ४—वात्सल्यभक्तिरसः

स्वसमुचितविभावानुभावसात्त्विकभावसञ्चारिभावैश्च परिपुष्टिं गता श्रीकृष्णविषया वत्सलरतिरेव वात्सल्यभक्तिरसरूपेणानुभूयते रसज्ञैः साधकभक्तैः[4] । तस्य स्थायि-

---

१. अङ्गेषु तापः कृशता जागर्यालम्बनशून्यता ।
अधृतिर्जडता व्याधिरुन्मादो मूर्च्छितं मृतिरिति ॥

२. शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रिधा ।
विशुद्धो वत्सलः प्रेयानिति भक्तिरसस्त्रयः ॥

३. गौरवाद्यविनिर्मुक्ता विस्रम्भात् समयोर्द्वयोः ।
सख्यरतिः स्थायिभावः सा ज्ञेया भक्तिवत्मगैः ॥ भक्तिरसतरङ्गिण्यां पृष्ठे १२८

४. विभावाद्यैस्तु वात्सल्यं स्थायी पुष्टिमुपागतः ।
एष वत्सलतामात्रः प्रोक्तो भक्तिरसो बुधैः ॥ भक्तिरसामृतसिन्धौ ३।४।१ ।

भावस्त्वनुकम्पनीयं प्रत्यनुकम्पयितुः सम्भ्रमरहिता वत्सलरतिरेव विद्यते। रसेऽस्मिन् भगवान् बालकरूपेणोपास्यते। अत्र भगवतो विभूतेरैश्वर्यस्य परिज्ञानं नावबुध्यते। पितरौ यथा स्वबालककल्याणाय सततं हितं चिन्तयतः तथैवात्रापि सैव भावना भगवन्तं प्रति क्रियते। अत्र तु प्रीतिरतेरिव सम्भ्रमस्य न स्थानम्, न वा प्रेयोरतेरिव विश्रम्भस्यैव स्थानम्, किन्तु तयोरुपरि अनुकम्पाकर्त्तुर्गुरुवर्गस्यानुकम्पैव स्वाभाविकी रतिर्भवति, सैव वत्सलरतिः, सैवास्य रसस्य स्थायिभावो भण्यते। एवञ्च नन्दयशोदादीनां श्रीकृष्णं प्रति या ममत्वभावना, यथा मम पुत्रोऽयं श्रीकृष्ण इत्यादिका, याऽन्यत्रभावपदेन व्यवहृता, सैवात्र वात्सल्यस्य प्राणः, यद्यपि श्रीकृष्णोऽनन्तशक्तिसंवलितस्तथापि व्रजलीलाभूमौ समागते तस्मिन् मात्रा यशोदया ऊलूखले निबद्धः, तत्र केवलं वात्सल्यभक्तिरसस्यैव प्रभावो नान्यस्येति। एवञ्च यशोदाप्रभृतेर्वत्सलरतिः स्वभावत एव प्रौढा विद्यते किन्तु लीलावैशिष्ट्येन कदाचित् प्रेमस्नेहरागत्वेनाप्यवबुध्यते।

रसेऽस्मिन् सर्वसुलक्षणसमन्वितः, कोमलाङ्गः, श्यामाङ्गसुन्दरः, विनयी, दातृत्वादिगुणगणगरिष्ठः श्रीकृष्णो विषयालम्बनम्, अपि चात्र ज्ञानवैराग्यैश्वर्यादिज्ञानराहित्येनानुग्राह्यरूपेण चालम्बनत्वमपि भवति श्रीकृष्णे। श्रीकृष्णे सद्भाववन्तो लालनपालनशिक्षादिव्यवस्थापका गुरवः, मातापित्रादयः, व्रजेश्वरीव्रजराजो रोहिण्युपनन्दपत्न्यादयस्तथा देवकीकुन्तीवसुदेवादयश्चाश्रयालम्बनानि। प्रोक्ताश्रयालम्बनेषु व्रजेश्वरी व्रजराजश्च सर्वश्रेष्ठ आश्रयालम्बने। रसेऽस्मिन् लाल्यरूपविषयालम्बनस्यैश्वर्यज्ञानं बाधकं भवति। श्रीकृष्णस्य कौमारं पौगण्डकिशोरे चापि वयः, रूपम्, वेषः, शैशवचापल्यम्, स्मितहास्यम्, जल्पनम्, लीलादयश्चोद्दीपनानि सन्ति। अपि चात्र श्रीकृष्णस्य स्वल्पदन्तता, शनैः शनैर्मुहुर्मुहुः पादप्रक्रमता क्षणरुदितम्, क्षणहसितम्, स्वाङ्गुष्ठपानम्, उत्तानशयनम्, कराम्बुजे नवनीतम्, शिरसि काकपक्षः, शृङ्गमुरलीप्रभृतिवाद्यानां वादनादयश्च वात्सल्यभक्तिरसे वैशिष्ट्येनोद्दीपकाः भवन्ति।

श्रीकृष्णस्य मातृपितृगुरुवर्गैः शिरश्चुम्बनम्, मुखकपोलचुम्बनम्, आलिङ्गनम्, शरीरावयवसंवाहनम्, नामग्रहणपूर्वकमाह्वानम्, आशीर्वचनम्, लालनम्, पालनम्, हितोपदेशादयश्चानुभावे परिगणितानि। स्तन्यस्रावरूपनवमसात्त्विकभावसहितं स्तम्भादयः सर्वेऽष्टौ सात्त्विकभावा भवन्ति रसेऽस्मिन्। भक्तिरसजैरष्टसात्त्विकभावातिरिक्तः स्तन्यस्रावरूपनवमनूतनः सात्त्विकभावः समुद्भावितश्चेति वैशिष्ट्यमन्यापेक्षया।

यद्यपि प्रीतिभक्तिरसे प्रोक्ता सर्वैः सञ्चारिभावा रसेऽस्मिन् स्वीक्रियन्ते किन्तु अपस्मारसञ्चारिभावस्यात्र प्राधान्यं भवति। वियोगावस्थायां चिन्ताविषादनिर्वेदजडतादैन्यचपलतोन्मादमोहादीनामाधिक्येनोद्रेको भवति। अपि च वियोगे प्रीतिभक्तिरसवदेव दशदशा भवन्ति।

पूर्ववर्णितप्रेयोरसापेक्षयाऽस्य रसस्य वैशिष्ट्यमस्ति, यतो हि तत्र मनोवैज्ञानिकदृष्ट्या प्रेयोरसस्य सिद्धौ विषयस्य प्रीतेर्ज्ञानं नितान्तमावश्यकम् , यथा 'श्रीकृष्णस्य प्रीतिर्ममोपरि वर्तते इति ज्ञात्वैव सखा कृष्णं प्रत्याकृष्यते, ततः स्नेहो जायते, यतो हि तत्र सामान्यभावनाया एव प्राधान्यम् । भावनानुकूल्येनैव प्रेयोरसस्तिष्ठति । विषये भावस्य प्रातिकूल्येऽभावे वा सख्यभावो न कथमपि पुष्यति । किन्तु रसेऽस्मिन् तज्ज्ञानस्य आवश्यकता नास्ति, यतो हि मातुर्हृदयं पुत्रकल्याणाय स्वाभाविकेनैव दयार्द्रं प्रेमासक्तं च भवति । श्रीकृष्णस्यानुरागो मातरि यशोदायामस्ति न वेति ज्ञानस्य आवश्यकता नास्ति, यतोहि यशोदायाः स्नेहः पुत्रे श्रीकृष्णेऽवश्यमेव वर्तते ।

भक्तिरसज्ञानां मते प्रीतिप्रेयोवात्सल्यादिरसत्रयी भक्तानां चेतसि मिश्रितामिश्रितरूपेण वानुभूयते । श्रीकृष्णस्यापेक्षया ज्येष्ठेऽपि तेन सह क्रीडनात् बलदेवस्य सख्यं प्रीतिवात्सल्ययुक्तम् , युधिष्ठिरस्य वात्सल्यं प्रीतिसखाभ्यां संयुक्तम् , आहुकादिभृत्यानां प्रीतिर्वात्सल्यता, नकुलसहदेवनारदादीनाञ्च सख्यं प्रीत्याकारालम्बितम् , शिवगरुडोद्धवादीनां प्रीतिश्च सख्येन मिश्रिता प्रतिपादिता सन्ति भक्तिशास्त्रेषु ।

वात्सल्यभक्तिरसोऽयं रूपगोस्वामिमते नाट्यज्ञैः साहित्यिकैरपि स्वीकृतः[१] । नारायणभट्टेनापि[२] वात्सल्यभक्तिरसस्याश्रयालम्बनस्य बहुविस्तारं प्रदर्श्य पर्यन्ते भक्तिरसामृतसिन्धुकारमतमेवानुसृतम् । कविकर्णपूरमते[३] वात्सल्यभक्तिरसस्य स्थायिभावस्तु 'ममकारः' इति वर्तते । वात्सल्यभक्तिरसस्योदाहरणं यथा—

सुतमङ्गुलिभिः सुस्तनी चिबुकाग्रे दधती दयार्द्रधीः ।
समलालयदालयात् पुनः स्थितिभाजं व्रजराजगेहिनी ॥

## ५—मधुरभक्तिरसः

श्रीरूपगोस्वामिना 'उज्ज्वलनीलमणि' ग्रन्थे मधुररसः सावयवो निरूपितः । तत्र नायकभेदः, नायकसहायकभेदः, हरिवल्लभा, श्रीराधा, नायिकाभेदः, यूथेश्वभेदः, दूतीभेदः, सखिभेदः, आलम्बनम् , उद्दीपनम् , अनुभावः, सात्त्विकभेदः, सञ्चारिभावः, स्थायिभावः, शृङ्गारभेदः, मानम् , विप्रलम्भः, संभोगश्चेत्यादिविशिष्टप्रभेदवर्णनद्वारा

---

१. स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।
स्थायीवत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥ साहित्यदर्पणे ३ २५१
स्वीकुर्वते रसमिमं नाट्या अपि केचन ॥ भक्तिरसामृतसिन्धौ ३।४।२७

२. पितृवर्गो मातृवर्गस्तत्सख्यं ये समागताः ।
ब्राह्मणाः कुलवृद्धाश्च ... ... ... ... ... ॥ भक्तिरसतरङ्गिण्याम् पृ० १२६

३. अलङ्कारकौस्तुभे पृष्ठे १३३ ।

मधुररसं स्वतन्त्ररूपेण संस्थाप्य रसोऽयं 'रसराट्' इत्युपाधिना विभूषितः श्रीरूपगोस्वामिना। यद्यपि प्रोक्तविषयाः प्रायः सामान्यतया परम्परागतनियमानुसारेणैव वर्णिताः, तथापि तत्र स्थायिभावादिप्रसङ्गे कतिपयं नूतनं तथ्यं समुद्घाटितं तेन।

यथा शृङ्गारादिरसाः सर्वैर्नाऽऽस्वाद्यन्ते, अपि तु पुण्यवद्भिः सहृदयैरेवाऽऽस्वाद्यन्ते,[1] तथैव मधुररसोऽयं प्राक्तनाधुनिकविपुलसद्भक्तिवासनावासितैः सहृदयैरेव समास्वाद्यते[2]। न तु सर्वैर्जनैः सुलभश्चेति। श्रीरूपगोस्वामिमते तु रसोऽयं निवृत्तानुपयोगित्वाद् दुरूहत्वात् रहस्यत्वाच्च संक्षिप्तयैव निरुप्यते[3]। श्रीजीवगोस्वामितेऽपि रहस्यत्वादेव काव्य-शास्त्रीयरसज्ञैर्लौकिकवासनावासितैः परमदिव्यरसोऽयं न समास्वाद्यत इति प्रतिपादयन् तस्या महत्त्वं प्रतिपादितम्[4]।

निखिलसंस्कृतवाङ्मये भक्तिरसान्तर्गतो मधुररसोऽयं शुचिः, शृङ्गारः उज्ज्वलश्चेति नाम्ना व्यवह्रियते भक्तिरसज्ञानां, विशेषतया मधुररसज्ञानां मते। श्रीमदानन्दवर्धनाचार्यमतेऽपि परम्परागतशृङ्गाररस एव केवलं न्यूनाधिकभावपरिवर्तनेन भक्तिशास्त्रे मधुररसत्वेन कथ्यते। एवमेव गीतगोविन्दे जयदेवेनापि 'शृङ्गारः[6] सखिमूर्तिमानिव' इति पद्ये शृङ्गार उज्ज्वलरूपे मधुररसे वा व्यवहृतः। एवञ्च भरतमुनिप्रभृतिभिः काव्यशास्त्ररसज्ञैः प्रथमोक्तत्त्वाद् आद्यः शृङ्गाररस एव। पद्मपुराणानुसारेण भगवतः श्रीकृष्णस्य शृङ्गारमयस्य भक्तिरसस्य मधुररसरूपेण परमोत्कृष्टता प्रतिपादिता[7]। एवमेव भक्तिर-

---

१. पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम् ॥ साहित्यदर्पणे पृ० १०७

२. प्राक्तन्याधुनिकी चास्ति यस्य सद्भक्तिवासना।
एष भक्तिरसास्वादस्तस्यैव हृदि जायते ॥ भक्तिरसामृतसिन्धौ २।१।७

३. निवृत्तानुपयोगित्वाद् दुरूहत्वादयं रसः।
रहस्यत्वाच्च संक्षिप्य वितताङ्गोऽपि लिख्यते ॥ भक्तिरसामृतसिन्धौ ३।५।२

४. यदमितरसशास्त्रे व्यञ्जिवैदग्ध्यवृन्दं,
तदणुमपि न वेतुं कल्पते कामिलोकः।
तदखिलमपि यस्य प्रेमसिन्धौ न किञ्चिन्,
मिथुनमजितगोपीरूपमेतद् विभाति ॥ गोपालचम्पूकाव्ये २४

५. शृङ्गार एव मधुरः परः प्रह्लादनो रसः ॥ ध्वन्यालोके २।७

६. शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥ —गीतगोविन्दे १।४।१

७. न राधिका समा नारी, न कृष्णसदृशः पुमान्।
वयः परं कैशोरात्, स्वभावः प्रकृतेः परम् ॥
ध्येयं कैशोरकं ध्येयं, वनं वृन्दावनं वनम्।
श्याममेव परं रूपमादिरेव परो रसः ॥
पद्मपुराणे पाताल खण्डे ७७।५२–५३

सज्ञानां मते भागवतीयप्रथमश्लोकस्य 'जन्माद्यस्य यतः' इत्यस्य व्याख्यानुसारेण आद्यस्य=आद्यरसस्य (श्रृङ्गाररसस्य मधुररसस्य वा), जन्म=उत्पत्तिः, यतः=यस्मात् श्रीकृष्णादित्यादिभिर्मधुरभक्तिरसः प्रतिपाद्यते ।

स्वसमुचितविभावादिभिः पुष्टिं गता मधुराररतिरेव मधुरभक्तिरसरूपेण भक्तैः सहृदयसाधकैः स्वचेतसि समास्वाद्यते[1] । अस्य मधुररसस्य नायकः (श्रीकृष्णः) नायिकाश्च (श्रीकृष्णप्रियाः) परस्परं विषयालम्बनान्याश्रयालम्बनानि च भवन्ति । श्रीकृष्णस्य प्रियासु राधिकाऽनन्या वर्तते । यद्यपि मधुररसः श्रृङ्गाररससदृश एव वर्ण्यते किन्तु श्रृङ्गाररसे सहृदयाः सामान्यतया कामवासनावासिता भवन्ति । मधुररसे तु कामवासनाया लवोऽपि न भवति । तत्र श्रीकृष्णस्य तत्प्रियाणाञ्च परस्परं रतिः सच्चिदानन्दमयी भवति । भक्तिशास्त्रानुसारेण मधुररसास्वादकानां चित्तस्था न केवलं कामवासना एव, अपि तु सर्वा अपि वासनाः क्षीयन्ते ।

मधुरारतिरेव गोपीकृष्णयोः संभोगस्य कारणम् । श्रीकृष्णस्य कान्ताभावेनोपासिता उपासनैव मधुररसतया कथ्यते । सैव भक्तेरन्तिमा सर्वोत्तमा दशा, यतो हि नात्र भगवता सह कस्यापि मर्यादानिर्वाहस्य, न वा कस्यापि परस्परं सङ्कोचस्य स्थानम् । इयमुपासना लौकिकदाम्पत्यसदृशा अपि सर्वथा तद्भिन्ना, यतो हि लौकिकदाम्पत्ये वासनायाः प्रवृत्तिर्भवति, तत्रापि केवलं स्वार्थस्यैव स्थानम् । किन्तु मधुररसो हि दिव्यं वस्तु, यत्र भक्तानां चेतसि निःस्वार्थानुरागस्य प्रकाशो भवति । तत्र परस्परं राधाकृष्णयोर्वियोगः क्षणमपि न भवति । तत्र परस्परं प्रेमा उत्तरोत्तरं परिवर्द्धते । इयमेव रागानुगायाः पराकाष्ठा । तत्र भगवदर्थं सर्वं समर्प्यते । श्रीनारदवचनानुसारेण तत्र 'तत् सुखिसुखित्वम्' इति भावना परस्परं भवति ।

आलम्बनविभावस्तु तत्र मधुररसस्य नायकः सुरम्याङ्गः, कान्तियुक्तः, विविधाद्भुतभाषावित्, सत्यवाक्यः, प्रियम्वदः, सुपाण्डित्यः, प्रतिभान्वितः, विदग्धः, चतुरः, दक्षः, कृतज्ञः, सुदृढव्रतः, देशकालसुपात्रज्ञः, धार्मिकः, शरणागतपालकः, प्रेमवश्यः, नारीगणमनोहारी, सर्वाराध्यः सकलसद्गुणयुक्तः श्रीकृष्णो भवति[2] । सोऽयं धीरोदात्तधीरोद्धत्तधीरललितधीरप्रशान्तभेदैः प्रथमं चतुर्विधः, पुनः पत्युपपतिभेदेना-

---

१. वक्ष्यमाणैर्विभावाद्यैः स्वाद्यतां मधुरारतिः ।
नीता भक्तिरसः प्रोक्तो मधुराख्यो मनीषिभिः ।। उज्ज्वलनीलमणौ ३
आत्मोचित्तैर्विभावाद्यैः पुष्टिं नीता सतां हृदि ।
मधुराख्यो भवेत् भक्तिरसोऽसौ मधुरारतिः ।। भक्तिरसामृतसिन्धौ ३।५।१

२. भक्तिरसामृतसिन्धौ २।१।१६-२१
श्रीमद्भागवते १।१६।२६-२८, भक्तिचन्द्रिकायाम् पृ० १६४ ।

ष्टविधः, पुनरनुकूलदक्षिणशठधृष्टेतिरूपेण चातुर्विध्याद् द्वात्रिंशद्भेदः, तत्र द्वारकायां पूर्णः, मथुरायां पूर्णतरः, व्रजे पूर्णतमश्चेति त्रिविधत्वात षण्णवतिभेदयुक्तो नायको मधुररसे भवति । प्रोक्तनायकभेदेषु यद्यपि धीरोद्धतशठधृष्टोपपतिप्रभेदाः सद्गुणसमन्विते विषयालम्बने श्रीकृष्णे परस्परं विरुद्धत्वाद् दोषायन्ते, तथापि भक्तिरसज्ञानां मते प्राकृतनायके ते दोषवहा एव, किन्तु ते रसस्वरूपात्मके श्रीकृष्णे न दोषायन्ते, अपितु तस्मिन् तेऽपि गुणायन्त एव[1] । मधुररसस्य सर्वस्वः परस्परविरुद्धधर्माश्रयभूतः परमात्मा एव लीलाविलासाय भक्तमनोरञ्जनाय तेभ्यो भक्तिरसस्वादनाय च प्रकटति भूतले, अत एव तस्मिन् न किमप्यनौचित्यम् । भक्तिरसज्ञानां मते औपपत्ये तु ( परकीयोपासनायाम् ) मधुररसस्य पूर्णतमविकासो जायते । यथा काव्यरसज्ञानां मते लोके ये दोषास्तेऽपि रसस्यालौकिकत्वे सति गुणायन्ते[2] । तथैव सर्वरसाधारभूते श्रीकृष्णे परस्परविरुद्धभूता ये लौकिकदोषा तेऽपि गुणायन्त एव[3] ।

यथा निखिलरसानन्दमूर्त्तिः, रसावतारः, परमसौन्दर्यनिधिः, परमप्रेमास्पदः, शान्तरूपपरमात्मा मधुररसस्य विषयालम्बनभावो वर्तते तथैव कान्ताभावभाविताः भगवत्सेवासाधकाः, भगवत्प्रीत्यर्थं सर्वं समर्पकाः, रागात्मकपथपथिकाः भक्तजना एव मधुररसस्याऽऽश्रयालम्बनभावा भवन्ति । भक्तिरसज्ञानां मते शृङ्गाररसस्य साक्षात्स्वरूपः, रसावतारः, कान्तरूपः श्रीकृष्णो विषयालम्बनभावस्तथा श्रीकृष्णस्य कान्ता आश्रयालम्बनरूपेण निरूपिताः । नायकः श्रीकृष्ण इव श्रीकृष्णप्रिया अपि विशुद्धप्रेममाधुर्ययुक्ता सल्लक्षणसमन्विताः मधुररसस्य विषयाश्रयालम्बनभावा भवन्ति । ताः प्रथमं स्वकीया-परकीयाभेदेन द्विविधा । तत्र द्वारकायां श्रीकृष्णस्याष्टोत्तरशताधिकषोडशसहस्रसंख्याका नायिकाः पाणिग्रहणपूर्वकं लब्धाः सन्ति । तत्राप्यैश्वर्याद् रुक्मिणी सौभाग्याच्च सत्यभामा वरिष्ठे ।

रागेणैवार्पितात्मानो लोकयुग्मानपेक्षिणा ।
धर्मेणास्वीकृता यस्तु परकीया भवन्ति ताः ॥ उज्ज्वलनीलमणौ

---

१. लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायके ।
न कृष्णे रसनिर्यासस्वादार्थभवतारिणि ॥ उज्ज्वलनीलमणौ १८

२. अलौकिकत्वमेतेषां भूषणं न तु दुषणम् ॥ साहित्यदर्पणे ३।१२

३. मात्सर्याद्याः प्रतीयन्ते दोषत्वेन यदप्यमी ।
लीलाविशेषशालित्वान्निर्दोषोऽत्र गुणाः स्मृताः ॥
मिथो विरोधिनोऽप्येते केचिन्निगदिता गुणाः ।
हरौ निरंकुशैश्वर्यात्मकोऽपि न स्यादसम्भवः ॥भक्तिरसामृतसिन्धौ २।१।८९-९०

इत्यादिलक्षणान्विताभिः कन्याभिः व्रजे श्रीकृष्णः पतिभावयुक्तः समुपास्यते, ताः सर्वाः परकीयाः। व्रजस्थाः श्रीकृष्णेऽनुरक्ताः सर्वाः परकीया एव। एवंविधोक्ता परकीयाऽपि कन्या-प्रौढा चेति भेदेन द्विविधा।

व्रजवधूषु श्रीकृष्णस्य नित्यसहचरी, परमाह्लादिनी, महाशक्तिरूपा राधा मधुररसस्य सर्वोत्तमाश्रयणी वर्तते। परमसुन्दरो नन्दनन्दनः तस्याः प्रेम्ण आलम्बनं विद्यते। मधुररसस्याश्रयभूता राधा तु साक्षात्कृष्णमयी, प्रेमरसमयश्रीकृष्णस्वरूपा तथा मूर्त्तिमती-श्रीकृष्णक्रीडैव परिलक्ष्यते। सा च वयसा मध्यमा, स्वभावेन समा, प्रगाढप्रेमभावेन च वामा वर्तते।

भक्तिरसशास्त्रानुसारेण नायकनायिकयोः सम्बन्धानुसारेणाभिसारिका-वासकसज्जो-त्कण्ठिता-विप्रलब्धा-खण्डिता-कलहान्तरिता प्रोषितभर्तृका स्वाधीनभर्त्तृकेतिप्रभेदेनाष्ट-विधा नायिका वर्णिता। धीराधीरा-धीराधीरेतिभेदेनापि नायिका त्रिधा भवति। पुनश्च नायकप्रेमानुसारेणोत्तमा-मध्यमा-कनिष्ठाभेदेन त्रिविधा नायिका। तात्पर्यमिदं यत् त्रिपथगाधारेव रूप-वयः-प्रकृति-स्वभाव-प्रेमवृत्ति-प्रेमदशादिभेदेन नायिकाया भेदप्रभेदाः शताधिका भवन्ति। अत एव तस्य साङ्गोपाङ्गं निरूपणं विहाय भक्तिरस-दृष्ट्यैव केचन प्रभेदा निरूपिताः।

उद्दीपनभावस्तत्र भगवतोऽनुपमं रूपम्, गुणः, चेष्टा, अङ्गसौरभम्, प्रसाधनम्, भगवद्धाम, सत्सङ्गः, भक्तजनाश्च मधुररसस्योद्दीपका भवन्ति। गुण-नाम-चरित-मण्डन-सम्बन्धि-तटस्थेतिभेदेन मधुररसस्योद्दीपनभावाः षड्विधा भवन्ति। तत्रोद्दीपनगुणः कायिक-वाचिक-मानसिकभेदेन त्रिविधः, पुनः कायिकोद्दीपनगुणो वयो-रूप-लावण्य-सौन्दर्याभिरूपता-माधुर्य-मार्दवेतिभेदेन सप्तधा। तत्र वयोऽनुसारेण वयःसन्धिः, नवयौवनम्, व्यक्तयौवनम्, पूर्णयौवनञ्चेति चतुर्विध उद्दीपनभावः। कायिकगुणेषु रूप-लावण्य-सौन्दर्य-माधुर्यादीनां च वैशिष्ट्यं वर्तते। तत्राभूषितादङ्गान्निःसृता शोभैव रूपमिति[1]। मुक्ताफलस्याऽऽन्तरिकच्छायेवाङ्गेषु लोचनानन्दकरी कान्तिरेव लावण्य-मिति[2]। अङ्गप्रत्यङ्गानां सुश्लिष्टसन्धिबन्धजन्यो यथोचितं सन्निवेशः सौन्दर्यमिति[3]।

---

१. अङ्गान्यभूषितान्येव केनचिद् भूषणादिना।
येन भूषितवद् भाति तद्रूपमिति कथ्यते॥ उज्ज्वलनीलमणौ २३

२. मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते॥ उज्ज्वलनीलमणौ २६।

३. अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्।
सुश्लिष्टसन्धिबन्धः स्यात्तत्सौन्दर्यमितीर्यते॥ —उज्ज्वलनीलमणौ २९

नायकस्य नायिकाया वा शरीरस्य स्वाभाविकी मोहकता, मृदुता, रमणीयता, लालित्यं वा माधुर्यं कथ्यते ।

भरतमतानुसारेण सर्वास्ववस्थासु विशेषतया ललितेषु दीप्तिषु वा नायिकायाश्चेष्टा एव माधुर्यमिति[१] । एवमेव विश्वनाथमतेऽपि,[२] । धनञ्जयमते केवलमनुल्वणत्वमेव माधुर्यमिति[३] । रूपगोस्वामिमते रूपस्यानिर्वचनीयतैव माधुर्यमिति[४] । चरितोद्दीपनभावोऽनुभाव-लीलाभेदेन द्विविधः । तत्र चित्तस्थभावबोधकोऽनुभावः[५] । आलाप-विलाप-सन्देशादिभेदेन लीला बहुविधा । मण्डनोद्दीपनभावो वस्त्र-भूषण-माल्यधारणानुलेपनादिभेदेन चतुर्विधः । वंशी, शृङ्गध्वनिः, आभूषणानां झङ्कृतिः, प्रियसखिदर्शनम्, वृन्दावनम्, गोवर्धनादयश्च सम्बन्ध्युद्दीपका भवन्ति । चन्द्रिका, मेघः, विद्युत्, वसन्तः, चन्द्रादयश्च तटस्थोद्दीपका भवन्ति । तेषु श्रीकृष्णस्य मधुरमुरलीवादनं सर्वश्रेष्ठ उद्दीपकं प्रतिपादितम्, पूर्वोक्तापेक्षया स्मितः, अङ्गसौरभम्, कन्दुकक्रीडनम्, तुलसी च उद्दीपकाः सन्ति मधुरभक्तिरसस्य ।

अनुभावस्तत्र सामान्यतः कायिक-वाचिक-सात्त्विकभेदेन मधुररसस्यानुभावाः त्रिविधाः भवन्ति । तत्र कायिकस्य चाङ्गजायत्नज-स्वभावजभेदेन भेदत्रयं वर्तते । नायिकायाः सात्त्विकालङ्काररूपानुभावस्य 'उद्भास्वरवाचिकौ' द्वौ भेदौ स्तः । तत्र नीवीस्रंसनम्, उत्तरीयसंस्रनम्, केशसंस्रनम्, गाम्भीर्यपूर्वकाङ्गमर्दनम्, जृम्भाप्रभृतय उद्भास्वरोऽनुभावास्तथा आलापः, प्रलापः, विलापः, अनुलापः, संलापः, अपलापः, संदेहशः, अतिदेशः, निर्देशः, उपदेशः, अपदेशः, व्यपदेशश्चेति द्वादश वाचिकानुभावाः । तेषां वाचिकानां सूक्ष्मं पार्थक्यं प्रतिपादितमुज्ज्वलनीलमणौ[६] ।

---

१. सर्वावस्थाविशेषेषु दीप्तिषु ललितेषु च ।
अनुल्वणत्वं चेष्टायां माधुर्यमिति कीर्त्तितम् ॥
अभ्यासात् करणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥ नाट्यशास्त्रे २४।२७, ३३

२. सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ॥ साहित्यदर्पणे ३।६७ ।

३. दशरूपके—२।३६ ।

४. रूपं किमप्यानिर्वाच्यं तनोर्माधुर्यमुच्यते ॥ उज्ज्वलनीलमणौ

५. अनुभावस्तु चित्तस्थभावानामवबोधकः । भक्तिरसामृतसिन्धौ २।२।१ ।

६. चाटुप्रियोक्तिरालापो विलापो दुःखजं वचः ।
उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्यते ॥
व्यर्थालापः प्रलापः स्यादनुलापो मुहुर्वचः ।
आलापस्तु पूर्वोक्तस्यान्यथा योजनं भवेत् ॥

रूपगोस्वामिमतानुसारेण सहजप्रेमप्रादुर्भूताः किलकिञ्चितम्, कुट्टमितम्, विलासम्, ललितम्, बिव्वोकम्, मोट्टायितम्, मौग्ध्यञ्चेत्यनुभावा एव[1]। भोजविश्वनाथादिकाव्यशास्त्रज्ञानां मते, विच्छित्तिः, विभ्रमः, लीला, विलासः मदः, तपनम्, विक्षेपः, कुतुहलः, हसितम्, केलि; बोधकश्चेत्येतेऽपि सात्त्विकालङ्काररूपा अनुभावाः। मधुररसे काव्यशास्त्रज्ञैः प्रतिपादिताः परम्परागताः स्तम्भ-स्वेद-रोमाञ्च-स्वरभङ्ग-वेपथु-वैवर्ण्याश्रु-प्रलयाश्चेत्यष्टौ सात्त्विकभावा भवन्ति। ते च धूमायितज्वलितदीप्तोद्दीप्त-भेदाच्चतुर्विधाः। भक्तिरससाधनायां तेषां सर्वेषां सात्त्विकभावानां स्निग्ध-दिग्ध-रुक्षादिभेदेन वैविध्यं भवति[2]। सञ्चारिभावस्तु रूपगोस्वामिमते मधुररसे औग्र्यमालस्यं च विहाय काव्यशास्त्रज्ञैः प्रतिपादिताः सर्वे त्रयस्त्रिंशदेव। मधुररसस्योदाहरणं यथा—

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर—
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम्।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गतः
शृङ्गारः सखि! मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति॥ गीतगोविन्दे १।४।१०

## मधुररसस्य स्थायिभावाः

मधुररसस्य स्थायिभावो मधुरारतिर्विद्यते[3]। सा चाभियोगजा-वैषयिकी-सम्बन्धाऽभिमानजा-तदीयविशेषजन्योपमाजन्या-स्वाभाविकीतिभेदेन सप्तविधा भवति। साच मधुरारतिर्नायिकादृष्ट्या साधारणी-समञ्जसा-समर्थेति भेदेन त्रिविधा भवति। तत्र साधारणीरतिः स्वसुखात्मिकाऽस्ति। तत्र संभोगेच्छायाः प्राधान्यम्, नातिसान्द्रा सा रतिः कुब्जादिषु परिलक्ष्यते[4]। समञ्जसारतिर्भगवतो गुणादिश्रवणजन्या पत्नीभावसमन्विता सान्द्रात्मिका वर्तते। तत्रोभयनिष्ठारतिर्भवति। सा च रुक्मिणिसत्यभा-

---

सन्देशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत्।
अतिदेशस्तदुक्तानि मदुक्तानीति यद् वचः॥
अन्यार्थकथनं यत्तु सोऽपदेश इतीरितः।
यत्तु शिक्षार्थवचनमुपदेशः स उच्यते॥
निर्देशस्तु भवेत्सोऽयमहमित्यादिभाषणम्।
व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीरितः॥ उज्ज्वलनीलमणौ

१. उज्ज्वलनीलमणौ ३६। २. भक्तिरसामृतसिन्धौ २।३।२

३. स्थायिभावोऽत्र शृङ्गारे कथ्यते मधुरारतिः॥ उज्ज्वलनीलमणौ

४. नाति सान्द्राह्वे: प्रायः साक्षाद्दर्शनसम्भवा।
संभोगेच्छानिदानेयं रतिः साधारणी मता॥ उज्ज्वलनीलमणौ ३६

मादिषु लक्ष्यते। व्रजदेवीषु वर्तमाना समर्था सर्वश्रेष्ठा रतिर्भवति[1]। तत्र केवलं सर्वं कृष्णसुखायैव क्रियते। तत्र कथमपि संभोगेच्छा न खण्ड्यते, सा गोपीनां कृष्णविषयकभावः स्वरूपलक्षणेन तथा कृष्णस्य गोपीविषयकभावस्तटस्थलक्षणेन समास्वाद्यते। रूपगोस्वामिमतानुसारेण[2] साधारणीरतिर्मणिवन्नातिसुलभा, समञ्जसारतिः चिन्तामणिवत्सुदुर्लभा समर्थारतिश्च कौस्तुभमणिवदनन्यलभ्या वर्तते। एवमेव रामोपासनायामपि स्वसुखित्व-चित्सुखित्व-तत्सुखसुखित्वभेदेन त्रिधा भक्तिरुद्भाविता।

प्राक्तनरससिद्धानुसारेण स्त्रीपुसंयोः परस्परास्थाबन्धरूपरतिः शृङ्गारमधुररसरूपेण समास्वाद्यते सहृदयैः। तस्या विशदविवेचनं भावप्रकाशने कृतमिति[3]।

तात्पर्यमिदं यद् यथेक्षुमूलमुत्तरोत्तरमिक्षुदण्ड-रस-गुड-खण्ड-शर्करा-सिता-सितसाररूपतामासाद्य क्रमशो वैशिष्ट्यमादत्ते तथैव सान्द्रतमा समर्थारतिरपि प्रगाढप्रेमावस्थां प्राप्य क्रमशः प्रेम-स्नेह-मान-प्रणय-रागानुराग-भाव-महाभावरूपतामासाद्य चरमोत्कर्षत्वं प्राप्नोति। प्रेमादयः सर्वे रतेरेवोत्तरोत्तरविकासावस्था वर्तते। तेषां सूक्ष्मं विवेचनमुज्ज्वलनीलमणौ कृतं रूपगोस्वामिना।

---

१. साधारणी निगदिता समञ्जसासौ समर्था च।
कुब्जादिषु महिषीषु च गोकुलदेवीषु च क्रमतः॥ उज्ज्वलनीलमणौ ३७

२. मणिवच्चिन्तामणिवत्कौस्तुभमणिवत् त्रिधाभिमता।
नातिसुलभेयमभितः सुदुर्लभा स्यादनन्यलभ्या च॥ उज्ज्वलनीलमणौ ३८

३. परस्परस्वसंवेद्यसुखसंवेदनात्मिका।
याऽनुभूतिर्मिथः सैव रतिर्यूनोः सरागयोः॥
सम्पन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः।
नवयौवनयोः श्लाघ्यप्रकृत्योः श्रेष्ठरूपयोः॥
नारीपुरुषयोस्तुल्या परस्परविभाविका।
स्पृहाह्वया चित्तवृत्ती रतिरित्यभिधीयते॥
रतिरिच्छा भवेद् यूनोरुभयप्रार्थनात्मिका।
यूनोः परस्पराह्लादरहो विस्रम्भकारिका॥
सुखात्मिका मनोवृत्ती रतिरित्यभिधीयते।
आलापलीलोपचारचेष्टादृष्टिविलोकनैः॥
अन्योन्यभोग्यधीरेव रहः स्त्रीपुंसयोः रतिः।
इयमङ्कुरिता प्रेम्णा मानात् पल्लविता पुनः॥
सकोरका प्रणयतः स्नेहात्कुसुमिता भवेत्।
रागात् फलवती चेयमनुरागेण युज्यते॥ भावप्रकाशने चतुर्थाधिकारे

समान्यतः सर्वे प्रेमादयो मधुररसस्य स्थायिभावाः सन्ति । प्रेमा नाम रूपगोस्वामिमतानुसारेण सत्यपि ध्वंसकारणे ध्वंसरहितं स्त्रीपुरुषयोः मधुरभावबन्धनमेव[1] । नारदमतेऽनिर्वचनीयतत्त्वमेव प्रेमेति । अपि च तन्मते गुणरहितम् , कामनारहितम् , प्रतिक्षणं वर्धमानम् , अनवच्छिन्नम् , सूक्ष्मातिसूक्ष्मं तत्त्वमेव प्रेमेति कथ्यते[2] । मन्दमध्यमप्रौढभेदेन प्रेम्णोर्भेदत्रयं भवति । पुनश्च प्रियस्वभावानुसारेण प्रकृष्ट-प्रकृष्टतर-प्रकृष्टतमभेदेन तस्य भेदत्रयमिति, तत्र क्रमशोऽसहिष्णुता, कृच्छ्रसहिष्णुता, विस्मृतिश्चेति दशात्रयमनुभूयते ।

स्नेहः—स्वमाधुर्येण चित्तरूपनवनीतस्य द्रावकः प्रेमैव स्नेहत्वेनाभिधीयते[3] । स्नेहोदये सति प्रियतमस्य श्रीकृष्णस्य दर्शनेऽपि न तृप्यते भक्तैः । यथा तैलं दीपकं प्रज्वलयति तथैव स्नेहोऽपि प्रेमानुभूतिमुद्दीपयति, । घृतस्नेह-मधुस्नेहभेदेन स्नेहो द्विविधः । तत्र घृतस्नेहे प्रियतमं प्रति समादरस्याऽऽधिक्यं जायते, मधुस्नेहे प्रियतमं प्रत्यात्मीयताऽऽधिक्यमनुभूयते ।

मानः— स्नेहस्योत्कृष्टपरिणतिरेव मानः[4] । तत्र दाक्षिण्यस्याभावः परिलक्ष्यते । उदात्त-ललितभेदेन स द्विविधः, दाक्षिण्योदात्त-वाम्यगन्धोदात्तभेदेनोदात्तस्य द्वौ भेदौ, एवमेव कौटिल्य-नर्मललितभेदेन ललितोऽपि द्विविधः ।

---

१. सर्वथा ध्वसरहितं सत्यपि ध्वंसकारणे ।
यद् भावबन्धनं यूनोः स प्रेमा परिकीर्तितः ॥ उज्ज्वलनीलमणौ
सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः ।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥ भ० र० सिं० १।४।१

२. अनिर्वचनीयं प्रेमस्वरूपम् ॥ नारद भक्ति सूत्रे ५१
गुणरहितं कामनारहितं प्रतिक्षणवर्धमानमविच्छिन्नं सूक्ष्मतरमनुभवरूपम् ॥
नारदभक्तिसूत्रे ५४

३. विस्रम्भे परमां काष्ठामारुढे दर्शनादिभिः ।
यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥

४. स्नेहस्तूत्कृष्टतावाप्त्या माधुर्यमानयन्नवम् ।
यो धारयत्यदाक्षिण्यं स मान इति कीर्त्यते ॥ उज्ज्वलनीलमणौ
यत्तु प्रेमानुबन्धेन स्वातन्त्र्याद्धृदयङ्गमम् ।
बध्नाति भावकौटिल्यं सोऽयं मान इतीर्यते ॥

प्रणयः—मानस्योत्कृष्टपरिणतिरेव प्रणयः[1]। अथवा विश्वासमयरतिरेव प्रणयः। तत्राऽऽत्मोत्सर्गस्य प्राधान्यम्। प्रणयो निष्कामः, सात्त्विकः, शुचिश्च भवति। मैत्रसख्यभेदेन प्रणयो द्विविधः। उदात्तेन सह मैत्री-सुमैत्र्यं तथा ललितेन सह सख्यं सुसख्यमिति कथ्यते।

रागः—चरमोत्कर्षप्राप्तप्रणय एव रागः। रागोदये सति दुःखमपि सुखायत एव। यूनो वस्तुतो रतिभावस्यैव फलोन्मुखदशैव विद्यते। स च रागो नीली-कुसुम्भ-मञ्जिष्ठा-भेदेन त्रिविधो भवति। तत्र क्षालितेऽपि यो नापैति न वातिशयेन शोभते सो नीलीरागः, यः क्षालिते सति, त्वरितमपैति, स्थिते सति शोभते च सः कुसुम्भरागः, यस्तु क्षालितेऽपि नापैति, शोभते चातिशयेन सो मञ्जिष्ठारागो विद्वद्भिर्निगद्यते। एतत्सर्वं प्रतिपादितं भावप्रकाशने साहित्यदर्पणे च[2]।

अनुरागः—प्रियतमे पौनः पुन्येनानुभूतमपि सौन्दर्यं माधुर्यं च नित्यनवीनरूपेण समास्वाद्यत्वसम्पादको राग एवानुरागनाम्ना कथ्यते[3]। स चानुरागः परवशीभाव-प्रेमवैचित्र्य-जन्माभिलाष-विस्फूर्त्यादिभेदेन नानारूपो विद्यते। तेषु विप्रलम्भविस्फूर्ति-

१. बाह्यान्तरोपचारैर्यत् मानोपकल्पितैः।
बन्धनाति भावविस्त्रम्भसोऽयं प्रणय उच्यते॥

२. दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते।
येन स्नेहप्रकर्षेण स राग इति गीयते॥
रज्यते दीप्यते चित्ते स राग इति कथ्यते।
सुखदुःखात्मकं भोग्यं सुखत्वेनाभिमन्यते॥
येन रागः स इत्युक्तो रञ्जनाद्विषयात्मनोः।
नीली--कुसुम्भ--मञ्जिष्ठारागौपम्येन स त्रिधा॥
क्षालितो यस्तु नापैति यश्च नातीव शोभते।
नीलीरागः स एवेति कथितो रागवेदिभिः॥
योऽपैति क्षालितः क्षिप्रमध्यक्षं योऽपि शोभते।
कुसुम्भराग एवैष इति विद्वद्भिरीरितः॥
अतीव शोभते यस्तु नापैति क्षालितोऽपि सन्।
स एव कविभिः सर्वैर्मञ्जिष्ठाराग उच्यते॥ भावप्रकाशने चतुर्थाधिकारे
साहित्यदर्पणे—३।१९६–१९७

३. राग एव स्वसंवेद्यदशां प्राप्याप्रकाशितः।
यावदाश्रयवृत्तिश्चेदनुराग इतीरितः॥

रूपानुरागस्य प्राधान्यं भवति, यतो हि तत्रैव प्रियतमं प्रत्यनन्यता दृष्टिगोचरीभवति। श्रीशङ्कराचार्यमते प्रोषितपतिकानां प्रियतमं प्रति तन्मयतारूपोपासनैवानुरागः[1]। अनुरागयोग्यवस्तुनि परमासक्तिः परमानुरागः।

भावः—प्रतिक्षणपरिवर्धमानस्यानुरागस्य स्वयं संवेद्यचरमोत्कृष्टपरिणतिरेव भावः। स च चित्तस्य काठिन्यं दूरीकृत्य नवनीतवच्चित्तं द्रावयति। स च केवलं व्रजवनिताभिरेव समनुभूयते।

महाभावः—प्रोक्तात् सर्वस्माद्भिन्नोऽयं महाभावो भावस्य चरमपरिणतिरेव। तत्र सेव्यसेवकयोर्द्वैताद्वैतविलक्षणरूपानिर्वचनीयता समनुभूयते। स च महाभावः दग्धहेमवत् निर्मलः कामगन्धहीनः, स्वाभाविकगोपीप्रेमस्वरूपो विद्यते। तत्र समर्थारताविव संभोगविलासस्य प्राधान्यम्। स च हरिवल्लभाभिरप्यप्राप्यः, स्वसम्वेद्यत्वात् केवलं व्रजवनिताभिरेव प्राप्यते[2]। स च महाभावो रुढाधिरुढभेदेन द्विविधः। तत्र रुढमहाभावो महिषीगणेषु तथाऽधिरुढस्तु गोपीषु परिलक्ष्यते। तत्र पुनरधिरुढभावस्य मोदन-मादनभेदेन भेदद्वयमस्ति। मोदनोऽप्युद्घूर्ण-चित्रजल्पभेदेन द्विविधः। उद्घूर्णस्य विरहचेष्टा-दिव्योन्मादभेदेन द्वौ भेदौ स्तः। तत्र विरहचेष्टायां कान्ताश्लिष्टेऽपि मूर्च्छना, असह्यदुःखस्वीकारादपि तत्सुखकामिता, ब्रह्माण्डक्षोभकारित्वम्, तिरश्चामपि रोदनम्, मृत्युं स्वीकृत्यापि स्वपञ्चमहाभूतैरपि तत्सङ्गतृष्णा परिलक्ष्यते। चित्रजल्पस्तु प्रजल्प–परिजल्प–विजल्पोज्जल्प–संजल्पावजल्पाभिजल्पाऽऽजल्पप्रतिजल्प–सुजल्पभेदेन दशविधो भवति।

## विप्रलम्भमधुररसः

विप्रलम्भ-संभोगभेदेन मधुररसस्य द्वौ भेदौ भवतः। तत्र प्रियतमयुगलस्य वियोगदशा विप्रलम्भः[3], तयोस्तु संयोगः संभोगः। तत्र नाट्यदर्पणकार-विश्वनाथ-भोजराजमते

---

१. ध्यायति प्रोषितनाथा पतिमिति निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सा स्वमभिधीयते ॥ ब्रह्मसूत्रे १।१।४ शाङ्करभाष्य।

२. मुकुन्दमहिषीवृन्दैरप्यसावतिदुर्लभः।
व्रजदेव्येकसंवेद्यो महाभावाख्ययोच्यते॥ उज्ज्वलनीलमणौ १४४।

३. संभोगसुखास्वादलोभेन विशेषेण प्रलभ्यते आत्माऽत्रेति विप्रलम्भः॥
काव्यानुशासने २।३०

यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ॥ साहित्यदर्पणे ३।१८७

नायकनायिकयोः रतिप्रकर्षत्वेऽपि तयोः परस्परं मिलनरूपकार्याभाव एव विप्रलम्भ इति[1]। भानुदत्तमते यूनोः परस्परं प्रमुदितपञ्चेन्द्रियाणां पारस्परिकसम्बन्धाभाव एव सः[2]। रूपगोस्वामिमते संयोगस्याशाश्वतगतिरेव विप्रलम्भः.तं विना संयोगो न पुष्यति। तन्मते पूर्वराग-मान-प्रेमवैचित्र्य-प्रवासभेदेन विप्रलम्भश्चतुर्विधोऽस्ति।

पूर्वरागः—प्रसुप्तप्रेमदशा पूर्वरागः। तत्र प्रियतमस्य रूपदर्शनम्, गुणगणश्रवणम्, स्वप्न-चित्रादिदर्शनम्, दर्शनद्वारा प्रणयाभिलाषो जायते। तत्र प्रेमाङ्कुरं प्ररोहति। प्रौढ-समञ्जस-साधारणभेदेन पूर्वरागस्त्रिविधः। तत्र प्रौढे लालसा, उद्वेगः, जागरणम्, विभ्रमः, जाड्यम्, व्यग्रता, व्याधिः, उन्मादः, मोहः, मृत्युश्चेति दशदशा जायन्ते। समञ्जसेऽभिलाषः, चिन्ता, स्मृतिः, गुणकथनम्, उद्वेगः, विलापः, उन्मादः, जडता, मृत्तिश्चेति दशदशा जायन्ते। साधारणे चाभिलाषः, चिन्ता, स्मृतिः, गुणकीर्त्तनम्, उद्वेगः, विलापश्चेति षडवस्था भवन्ति। पूर्वरागे परस्परं कामपत्रादिकमपि लिख्यते। न्यूनाधिकमेवमेव प्राक्तनरससिद्धान्तेऽपि प्रतिपादितमिति[3]। भक्तिरससाधनायां राधाकृष्णयोर्मनसि परस्परं प्रेमोदय एव पूर्वरागो निगद्यते।

मानः—अनुरक्तप्रियतमयोरेकत्र सहवासेऽपि परस्परं स्वाभिलषितभावस्य निरोधको भावो मानः। मानात् संभूतस्य विप्रलम्भमानस्य निरुक्तिः स्वरूपश्च निरूपितं श्रीशिङ्गभूपालेन। सहेतुर्निर्हेतुभेदेन स द्विविधः[4]। मानस्योपशमनं मधुरालापोपहारदोषस्वीकृति-क्षमायाचनादिभिर्जायते[5]। व्रजवनितानां मानोपशमनं तु मधुरमुरलीनिनादेन जायते।

---

१. परस्परानुरक्तयोरपि विलासिनोः पारतन्त्र्यादेरघटनं चित्तविश्लेषो वा विप्रलम्भः
—नाट्यदर्पणे तृतीयविवेके

साहित्यदर्पणे—३।१८७। सरस्वतीकण्ठाभरणे ५।२५।

२. रसतरङ्गिण्याम् ६। ३. साहित्यदर्पणे ३।१८८-१९२

४. मुहुः कृतो मेति मेति प्रतिषेधार्थवीप्सया।
ईप्सितालिङ्गनादीनां निरोधो मान उच्यते॥
सोऽयं सहेतु-निर्हेतुभेदाद् द्वेधाऽत्र हेतुजः।
ईर्ष्यया संभवेदीर्ष्या त्वन्यासङ्गिनि वल्लभे॥
असहिष्णुत्वमेव स्याद् दृष्टेरनुमितेः श्रुतेः॥ रसार्णवसुधाकरे द्वितीयविलासे

५. निर्हेतुकः स्वयं शाम्येत् स्वयग्राहस्मितादिभिः।
हेतुजस्तु शमं याति यथायोग्यं प्रकल्पितैः॥
साम्ना भेदेन दानेन नत्युपेक्षारसान्तरैः॥ रसार्णवसुधाकरे—

प्रेमवैचित्र्यम्—प्रेमोत्कर्षेण समीपस्थेऽपि प्रियतमे वियोगशङ्कया जायमाना पीडैव प्रेमवैचित्र्यम्। तच्च रूपानुरागाऽऽक्षेपानुरागरसोद्गारभेदेन त्रिविधं जायते। तत्र प्रियतमे रूपकृतासक्ती रूपानुरागः, प्रेमाधिक्येन प्रियतमेन सम्बद्धानां वस्तूनां व्यक्तीनां स्वस्य वा दोषदर्शनमाक्षेपानुरागः, व्यतीतमधुरस्मृतीनां स्मरणं रसोद्गारः कथ्यते।

प्रवासः—प्रियतमयोः यूनोः परस्परं पूर्णविश्लेषः प्रवासः। कार्यवशात् शापवशात् संभ्रमवशाद्वा प्रियतमयोर्यूनोः परस्परं भिन्नदेशस्थितिः प्रवासो निगद्यते। प्रवासे भिन्नदेशस्थितेः पूर्वं यूनोः परस्परं समानदेशस्थितिः समागमश्चावश्यमेव भवितव्यः[1]। उपवासानन्तरं भोजने यथा विचित्रमानन्दमनुभवति भोक्ता तथैव प्रवासानन्तरं परस्परं यूनोः समागमे सत्यानन्दाधिक्यमनुभूयते[2]।

एवमेव सरस्वतीकण्ठाभरणे श्री भोजराजेन निरुक्तिपूर्वकं प्रवासस्य स्वरूपं विशदेन निरूपितमिति[3]। अदूरसुदूरभेदेन प्रवासो द्विविधः। तत्र राधाकृष्णयोः लीलाप्रसङ्गे कालीयदमनेन, गोचारणेन, नन्दमोक्षेन, कार्यानुरोधगमनेन, रासलीलाविलासेन प्रियतमस्य श्रीकृष्णस्यादूरप्रवासेनापि राधादिव्रजवनिताः परं दुःखमनुभवन्ति। अत एव विलपन्ति च सततम्। सुदूरप्रवासे प्रियतमा प्रियतमाच्चिरकालवियुक्ता सती विरहवेदनामनुभवति, मृतप्राया अपि जायते। भक्तिशास्त्रेषु राधाकृष्णयोः सुदूरप्रवासजनितविरहवेदनायाः कारुणिकं मार्मिकञ्च चित्रं चित्रितं भक्तसाधकैः।

---

१. पूर्वसंगतयोर्यूनोर्भवेद् देशान्तरादिभिः।
चरणव्यवधानं यत् स प्रवास इतीरितः॥
तज्जन्यो विप्रलम्भोऽपि प्रवासत्वेन सम्मतः।

२. प्रवासानन्तरे तस्याभ्यवहारार्थतेष्यते।
तत्र ह्युपोषितैरन्नमिव निर्विश्यते रतिः॥

३. यत्राङ्गना युवानश्च वसते न वसन्ति च।
स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते॥
चित्तोत्कण्ठादिभिश्चेतो भृशं वासयतीह यः।
प्रवासयति वा यूनः स प्रवासो निरुच्यते॥
प्रपूर्वको वसिर्ज्ञेयः कारितान्तःप्रमागणे।
तूष्णीं प्रवासयेदेनमिति वृद्धानुशासनात्॥ सरस्वतीकण्ठाभरणे ५ परिच्छेदे

## संभोगमधुररसः

समुपसर्गपूर्वकात् पालनकौटिल्याभ्यवहारानुभूत्यर्थकात् भुज्धातोर्भावे घञ्प्रत्यये सति संभोगशब्दो निष्पद्यते। यूनोर्हृदये परस्परं समुत्पन्नरतिभावस्य परिपालनम्, प्रेम्णः कुटिलमार्गे यूनोः पारस्परिकप्रेमभोगः, तयोरुत्कण्ठापूर्वकरतिसुखस्य लाभः, तयोश्च निर्द्वन्द्वप्रेमानन्दानुभवश्चेति चतुर्वैशिष्ट्यं संभोगस्यैव क्रमशो विकासावस्था वर्तते। संभोगस्य विशदविवेचनं कृतं भोजराजेन सरस्वतीकण्ठाभरणे[1]।

प्रियतमयोर्यूनोः परस्परं दर्शन-स्पर्शनजन्याऽऽनन्दः संभोगः[2]। भानुदत्तमतानुसारेण दर्शन-स्पर्शन-संलापादिभिरनुभूयमानं सुखं संभोगः[3]। पण्डितराजजगन्नाथमते प्रियतमयोः साहचर्यपूर्विका पारस्परिकप्रेमानुभूतिरेव संभोगः। भरतमतानुसारेण संभोगस्तु ऋतुरमणीयतामाल्यानुलेपनालङ्कार-प्रियजनसंसर्ग-रम्यभवनोपवनगमन-प्रियदर्शनादिभिर्विभावैर्निष्पद्यते। संभोगश्चायं यथा कषायिते वस्त्रादौ रागो भूयान् वर्धते तथैव विप्रलम्भानन्तरमेव संभोगः सम्यक्तया प्रकर्षत्वं प्राप्नोति[4]। स च नयनचातुर्य-भ्रूविक्षेप-कटाक्षादिभिरनुभावैरभिव्यज्यते। प्रियतमयोर्यूनोः पारस्परिकव्यवहारभेदेन परस्परं दर्शनम्, स्पर्शनम्, आलिङ्गनम्, परिचुम्बनमित्यादिभेदेन च संभोगः शतधायते। त्रासाऽऽलस्योग्रताजुगुप्सा-मृत्यून् विहाय सर्वे सञ्चारिणो भवन्त्यत्र।

लौकिकदृष्ट्या प्रियतमयुगलस्य संयोगरूपः संभोग एव पारमार्थिकदृष्ट्या राधाकृष्णयोरथवा प्रियतमारूपजीवात्मनः प्रियतमरूपपरमात्मनश्च संयोगे संभोगमधुररसः समास्वाद्यते। यद्यपि प्रियतमयुगलस्य संयोगवियोगौ लोक एव परिदृश्येते, न तु व्याप्यव्यापकयोर्जीवात्मपरमात्मनोः साध्यसाधकयोः, तत्कथं संयोगवियोगौ संभवेताम्। तत्र साधकानां मते यैः कारणैर्निर्गुणमपि ब्रह्म सगुणायते, तैरेव कारणैर्व्यवहारिकदृष्ट्या जीवात्मपरमात्मनोर्लीलायां संयोगवियोगौ समुद्भाव्येते साधकैः। अत एव भक्तिरस-

---

१. भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु।
भुनक्ति भुग्नो भुक्तेऽन्नं भुङ्क्ते सुखमितीष्यते॥
समीचीनार्थसंपूर्वात्ततो घञ्प्रत्यये सति।
भावे वा कारके वापि रूपं संभोग इष्यते॥ सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदे

२. साहित्यदर्पणे—३।२१० ३. रसतरङ्गिण्याम् ६

४. न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते॥

साधनायां हरेस्तद्वल्लभानां च परस्परं विविधान् सम्बन्धान् परिकल्प्य विप्रलम्भ-संभोगमधुररसः समास्वाद्यते रसिकोपासकैः।

मुख्यगौणभेदेन संभोगो द्विविधः। पुनः संक्षिप्त-संकीर्ण-समृद्ध-सम्पन्नभेदेन मुख्यसंभोगश्चतुर्विधस्तथा सामान्यविशेषभेदेन गौणसंभोगो द्विविधो विद्यते। तत्सर्वं सुविशदं निरूपितं रूपगोस्वामिना 'उज्ज्वलनीलमणौ' मधुररसप्रतिपादके भक्तिशास्त्रे।

## परकीयोपासनाया दार्शनिकं विवेचनम्

मधुरभक्तिरससाधनायां परकीयोपासनैव सर्वश्रेष्ठा विद्यते। अर्थात् मधुररसस्य चरमपरिणतिः परकीयोपासनायामेव परिदृश्यते। यथा चिन्तमणिः प्रदीपबुद्ध्याऽपि परिगृहीतः सन् वस्तुतश्चिन्तामणिरेव न तु प्रदीपस्तथैव भगवति जारबुद्ध्याऽपि प्रवृत्तौ सत्यां भगवत एव प्राप्तिर्जायते, न त्वन्यस्य। इत्थञ्च परकीयोपासनायां परकीय-प्रियतमारूपजीवात्मन उपपतिरूपप्रियतमपरमात्मनश्च परस्परं प्रदर्शितप्रणयव्यापारद्वारा-ऽनन्यासक्तिरेव चरमोत्कर्षं फलं विद्यते।

श्रीकृष्णभक्तिसम्प्रदायेषु गौडीयवैष्णवभक्तिसाधनायां च परकीयोपासनायाः प्राधान्यं वर्तते। तदुपासकानां मते यथा शान्तभक्तिरसापेक्षया दास्यभक्तिरसे, तदपेक्षया सख्यभक्तिरसे, तदपेक्षया वात्सल्यभक्तिरसे, तदपेक्षया मधुरभक्तिरसे भगवद्विषयिणी रतिः क्रमश उत्तरोत्तरमधिकाधिकरूपेण चरमोत्कर्षत्वमेति तथैव यद्यपि स्वकीयायां परकीयायाञ्चोपासनायां भगवद्विषयकरतेर्विकासो जायते, किन्तु स्वकीयापेक्षया परकीयोपासनायामेव भगवद्रतेः पूर्णविकासो भवति। तत्रैव मधुररसरसिकैः परमानन्दः समनुभूयते। यद्यपि शिष्टैः परकीयोपासना विगर्ह्यते किन्तु मधुरभक्तिरससा-धनायां परकीयोपासनैव चरमोत्कर्षफलामिति स्वीक्रियते मधुररसरसिकैः। गोपा-ङ्गनैव परकीयोपासनायाः परमावधिस्तत्रापि मधुरमधुमयी कलधौतद्युतिधैरेयकश्रीः, वदनदमितराकारोहिणी, कान्तकीर्तिः, मदमत्तचकोरचारुताचोरदृष्टिः श्रीराधा सर्वोपरि स्वीक्रियते। सैव परकीयाभावस्य चरमोदाहरणभूता, प्रमाणस्वरूपा वा विद्यते।

गौडीयवैष्णवसम्प्रदायेऽपि वस्तुतो गोपीनां श्रीकृष्णेन सह परकीयात्वं न स्वीक्रियते, अपि तु प्रकटलीलायामेव तासां गोपीनां परकीयता, अन्यथा गोप्यः श्रीकृष्णस्य स्वीया एव[1]। एवञ्च जीवगोस्वामिमते परकीयोपासनायां न किमपि जुगुप्सितत्त्वमिति। अत एव तन्मते जुगुप्सितत्त्वं तु प्राकृतनायक एव संभवेत् न तु दिव्यनायके भगवति। तत्र तु

१. वस्तुतः परमस्वीयाः, अपि प्रकटलीलायां श्रीव्रजदेव्यः। प्रीतिसन्दर्भे पृष्ठे ६८४१।

सर्वमेवोपयुज्यते, यतो हि परमात्मैव सर्वेषां पतिरस्ति[1] । यद्यपि भारतीयसमाजे परकीयोपासना विगर्ह्यते, धर्मशास्त्रानुसारेण च परकीयाभावभावितानां नरकगामिता प्रतिपादिता, तथापि सुखविशेषलाभाय यथा नारी परपुरुषं सेवते तथैव व्रजवल्लभा अपि लोकपरलोकादिसकलचिन्तां विहाय श्रीकृष्णमेव भजन्तीति परकीयात्वमभीष्टमिति ।

यद्यपि रसिकोपासनायां राधादयो व्रजवल्लभाः श्रीकृष्णस्य स्वकीया एव, किन्तु रसविशेषलाभाय लीलादृष्टया च तासां परकीयात्वं निरूप्यते । वस्तुतस्तत्र योगमायाप्रभावेण व्रजवल्लभानां प्रतिकृतय एव पतिं मन्यमानानां गोपानां गृहे स्थिता आसन्, प्रकृतगोपीनां तु तैः सह संगमः कदापि नाभूत्[2] । एवमेव भागवतेऽपि प्रतिपादितम्[3] । अपि च पूर्वोक्तमायाकल्पितत्वं विश्वनाथचक्रवर्तिना स्वीकृतम्[4] । एवञ्च परिदृश्यते व्रजवल्लभाः स्वप्रियतमेन श्रीकृष्णेन सह रमणशीलाः सततं स्वपतिं विहाय श्रीकृष्णमभिसरन्तिस्म । एवञ्च परिज्ञायते व्रजवल्लभाभिः सह श्रीकृष्णस्य वासनात्मककामो नास्ति, अपितु परस्परं विशुद्धं प्रेमैव विद्यते । इत्थञ्च ज्ञायते भक्तिरससाधनायां परकीयोपासनाया महद्वैशिष्ट्यं वर्तते ।

पूर्वोक्ततर्कानुसारेण यद्यपि व्रजवल्लभानां शुद्धत्वं सच्चरितत्वं पातिव्रत्यञ्च प्रतिपादितम्, किन्तु 'कान्तासम्मितयोपदेशयुजे' इति सत्काव्यप्रयोजनमुरपतिना सह कृतव्यवहारेण व्याहन्यते । तत्र भक्तानां मते स्वकल्याणमिच्छद्भिः साधकैर्भक्तवत्

---

१. यत्तु कश्चित्परकीयासु लघुत्वं व्यनक्ति, तत्खलु प्रकृतनायकमवलम्बमानासु युक्तम्, तत्रैव जुगुप्सितत्वात् । अत्र तु गोपीनां तत्पतीनां चेत्यादिना तत्प्रत्याख्यानात् ॥ प्रीतिसन्दर्भे पृ० ६४७ श्रीजीवगोस्वामिकृते ।

२. मायाकलिततादृक्स्त्रीशीलनेनानसूयुभिः ।
न जातु व्रजदेवीनां पतिभिः सह सङ्गमः ॥ उज्ज्वलनीलमणौ ३१ ।

३. नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान्व्रजौकसः ॥ -भागवते ११।३३।३८

४. मायया योगमाययैव, न तु बहिरङ्गया मायया । भगवतो धाम्नि सिद्धपरिवारेषु च तस्या अधिकाराभावात् । तन्मोहितानां भगवद्वैमुख्यस्यावश्यंभावात्, तेषां गोपानां तु भगवद्वैमुख्य मात्रादर्शनात् ॥
भागवते १०।३३।३८ सा० द० टीकायाम्

वर्तितव्यम्, न तु श्रीकृष्णवदिति[1] भक्तिशास्त्राणां तात्पर्यम् ।

## गौणभक्तिरसस्य निरूपणम्

'रसो वै सः' तथा 'मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ' इत्यादिना रसो यद्यपि सच्चिदानन्दस्वरूपः सदाऽखण्ड एकरूपश्च तथापि भक्तभावानुसारेण उपासनाभेदेन च भक्तिरसज्ञानां मते मुख्यगौणभेदेन भक्तिरसो द्वादशप्रकारको विद्यते । तत्र शान्त-प्रीति-प्रेयो वात्सल्य-मधुरभेदेन पञ्चविधो मुख्यभक्तिरसः प्रथमं प्रतिपादितः, अग्रे च हास्याद्भुत-वीर-करुण-रौद्र-भयानक-वीभत्सभेदेन सप्तविधगौणभक्तिरसः प्रतिपादिष्यते । वस्तुतस्तु भक्तिरसज्ञैः प्रोक्ताः पञ्चभेदा एव भक्तिरसप्रभेदेषु गण्यन्ते । हास्यादयः सप्तगौणरसास्तु मुख्यभक्तिरसस्य सञ्चारिण एव[2] । यथा काव्यरसज्ञानां मते काव्यशास्त्रानुसारेण भक्तिः केवलं भावमात्रमेव न तु रसो भवितुमर्हतीति तथैव भक्तिरसज्ञानां मते रसशास्त्रपरम्परया रससंज्ञां प्राप्ता हास्यादयो रसा भक्तिरसशास्त्रानुसारेण केवलं सञ्चारित्वमेव प्राप्नुवन्ति, न तु रसत्वमिति । किन्तु प्राचीनरसशास्त्रभक्तिरसशास्त्रयोः सर्वथा परम्पराभङ्गो न भवेदित्याशयेन सप्तगौणभक्तिरसा भक्तिरसनाम्ना प्रतिपाद्यन्ते । ते सर्वे गौणभक्तिरसा न्यूनाधिकपरिवर्तनेन सह सामान्यतया काव्यशास्त्रपरम्परयैव निरूप्यन्ते[3] ।

सप्तविधगौणभक्तिरसास्तदैव भक्तिरसरूपेण स्वीक्रियन्ते यदा तेषां स्थायिभावः श्रीकृष्णरतिर्भवेत् । श्रीकृष्णसम्बन्धं विना ते कथमपि रसत्वं न लभन्ते । श्रीकृष्णरत्यन्तर्गतत्वेन सप्तविधगौणरसानां हासशोकादयः स्थायिभावा अन्तर्भाव्यन्ते । यद्यपि श्रीकृष्णभक्तिः सामान्यतया हासोत्साहादीनां प्राकृतरसस्थायिनां तथा तैर्निष्पन्नानां हास्यवीरादीनां रसानामपेक्षां न कुरुते तथापि यदा प्राकृतरसस्थायिभावानां येन केन प्रकारेण

---

१. वर्तितव्यं शमिच्छद्भिर्भक्तवन्न तु कृष्णवत् ।
इत्येवं भक्तिशास्त्राणां तात्पर्यस्य विनिर्णयः ॥
रामादिवत् वर्तितव्यं न क्वचिद् रावणादिवत् ।
इत्येष मुक्तिधामादिपराणां नय इष्यते ॥ उज्ज्वलनीलमणौ

२. अमी पञ्चैव शान्ताद्या हरेर्भक्तिरसा मताः ।
एषु हासादयः प्रायो बिभ्रति व्यभिचारिताम् ॥ भतिरसामृतसिन्धौ ४।१।६

३. हास्यादीनां रसत्वं यद् गौणत्वेनापि कीर्त्तितम् ।
प्राचां मतानुसारेण तद्विज्ञेयं मनीषिभिः ॥ भक्तिरसामृतसिन्धौ ४।७।८

कृष्णरत्या सह सम्बन्धो जायते तदा तैर्निष्पन्नानां हास्यादीनां हास्यभक्तिरसः, वीरादीनां वीरभक्तिरस इत्यादयः संज्ञा भवन्ति ।

भक्तिरसतत्त्वमर्मज्ञैः रसविषये रसाचार्यस्य भरतस्य मतं सर्वथा नापेक्षितम् । किन्तु तत्र सूक्ष्मातिसूक्ष्मदृष्ट्या रसविषये विविधमतं समुद्भाव्य पुनस्तत्रैव समुद्भाविता-नामन्तर्भावो विहितः । अस्ति चेत् कुत्रापि पार्थक्यम्, तत्रापि भक्तिरसशास्त्रानुसारेण केवलमुपासनादृष्ट्यैव । अस्मिन् विचारप्रसङ्गे विचारणीयमेतद् यद् भरतमतानुसारमेव भक्तिरसशास्त्रेऽपि वस्तुतोऽष्टौ स्थायिभावास्तथाऽष्टावेव रसाः प्रतिपादिताः । प्रत्यक्षतया द्वादशविधप्रतिपादितभक्तिरसविषये विचारणीयं यद् भक्तिरसे प्रतिपादिता पञ्चविध-मुख्यरतिस्तु रतित्त्वेनैकैव, अर्थात् मुख्या रतिः केवलमेकैव, भक्तभावानुसारेण सैव पञ्चधा । गौणरतिः सप्तधा । एवञ्च परिदृश्यते भक्तिरसेऽपि मुख्यगौणभेदेऽपि अष्टावेव-रसाः[1], ये भरतसम्मतरससंख्यां नातिशेरते । ते सप्तगौणरसाः, तेषां भेदाः, उपभेदाः, विभावानुभावसञ्चारिणश्च काव्यशास्त्रपरम्परयैव भक्तिशास्त्रेऽपि निरूप्यन्ते किन्तु तेषां सम्बन्धो येन केनापि प्रकारेण भगवता श्रीकृष्णेन सह स्थाप्यन्ते, नो चेद् तेषु भक्तिरसशास्त्रानुसारेण भक्तिरसप्रभेदत्वं न स्यात् ।

## हास्यभक्तिरसः

स्वसमुचितैर्विभावाद्यैः परिपुष्टिं गता हासरतिरेव भक्तिरसरूपेण परिणमते[2] । तस्य हास्यभक्तिरसस्य स्थायिभावो हासरतिरस्ति[3] । रसेऽस्मिन् श्रीकृष्णः तदन्वयी, शिशुः, वृद्धो वाऽऽलम्बनभावा भवन्ति । तत्र श्रीकृष्णो विषयालम्बनभावः, तस्य चेष्टादय उद्दीपनभावाः । श्रीकृष्णाश्रयस्य नासिकौष्ठकपोलादीनां स्पन्दनादयोऽनुभावाः, हर्षाऽऽलस्यावहित्थादयः सञ्चारिणो भवन्ति । ते सर्वे मिलित्वा हास्यरसरूपतां गताः सन्तः समास्वाद्यन्ते रसिकैः । प्रोक्ता हासरतिः स्मिति-हसित-विहसितावहसितापहसिता-तिहसितभेदेन षड्विधा भवति ।

---

१. पञ्चधापि रतेरैक्यान्मुख्यस्त्वेक इहोदितः ।
सप्तधाऽत्र तथा गौण इति भक्तिरसोऽष्टधा ।। भक्तिरसामृतसिन्धौ २।५।६५

२. वक्ष्यमाणविभावाद्यैः पुष्टिं हासरतिर्गता ।
हास्यभक्तिरसो नाम बुधैरेष निगद्यते ।। भक्तिरसामृतसिन्धौ ४।१।५

३. सा हासरतिरेवात्र स्थायिभावतयोदिता ।। भक्तिरसामृतसिन्धौ ५।१।६

हास्यभक्तिरसस्योदाहरणं यथा—

यास्याम्यस्य न भीषणस्य सविधे जीर्णस्य शीर्णाकृते-
र्मतिर्नेष्यति मां विधाय कपटादाधारिकायामसौ ।
इत्युक्त्वा चकिताक्षमद्भुतशिशावुद्वीक्षमाणे हरौ,
हास्यं तस्य निरुन्धतोऽप्यतितरां व्यक्तं तदाऽऽसीन्मुनेः ॥

भक्तिरसामृतसिन्धौ ४।१।७ श्लोकस्योदाहरणस्थः

## अद्भुतभक्तिरसः

स्वसमुचितैर्विभावादिभिर्भक्तानां चेतसि परिपुष्टा सती विस्मय एवाद्भुतरसरूपेण समास्वाद्यते[1]। रसेऽस्मिन् लोकोत्तरक्रियाकरणं श्रीकृष्णस्तस्य भक्ताश्चाऽऽलम्बनविभावाः, आलम्बनस्य नेत्रादीनां विस्तारः, स्तम्भः, रोमाञ्चादयश्चोद्दीपनभावाः, तस्याऽऽवेगः, हर्षः, जाड्यादयश्च सञ्चारिणः सन्ति। स्थायिभावस्तु विस्मयरतिः। रसेऽस्मिन् सर्वप्रीतिकरस्य श्रीकृष्णस्याद्भुतचमत्कारो विस्मयरत्या सहाद्भुतरसं निष्पादयति भक्तचेतसि।

अद्भुतभक्तिरसस्योदाहरणं यथा—

चराचरजगज्जालसदनं वदनं तव ।
गलद्गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना ॥ रसगंगाधरे पृष्ठे १६५

## वीरभक्तिरसः

आत्मोचितैर्विभावादिभिः परिवर्द्धमाना उत्साहरतिरेव भक्तानां चेतसि वीरभक्तिरसरूपेण[2] निपीयते[3]। अस्य रसस्य युद्ध-दान-दया-धर्मादयश्चाऽऽलम्बनभावाः, शस्त्रग्रहणादिकमुद्दीपनभावः, समरे धैर्यधारणम्, भयभीतशरणागतस्य रक्षादयश्चा-

---

१. आत्मोचितैर्विभावाद्यैः स्वाद्यत्वं भक्तचेतसि ।
सा विस्मयरतिर्नीताऽद्भुतभक्तिरसो भवेत् ॥ भक्तिरसामृतसिन्धौ ४।२।१

२. वीरशब्दस्य व्युत्पत्तिलभ्यशब्दार्थस्तु—
विरुद्धानराति हन्तीति वीरशब्दस्य निर्वहः ॥
विविधं च विचित्रं च लाति जानाति कृन्तति ।
एवं वा वीरशब्दार्थः कथितः पूर्वसूरिभिः ॥
प्रेरयत्यत्र विद्विष्टानिति वीरो निरुच्यते ।"

३. सैवोत्साहरतिः स्थायी विभावाद्यैर्निजोचितैः ।
आपीयमाना स्वाद्यत्वं वीरभक्तिरसो भवेत् ॥ भक्तिरसामृतसिन्धौ ४।३।१

नुभावाः। हर्षादयश्च सञ्चारिणो भवन्ति, स्थायिभावश्चोत्साहरतिर्विद्यते।
दशरूपककारमते दया-युद्ध-दानभेदेन वीररसः त्रिधा[1] भवति,—
एवमेव किन्तु न्यूनप्रभेदेन सह धर्म-दान-युद्धभेदेन भेदत्रयमेव स्वीकृतं हेमचन्द्राचार्येणापि[2]।

नाट्यदर्पणकारमते वीररस उपाधिभेदात् नानाविधो भवति[3]—

युद्ध-दान-दयानां स्वरूपं विशदरूपेण भावप्रकाशने प्रतिपादितम्[4],

काव्यशास्त्रसदृशमेवात्रापि वीरभक्तिरसस्य युद्ध-दान-दयाधर्मश्चेति चतुर्भेदा भवन्ति। तत्र युद्धवीरे श्रीकृष्णस्य सखा एवाऽऽलम्बनविभावः, न तु शत्रवः। यतो हि भक्तिरसज्ञानां मते श्रीकृष्णस्य सखिभिः सह युद्धं भक्तानां चेतसि समुत्साहं वर्द्धयति, किन्तु शत्रुभिः सह तस्य युद्धं तु भक्तचेतसि क्षोभं जनयति। तत्तु रौद्रालम्बनमेव भवेत्[5]। रौद्रे नेत्रयोः रक्तत्वं युद्धवीरे च मुखस्य रक्तत्वं भवतीति तयोर्भेदः।

रसेऽस्मिन् आत्मश्लाघी, विस्पर्धात्मकः, अस्त्रादियुक्तः, प्रतियोद्धा एवोद्दीपनभावः,

१. वीरः प्रतापविनयाध्यवसायसत्वमोहाविषादनयविस्मयविक्रमाद्यः।
उत्साहभूः स च दया-रण-दानयोगात् त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः॥

२. "नायकादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्म-दान-युद्धभेदो वीरः। काव्यानुशासने—

३. "स चानेकधा युद्ध-धर्म-दान-गुण-प्रतापावर्जनाद्युपाधिभेदात्॥"

४. निरायुधस्याप्येकस्य हीनस्यापि परिच्छदैः।
अभीतिर्बहुभिर्युद्धं व्यवसायो रणे मदः।
हर्षः शस्त्रास्त्रघातेषु समरादपलायनम्॥
एवं युद्धात्मको वीरस्तज्ज्ञैः कविभिरीरितः॥
अर्थिनाभीप्सितादर्थात् प्रदायेभ्योऽधिकं बहु।
अर्थिनः पुनरायातान् स्वजनानितरानपि।
यन्मानयति दानेन वाक्येन मधुरेण च।
एतद्दानात्मको वीरः कथ्यते दानशालिभिः॥
व्याधि-दारिद्र्यशस्त्रास्त्रक्षुत्पिपासादिपीडितान्।
अनुगृह्णाति यः प्रीत्या स वीरः स्याद् दयात्मक,।
भावप्रकाशने—३ अधिकारे

५. सुहृदेव प्रतिभटो वीरे कृष्णस्य न त्वरिः।
स भक्तक्षेमकारित्वाद् रौद्रे त्वालम्बनो रसः॥ भक्तिरसामृतसिन्धौ ४।३।१२

अहङ्कारिता, सिंहनादः, आक्रोशः, निरालम्बनम्, युद्धजिज्ञासा, समराङ्गणेऽपलायनमित्यादयश्चानुभावाः, आवेगः, गर्वः, धृतिः, व्रीडादयश्च सञ्चारिणस्तथा युद्धोत्साहरतिरेव स्थायिभावो भवति ।

दानवीरो बहुप्रदोपस्थिततदुरापार्थत्यागिभेदेन द्विधा । तत्र भगवत्सौख्यार्थं स्वसर्वस्वसमर्पको बहुप्रदो यथा राजाबलिप्रभृतयः । तत्र दानपात्रविषये सम्यगालोचनमेवोद्दीपनभावः, अर्थिवाञ्छयाऽधिकप्रदानम्, हास्यपूर्वकसम्भाषणम्, नम्रतादयश्चानुभावाः, औत्सुक्यादयश्च सञ्चारिणस्तथा दानोत्साहरतिः स्थायिभावो भवति । बहुप्रदोऽपि आभ्युदयिकसम्प्रदानकभेदेन द्विविधः । तत्र श्रीकृष्णस्याभ्युदयार्थमर्थिभ्यः सर्वदाताऽऽभ्युदयिकस्तथा प्रीतिपूजाभ्यां श्रीकृष्णाय स्वसर्वस्वप्रदानं सम्प्रदानकदानवीरभक्तिरसः कथ्यते । भगवद्द्वारा प्रदत्तमपि दुरापार्थैश्वर्यवाञ्छारहितः साधक उपस्थिततदुरापार्थत्यागी दानवीरो निगद्यते ।

दयावीरे भक्तो दयार्द्रो भूत्वा क्रमेण श्रीभगवदर्थं स्वशरीरमपि समर्पयति । एवञ्च स्वप्राणानविगणय्य दुःखितानां समुद्धाराय प्रयतते । तदेवोद्दीपनभावः, औत्सुक्यादयश्च सञ्चारिभावा भवन्ति ।

धर्मवीरे श्रीकृष्णस्य प्रसन्नतायै धर्मे परमनिष्ठा यस्य भक्तस्य चेतसि समुत्पद्यते सः प्रोक्तरसयुक्तः साधकः । तत्र सच्छास्त्रादीनां श्रवणमुद्दीपनभावः, आस्तिक्यसहिष्णुतादयश्चानुभावाः, मतिस्मृत्यादयश्च सञ्चरिणणो भवन्ति ।

वीरभक्तिरसस्योदाहरणं यथा—

तथा गाण्डीवधन्वानं विक्रीडन् मधुसूदनः ।
जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः ॥ हरिवंशे

## करुणभक्तिरसः

स्वसमुचितावभावादिभिः परिपुष्यमाणा शोकरतिरेव सहृदयानां चेतसि करुणरसरूपेण समास्वाद्यते[1] । प्रेमवैशिष्ट्येन करुणरसेऽप्यविच्छिन्नरूपेण परमानन्दोऽनुभूयते । कैश्चित् इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेदित्युक्तम् । तत्रानिष्टेऽपि स्थाने रसोऽस्य श्रीकृष्णाऽऽश्रयो भवति । गौणभक्तिरसेषु करुणभक्तिरसस्य वैशिष्ट्यमस्ति, यतो हि भक्तौ श्रीकृष्णरतरेव प्राधान्यम्, सा रतिर्यथा करुणरसेऽभिव्यज्यते न तथाऽन्यरसेषु । यतो हि हास्यदयो गौणरसाः क्वचिद् रतिं विनाऽपि समुद्भवन्ति । किन्तु करुणरसस्य

---

१. आत्मोचितैर्विभावाद्यैर्नीता पुष्टिं सतां हृदि ।
भवेच्छोकरतिर्भक्ति रसोऽयं करुणाभिधः ॥ भक्तिरसामृतसिन्धौ ४।४।१

स्थायिभावः शोकरतिस्तु श्रीकृष्णरतिं विना न कथमपि समुद्भवति। श्रीकृष्णरत्या सहाविनाभावसम्बन्धात् करुणभक्तिरसस्य वैशिष्ट्यं प्रतिपादितं भक्तिशास्त्रे[1]।

करुणभक्तिरसस्य श्रीकृष्णः, तद्भक्तः, श्रीकृष्णभक्तिसुखरहिता जनादयश्च विषयालम्बनभावा भवन्ति। भगवतो गुण-कर्म-रूपादयश्चोद्दीपनभावाः, मुखवैवर्ण्यम्, विलापनम्, अङ्गशैथिल्यम्, निःश्वासप्रश्वासप्रसरणादयश्चानुभावाः, आलस्य, अपस्मृतिः, व्याधिः, मोहादयश्च सञ्चारिणो भवन्ति। अंशतः परिपक्वमाना शोकरतिरेवात्र स्थायिभावत्वेनस्वीकृता। वस्तुतो नात्र शाको भवति किन्तु भगवतो वियोगात् प्रतीतिमात्रमेव जायते। रसेऽस्मिन् भक्तानां चेतसि श्रीकृष्णस्यैश्वर्यस्यापरिज्ञानं लोकोत्तरप्रेमवैशिष्ट्येन जायते, न त्वविद्यया। करुणभक्तिरसस्योदाहरणं यथा—

> फणिहृदयमवगाढे दारुणं पिञ्छचूडे,
> स्खलदविरलवाष्पस्तोमधौतोत्तरीया ।
> निखिलकरुणवृत्तिस्तम्भिनीमाललम्बे,
> विषमगतिमवस्थां गोष्ठराजस्य राज्ञी ॥

भ० र० सिं० ४।४।८ श्लोकस्थोदाहरणम्

## रौद्रभक्तिरसः

स्वसमुचितैर्विभावादिभिः पुष्टिं गता क्रोधरतिरेव रौद्रभक्तिरसरूपेण सहृदयानां भक्तानां चेतसि समास्वाद्यते[2]। रौद्रभक्तिरसस्य श्रीकृष्णस्तदीयाः हिताहिताश्च विषयालम्बनानि भवन्ति। एवञ्च क्रोधरतिः श्रीकृष्णस्तदीयहिताहितभेदेन त्रिविधा। तत्र श्रीकृष्णक्रोधरतिभेदे वृद्धायाः सखीजनस्य वा क्रोधस्याश्रयो भवति। हिताहितभेदे तु सर्वप्रकारका भक्ता आश्रयत्वेन गण्यन्ते। ते सर्वे आलम्बनभावा जायन्ते। रसेऽत्र श्रीकृष्णस्य हिताहिते उपहासः, वक्रोक्तिः, कटाक्षः, कथविदनादरादयश्चोद्दीपनभावाः, हस्तयोः परस्परं पीडनम्, नेत्रयोः रक्तता, भुजयोः स्फालनम्, दन्तैरोष्ठयोर्दशनं, शिरः कम्पनादयश्चा-

---

१. रतिं विनापि घटते हासादेरुद्गमः क्वचित् ।
कदाचिदपि शोकस्य नास्य सम्भावना भवेत् ॥
रतेर्भूम्ना कृशिम्ना च शोको भूयात् कृशश्च सः ।
रत्या सहाविनाभावात् काप्येतस्य विशिष्टता ॥ भक्तिरसामृतसिन्धौ ४।४।६-१०

२. नीता क्रोधरतिः पुष्टिं विभावाद्यैर्निजोचितैः ।
हृदि भक्तजनस्यासौ रौद्रभक्तिरसो भवेत् ॥ भक्तिरसामृतसिन्धौ ४।५।१

नुभावाः, स्तम्भादयः सात्त्विकभावाः, आवेगः, जडता, गर्वः, चापल्यम्, असूया, श्रमादश्च सञ्चारिणो भवन्ति । क्रोधरतिश्चात्र स्थायिभावः ।

श्रीरूपगोस्वामिमते क्रोधरतिस्तु कोप-मन्यु-रोषभेदेन त्रिविधा । तत्र शिशुपालादौ शत्रौ कोपः, बान्धवेषु मन्युस्तथा प्रियेषु स्त्रीणां रोषश्च । अन्तिमश्चायं रोषो भक्तिरसशास्त्रे व्यभिचारित्वेन स्वीक्रियते न तु स्थायित्वेन । मधुसूदनस्वामिमते रौद्ररसः शुद्धरौद्र-भयानकरौद्रभेदाभ्यां द्विविधः । तन्मते वस्तुतः प्रीतिविरोधित्वाद् रौद्ररसो भक्तिरौद्ररस-रूपेण नास्वाद्यते । अत एव रौद्ररसो रौद्रभक्तिरसरूपेण न स्वीकर्तव्यः[1] ।
रौद्रभक्तिरसस्योदहारणं यथा—

अन्तः क्लेशकलङ्किताः किल वयं यामोऽद्य याम्यां पुरीं,
नायं वञ्चनसञ्चयप्रणयिनं हासं तथाप्युज्झति ।
अस्मिन् सम्पुटिते गभीरकपटैराभीरपल्लीबिटे,
हा मेधाविनि राधिके ! तव कथं प्रेमा गरीयानभूत् ॥ विदग्धमाधवे

## भयानकभक्तिरसः

निजोचितैर्विभावादिभिः परिपुष्टिं प्राप्ता भयरतिरेव भक्तानां चेतसि भयानकभक्ति-रसरूपेणभिव्यज्यते[2] । अत्र श्रीकृष्णस्य तथा श्रीकृष्णप्रियेभ्यः श्रीकृष्णानिष्टशङ्काप्रदा भयङ्करा (दारुणाः) असुराददश्च विषयालम्बनभावा भवन्ति । तत्र आकृत्या प्रकृत्या प्रभावेण च दारुणस्त्रिविधस्तथा तत्र आकृत्या पूतनादयः, प्रकृत्या शिशुपालादयः, प्रभावेण च चैद्यादयो निगदिताः । भक्तिरसज्ञानां मते केवलं 'भयात् कंसः' इति भागवत्वचनात् भयान्वितेऽपि शिशुपालादौ रतिशून्यत्वात् भक्तिरसे शिशुपालादय आलम्बनत्वेन न स्वीक्रियन्ते[3] । रसेऽस्मिन् नेत्रवैचित्र्यादय उद्दीपनभावाः, मुखस्य शोषणम् निःश्वासः भयम् , कम्पादयश्च सात्त्विकभावाः, संत्रासः, मरणम् , विषादः,

---

१. शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ।
नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ।। भक्तिरसायने २।३०

२. वक्ष्यमाणैर्विभावाद्यैः पुष्टिं भयरतिर्गता ।
भयानकाविधो भक्तिरसो धीरैरुदीर्य्यते ॥ भक्तिरसामृतसिन्धौ ४।६।१

३. सदा भगवतो भीति गता आत्यन्तिकमपि ।
कंसाद्या रतिशून्यत्वादत्र नालम्बना मताः ।। भक्तिरसाम्रितसिन्धौ ४।६।११

मोहः शङ्कादयश्च संचारिणो भवन्ति । भयरतिश्चात्र स्थायिभावो निगदिता । भयानकरसस्योदाहरणं यथा—

भैरवं रुवति हन्त गोकुलद्वारि वारिदनिभे वृषासुरे ।
पुत्रगुप्तिधृतयत्नवैभवा कम्पमूर्तिरभवद् व्रजेश्वरी ।।

## वीभत्सभक्तिरसः

आत्मोचितैर्विभावादिभिः परिपुष्यमाणा जुगुप्सारतिरेव सहृदयानां भक्तानां चेतसि वीभत्सभक्तिरसरूपेण स्वाद्यते[1]। अस्य रसस्याऽऽश्रितशान्तादयश्चालम्बनभावाः, मुखस्य वक्रता, नासिकास्फुरणम्, धावनम्, कम्पनम्, रोमाञ्चनम्, प्रस्वेदादयश्चोद्दीपनभावाः. ग्लानिः, श्रमः, उन्मादः, मोहः, निर्वेदः, विषादः, चापल्यम्, वेगादयश्च सञ्चारिणः, जुगुप्सारतिश्चात्र स्थायिभावो निगद्यते। सा च जुगुप्सारतिः विवेकजन्य-प्रायिकजन्यभेदाभ्यां द्विविधा । तत्र भगवति स्ने ाधिक्यात् लोकात् वैराग्ये सति यदा स्वशरीरेऽपि घृणा जायते तदा विवेकजा तथा दुर्गन्धादिजन्या घृणा प्रायिकजन्या जुगुप्सारतिः । भगवतो भक्तिर्यया साधनया लभ्या, तयैव मनः शरीरं वा पवित्रीभवति ।

वीभत्सभक्तिरसस्योदाहरणं यथा—

यदवधि मम चेतः कृष्णपादारविन्द,
नवनवरसधामन्युद्यतं रन्तुमासीत् ।
तदवधि बत नारीसंभोगे स्मर्यमाणे,
भवति मुखविकारः सुष्ठुनिष्ठीवनञ्च ।।

यद्यपि मुख्यगौणभेदेन द्वादशविधो भक्तिरसो विवेचितः, किन्तु भक्तिरसज्ञानां मते वस्तुतो रतित्वेन श्रीकृष्णविषयारतिरेकैव, सैव भक्तानां स्वसम्बन्धकल्पनया शान्तभाव-स्वामिभाव-सखिभाव-पुत्रभाव-कान्ताभावैश्च पञ्चधा निरूपिता। गौणसप्तरसा न्यूनाधिकभेदेन काव्यशास्त्रपरम्परयैव निरूपिताः ।

## भक्तिरसस्य स्थायिभावः

त्रैलोक्यसर्वस्वभूत परमानन्दरूपे भगवति रागादिदोषरहितानां श्रुतिस्मृतिपुराणविहितकर्मनिरतानामिन्द्रियाणां फलाभिसन्धाननिवृत्तिपूर्वकं नैरन्तर्येण या मनोवृत्तिः

---

१. पुष्टिं नीजविभावाद्यैर्जुगुप्सारतिरागता ।
असौ भक्तिरसो धरैर्वीभत्साख्य इतीर्य्यते ।। भक्तिरसामृतसिन्धौ ४।७।१

सैव भक्तिरिति भगवन्नामकौमुदीकारेण प्रोक्तमिति[1]। इयं मनोवृत्तिरेव भावशब्देनाप्यभिधीयते। नरसिंहपुराणानुसारेण प्रेमातिशय एव भक्तिरिति[2]। भक्तिनिर्धूतदोषाणां प्रसन्नोज्ज्वलचेतसां श्रीभागवतानुरक्तानां प्राक्तनाधुनिकसद्वासनावासितानां रसिकसङ्गवतां भक्तानां चेतसि विभवानुभावसात्त्विकसञ्चारिभिः स्वाद्यत्वं सम्प्राप्ता भगवद्विषयिणी रतिरेव भक्तिरसः कथ्यते।

रसशास्त्रानुसारेण भक्तिरसशास्त्रानुसारेण च स्थायिभावविभावानुभावसात्त्विकभावसञ्चारिभावाः रसनिष्पत्तौ कारणानि सन्ति। तेषु भावेषु स्थायिभाव एव विभावादिभिः पूर्णतां प्राप्य रसरूपेण परिणमते। भरतमुनिमतानुसारेण यथा नरेषु नरपतेः शिष्येषु च गुरोः सर्वाधिकमहत्त्वपूर्णं स्थानं भवति तथैव सर्वभावेषु स्थायिभावस्य सर्वाधिकं प्राधान्यं भवति[3]। भक्तिरसाचार्याणां मते भक्तिरसस्य स्थायिभावः 'श्रीकृष्णविषया रतिः[4]' विद्यते। श्रीजीवगोस्वामिमतानुसारेण श्रीकृष्णविषया प्रीतिरेव स्थायिभाव इति स्वीकृतं प्रीतिसन्दर्भे[5]। तेषां मते स्थायिभावो हि विरुद्धानविरुद्धांश्च सर्वान् भावान् अतिक्रम्य रसरूपे परिणमय्य सुनृपतिरिव शोभते[6]। कविकर्णपूरमतानुसारेण रजस्तमोभ्यां रहितस्य शुद्धसत्वात्मकस्य चित्तस्य समास्वादाङ्कुरनामधर्मविशेष एव स्थायिभावः[7]।

यथा समुद्रः स्वादुभिरस्वादुभिर्वा नदीपूरैर्मिश्रितोऽपि स्वस्वभावं न त्यजति, किन्तु तानेव स्वस्वभावं प्रापयति, तथैव यो भावः प्रतिकूलैरनुकूलैर्वा विभावादिभिर्मिलितोऽपि निजस्वभावं प्रापयति स एव स्थायिभावः[8]। अथवा ये वासनारूपेण

---

१. भगवन्नामकौमुद्यां प्रकाशटीकासहिते पृष्ठे ७६

२. चकार मेघे तद्वर्णे बहुमानं रतिं नृपः।
पक्षपातेन तन्नाम्नि मृगे पद्मे च तादृशि॥ नरसिंह पुराणे इक्ष्वाकुचरिते

३. यथा नराणां नरपतिः शिष्याणां च यथा गुरुः।
एवं हि सर्वभावानां भावः स्थायी महानिह॥ नाट्यशास्त्रे ७।८

४. स्थायी भावोऽत्र सम्प्रोक्तः श्रीकृष्णविषयारतिः। भक्तिरसामृतसिन्धौ २।१।२

५. एषा च प्रीतिर्लौकिककाव्यविदां रत्यादिवत्कारणकार्यसहायैर्मिलित्वा रसावस्थामाप्नुवती स्वयं स्थायीभाव उच्यते॥ — प्रीतिसन्दर्भे पृष्ठे ६७२।

६. अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
सुराजेव विराजेत स स्थायी भाव उच्यते॥ —भक्तिरसामृतसिन्धौ २।५।१

७. अलङ्कारकौस्तुभे ५/२ पृष्ठे १ ।

८. विरुद्धैरविरुद्धैर्वा, भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्याशु, स स्थायी लवणाकरः॥ दशरूपके ४/३४

चिरं चित्ते तिष्ठन्ति, विभावादिभिश्च सम्मिलिता भवन्ति, किञ्च रसत्वं प्राप्नुवन्ति, त एव स्थायिभावाः[1]। अथवा सदृशैरसदृशैर्वा भावैर्यस्य स्वरूपपरिवर्त्तनं न भवति, तथा च यः स्त्रक्सूत्रन्यायेन रसमभिव्याप्य तिष्ठति, स एव स्थायिभाव इति निगद्यते[2]। एवमेव केषाञ्चिन्मते विरुद्धैरविरुद्धैर्वा भावैः तिरोधातुमक्षमः सभास्वादाङ्कुररूपको[3] भावः स्थायिभावः। स च स्थायिभावो रसशास्त्रज्ञानां मते सामान्यतया रतिः, शोकः, निर्वेदः, क्रोधः, उत्साहः, विस्मयः, भयम्, जुगुप्सा चेति नवधा[4] भवति।

श्रीमधुसूदनस्वामिमतानुसारेण यथा स्वभावकठिनं जतुद्रव्यमुष्णतापकाग्न्यादि-संयोगेन जलमिव द्रुतं चीनांशुकशतक्षालितं स्वच्छं भवति। तत्र च निक्षिप्तहिङ्गुलादिवर्णस्य सर्वतो भावेन स्थिरता जायते। पुनः काठिन्ये सति अथवा पुनः द्रवतायां वा जतुनो वर्णस्य वाच्छायां सत्यामपि न वर्णविश्लेषः तथैव सावयवं मध्यमपरिमाणं चित्तमपि कामक्रोधभयस्नेहहर्षशोकदयादिभिः भगवद्विषयकैस्तापकैः गङ्गाजलप्रवाहवत् द्रुतं चीनांशुकशतक्षालितमिव निर्मलं जायते। तापकापगमे पुनः कठिनं भवति। तत्र द्रुते चित्ते यस्य वस्तुनो य आकारः निक्षिप्यते स एव संस्कार-वासना-भाव-भावनादिशब्दैर्व्यवह्रियते। द्रवीभावपूर्वकं चित्तस्य विषयाकारता जायते। अपि च यथा तत्तत्प्रतिमाद्याकारसङ्घटितोदरे मृत्तिकादिपात्रविशेषे पुटपाकयन्त्रादिनिषिक्तं जतुर्द्रवीभूतताम्रादितत्तदुदरपात्रविशेषाकारं भजते। तथैव रागद्वेषादिना द्रवीभूतं चित्तं नेत्रादिद्वारा यदैव घटादिविषये संलग्नं जायते, तदैव चित्त तत्तद्विषयाकारं प्राप्नोति यथा वा व्यञ्जकः सूर्याद्यालोकः प्रकाश्यवस्तुनः स्वरूपतां नयति तथैव चित्तमपि तत्तद्विषयाकारं भजते। अत एव विषयस्य बाह्याकारवदान्तरोऽपि मनोमयः

---

१. चिरं चित्तेऽवतिष्ठन्ते, सम्बध्यन्तेऽनुबन्धुभिः।
रसत्वं ये प्रपद्यन्ते, प्रसिद्धाः स्थायिनोऽत्र ते॥

२. सजातीयविजातीयैरतिरस्कृतमूर्तिमान्।
यावद् रसं वर्तमानः, स्थायिभाव उदाहृतः॥

—रसगङ्गाधरे पृष्ठे १३८ समुद्धृतवाक्यम्।

स्त्रक्सूत्रवृत्त्या भावानामन्येषामनुगामकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम्॥

३. विरुद्धा अविद्धा वा, यं तिरोधातुमक्षमाः।
आनन्दाङ्कुरकन्दोऽसौ, भावः स्थायीति संज्ञितः॥ साहित्यदर्पणे ३।१३८

४. रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः।
हासो भयं जुगुप्सा च, स्थायिभावः क्रमादमी॥ रसगङ्गाधरे पृष्ठे १३६।

कश्चनाऽऽकारो भवति। बाह्यस्याभेदेऽपि मनोमयाकारस्य भेदेनैव एकस्यामेव योषिति भार्या, स्वसा, ननन्दा, मातेत्यादयो व्यवहारा दृश्यन्ते। तत्र बाह्यपिण्डस्य विनाशेऽपि मनोमयपिण्डाकारस्तिष्ठति एव, स एवाकारः स्थायीभावः।

अपि च तन्मते यस्मिन् विषये कामादीनामुद्रेकस्तस्मिन्नेव विषये द्रवीभावत्वं जायते। कामाद्यभावे सूर्यादिप्रकाशादिभिः स्वल्पतापकैरिव विषययोगे शैथिल्यमात्रमेव जायते। तत्र वासनात्मकतया वस्तुसन्निवेशो न भवति। किन्तु द्रवीभूते प्रविष्टो वस्त्वाकारः काठिन्यदशापर्यन्तं स्थितः सन् पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि चेतसा पूर्वगृहीतवस्त्वाकारस्त्यक्तुं न शक्यते। अद्रवीभूते चित्ते न कोऽपि भावो निविशते, निविष्टोऽपि न स्थायितां लभते। अत एव वासनादिशब्दैस्तद्वस्त्वाकारस्य व्यपदेशः। द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वेन स्थायिभावत्वेन तस्य व्यपदेशो भवति। विभावादिसंयोगे प्रकटीभूतस्थायिभाव एव श्रोतृवर्ण्ययोः दर्शकाभिनेययोर्वा भेदतिरोधानेन दर्शकश्रोतृगत एव सन् परमानन्दसाक्षात्कारेण रसत्वं प्राप्नोति[1]। एवञ्च पूर्णतया द्रुते चित्ते प्रविष्टा भगवदाकारतैव भक्तिरसस्य स्थायिभावो निगद्यते।

भक्तिरसस्य स्थायिभावात्मिका रतिः पुराणनाट्यशास्त्रादिषु स्वीकृतभावस्यापरपर्याया एव स्वीकृता[2]। सा च रतिः भावो वा क्षान्त्यव्यर्थकालत्व-वैराग्य-मानशून्यत्वाऽऽशावा-दित्व-समुत्कण्ठा-नामकीर्त्तन-गुणाख्यान-धामप्रीत्यादिसाधनैः प्राप्यते[3]। विश्वनाथचक्रवर्तिमते रत्यपरपर्यायो भावो विद्यते[4]।

भक्तिरसस्य स्थायिभावस्तु लौकिकश्रृङ्गारादिरसानां स्थायिभावानां सदृशो नास्ति, यतो हि काव्ये प्रतिपादितानां लौकिकरत्यादीनां रत्यादिस्थायिभावाः चेतसि विलीयन्ते, किन्तु भक्तिरसस्थायिभावास्तु सदैव भक्तचेतसि तिष्ठन्ति। एवञ्च भक्तिरसज्ञानां मते लौकिकरत्यादिभावानां स्थायित्वं तु केवलं पारिभाषिकमेव वर्तते, वस्तुतस्तु

---

१. स्थायिभावो गिराऽतोऽसौ वस्त्वाकारोऽभिधीयते।
व्यक्तश्च रसतामेति परमानन्दतया पुनः॥ भक्तिरसायने १।६

२. पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः।
समानार्थतया ह्यत्र द्वयमैक्येन लक्षितम्॥ भक्तिरसामृतसिन्धौ १।३।८

३. क्षान्तिरव्यर्थकालत्वं विरक्तमानशून्यता।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः॥
आसक्तिस्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले।
इत्यादयोऽनुभावाः स्युर्जातभावाङ्कुरे जने॥ भक्तिरसामृतसिन्धौ १।३।१२।१३

४. सैवासक्तिः परमपरिणामं प्राप्तवती रत्यपरपर्यायो भाव इत्याख्यां लभते।
माधुर्यकादम्बन्याम् ७।१।

भक्तिरसस्य स्थायिभावा एव स्थायित्वं लभन्ते[1] । स च भक्तिरसस्य स्थायिभावो भक्तिरसज्ञानां मते भक्तानां चेतसि साधनाभिनिवेशेन कृष्णस्य कृष्णभक्तानां वा कृपयैव समुद्भवति । तत्र साधनाभिनिवेशजन्यभावस्तु सामान्यतः सर्वेषां भक्तानां हृदि जायते किन्तु द्वितीयस्तु केषांचिदेव परमपुण्यवतां मनसि समुद्भवति[2] ।

## मुख्यरतिः

भक्तिरसस्य श्रीकृष्णविषयारतिर्भावो वा शुद्धसत्त्वस्वरूपा प्रेमसूर्यांशुरूपा च भवति, तस्या हृदये समुदये सति कठिनं चित्तमपि मसृणायते[3] । स च रतिर्भावो वा यत्र प्राधान्येन भवति तत्र मुख्या रतिः[4], यत्र च गौणत्वेन भवति तत्र गौणी रतिः[5] । सा च मुख्या रतिः स्वार्थ- परार्थभेदेन द्वयभेदवती सती, पुनश्च सैव मुख्यरतिः भक्तहृदयरूपपात्रभेदात् शुद्धा- प्रीति-सख्य-वात्सल्य-प्रियताभेदेन पञ्चविधा च भवति यथा स्फाटिकनीलमण्याद्याधारभेदात् प्रतिबिम्बं नानात्वं प्राप्नोति तथैव तत्त्वतो मुख्यरतिरेकाऽपि पात्रभेदात् पञ्चधा भवति ।

तत्र पञ्चभेदेषु अङ्गेषु कम्पनस्य नेत्रयोरुन्मीलननिमीलनादीनां च समुत्पादिका शुद्धा रतिः सामान्य-स्वच्छ-शान्तिभेदेन त्रिविधा भवति । तत्र किमपि वैशिष्ट्यरहितं साधारणजनस्य श्रीकृष्णे या रतिः सैव सामान्या इति, नानाविधभक्तानां संसर्गात् श्रीकृष्णे भक्तस्य वैविध्ययुक्ता रतिः स्वच्छेति, श्रीकृष्णं प्रति निर्विकल्पिकारतिः शान्तिरिति कथ्यते । श्रीकृष्णोऽनुग्राहकोऽहं तस्यानुग्राह्य इति भक्तस्य श्रीकृष्णविषयिणी या स्मरणरूपा रतिः सा प्रीतिरतिः, श्रीकृष्णं प्रति मित्राणां विस्रम्भात्मिका समानभाववती रतिः सख्यमिति, मातापित्रादिवत्पूज्यपुरुषाणां श्रीकृष्णं प्रति अनुग्रहभावात्मिका रतिः-

---

१. द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वे स्थायिशब्दोऽपि तत्र मुख्य एव न पारिभाषिकः । भक्तिरसायने १।८ दामोदरशास्त्रिकृतटीकायाम् ।

२. साधनाभिनिवेशेन कृष्णतद्भक्तयोस्तथा ।
प्रसादेनातिधन्यानां भावो द्वेधाऽभिजायते ॥
आद्यस्तु प्रायिकस्तत्र द्वितीयो विरलोदयः ॥ भक्तिरसामृतसिन्धौ १।३।४-५

३. शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक् ।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥ भक्तिरसामृतसिन्धौ १।३।१

४. शुद्धसत्त्वविशेषात्मा रतिर्मुख्येति कीर्तिता ॥ भक्तिरसामृतसिन्धौ २।५।३

५. विभावोत्कर्षजो भावविशेषो योऽनुगृह्यते ।
सङ्कुचन्त्या स्वयं रत्या सा गौणी रतिरुच्यते ॥ भक्तिरसामृतसिन्धौ २।५।३०

वात्सल्यमिति कथ्यते। पुनश्च प्रीति-सख्य-वात्सल्य-रतीनां केवला संकुला चेति भेदद्वयं भवति। तत्र रत्यन्तरसम्बन्धहीना रतिः केवला रतिस्तथा द्वयोस्त्राणां वा सम्मेलनात् सङ्कुलारतिः। श्रीकृष्णस्य कान्तायाश्च सामान्यरसशास्त्रानुरूपा श्रृङ्गारविषयिणी पारस्परिकी संभोगात्मिका रतिः भक्तिशास्त्रे प्रियता मधुरा वा रतिः कथ्यते।

## गौणीरतिः

भक्तिरसशास्त्रानुसारेण श्रीकृष्णं प्रति यत्र रतिः प्राधान्येन प्रतीयते तत्र मुख्या रतिः, यत्र च विभावादिभिः सङ्कोचं प्राप्नुवन्त्या रत्या भावः परिपुष्यते तत्र गौणी-रतिरिति निगदितम्। तत्रमुख्या रतिः प्रतिपादिता पूर्वम्। गौणीरतिस्तु हास-विस्मयो-त्साह-शोक-क्रोध-भय-जुगुप्साभेदेन सप्तविधा। तत्र तत्तद्भावयुक्ताः तत्तद्रतयः। तत्र प्रोक्तेषु हासादिषु रतिषु वाग्वेषादिविकृतिजन्यायाः कृष्णसम्बन्धिचेष्टोत्पन्नायाश्चेतोविकास-रूपहासरतेः स्मित-हसित-विहसितावहसितापहसितातिहसिताश्चेति षड्भेदाः भवन्ति। लोकोत्तरपदार्थदर्शनजन्यायाः चित्तविस्तृतिरूपायाः नेत्रविस्ताररोमाञ्चात्मिकायाः विस्मयरतेर्दृष्टश्रुतसंकीर्तितानुमिताश्चेति चत्वारो भेदाः, श्लाघ्यफले युद्धादिकर्मणि वा सत्त्वरमानसासक्तिरूपायाः धैर्यत्यागोद्यमात्मिकायाः कालानवेक्षणरूपात्मिकाया उत्साहरतेः दान-युद्ध-दया-धर्माख्याश्चत्वारो भेदा भवन्ति। युद्धोत्साहरतेरपि सहजाऽऽहार्यभेदाभ्यां भेदद्वयम्। पुनश्च स्वशक्तिसहायकशक्तिभ्यां द्विविधाया युद्धोत्साहरतेः भेदचतुष्टयं भवति। इष्टवियोगजन्या, चित्तस्य क्लेशाधिकरूपा, विलापतापनिश्वासमुखशोषणभ्रमा-त्मिकारतिः शोकरतिर्भवति। प्रातिकूल्यादिभिश्चित्तज्वलनरूपा, पारुष्यभ्रुकुटिनेत्रलौ-हित्यादिविकासात्मिका रतिः क्रोधरतिरिति। कृष्णतद्वैरिभेदेन सा द्विविधा। भयङ्करा-पराधदर्शनजन्या चित्तचाञ्चल्यरूपा आत्मगोपनहृदयशोषणविद्रवभ्रमणादिरूपात्मिका रतिर्भयरतिरिति। पूर्ववदेव कृष्णतद्वैरिभेदेन द्विभेदात्मिकेयमित्युक्तम्। घृणास्पदपदार्थ-दर्शनजन्यचित्तनीमिलनरूपा निष्ठीवन-वक्त्रकूणन-कुत्सनात्मिका रतिः जुगुप्सारतिरिति कथ्यते रसशास्त्रज्ञैः।

प्रोक्तेषु हासादिषु सप्तरतिषु प्रथमषड्रतीनां श्रीकृष्णस्य विभावत्वं स्वीक्रियते भक्ति-रसज्ञानां मते। किन्तु जुगुप्सारतेः श्रीकृष्णविभावत्वं नाङ्गीक्रियते। वस्तुतो भक्तिरसस्य स्थायिभावस्तु मुख्यतया भगवद्रतिरेव, अन्ये हासादयो भावा यदा श्रीकृष्णेन सह सम्बद्ध्यन्ते तदापि तत्र हासादीनां मुख्यं कारणं रतिरेव, किन्तु यदा ते भावाः विभावा-दिभिः परिपुष्यन्ते, रतिश्च सङ्कोचमेति तदैव ते हासादिभावा गौणरतित्वं लभन्ते। यथा दध्यादिकं द्रव्यं शर्करामरीचादिसंयोगेन सुस्वाद्यते तथैव प्रोक्ता मुख्या रतिः गौणी रतिश्च श्रीकृष्णस्याभिनयादिरूपविभावादीनां संयोगेन परिपुष्टा सती भक्तचेतसि रसरूपेण समास्वाद्यते।

यद्यपि भक्तिरसशास्त्रानुसारेण मुख्यगौणभेदेन द्वादशस्थायिभावाः स्वीकृताः किन्तु तत्त्वतस्तु भक्तिरसशास्त्रेऽपि प्राक्तनरससिद्धान्तप्रतिपादकानां भरतादीनां मत इवाष्टावेव स्थायिभावाः स्वीकृताः। यतो हि भक्तिरसशास्त्रानुसारप्रतिपादिताः शुद्ध-प्रीति-सख्य-वात्सल्य-प्रियताश्चेति मुख्याः स्थायिभावास्तु श्रीकृष्णविषयकरतेरेव प्रभेदाः, वस्तुतो रतित्वेन एकैव भगवद्रतिः भक्तिरसस्य मुख्यः स्थायिभावः, हासादयस्तु सप्तगौणस्थायिभावाः। एवञ्च हासादिभिः सह अष्टावेव स्थायिभावाः भक्तिरसाशास्त्रेऽपि स्वीक्रियन्ते।

## स्थायिभावस्य मनोवैज्ञानिकं विवेचनम्

रसशास्त्रनुसारेण रसनिष्पत्तौ अन्यापेक्षया स्थायिभावस्यैव प्राधान्यं वर्तते। स च हृदयस्थाव्यक्तप्रसुप्तसंस्कारविशेषो विद्यते, यः स्वानुकूलविभावादिभी रसास्वादजनकत्वाद् रस्यमानत्वाद् वा सहृदयचेतस्यभिव्यज्यते[1]। स चानुभवभेदात् रति-हास-शोक-क्रोधोत्साह - भय - जुगुप्सा - निर्वेदभेदेन[2] नवविधः साहित्याशास्त्रे स्वीकृतः तत्रापि सर्वमान्या[3] अष्टावेव सन्ति।

स एव स्थायिभावो मानसशास्त्रानुसारेण (मनोविज्ञानशास्त्रे) मूलप्रवृत्तिभिः सम्बद्धो मनःसंवेग इत्युच्यते। मानसशास्त्रतत्त्वज्ञानां मते मानवेषु प्रकृतिप्रदत्तशक्तिविशेष एव मूलप्रवृतिः, यया मनुष्यः कमपि पदार्थविशेषं प्रत्याकृष्यते, आकृष्टे सति मनः संवेगः तेनानुभूयते। मानसशास्त्रज्ञमैगड्गलमतानुसारेण चतुर्दशमूलप्रवृतयस्तथा तज्जन्याः चतुर्दश एव मनः संवेगाः स्वीकृताः। तन्मते प्रथमा मूलप्रवृतिः, मनः संवेगश्च द्वितीय इत्युक्तम्। तत्तु नोचितम्, तत्र मानसतत्त्वविवेचनात् मनोधर्माय मनः संवेगायैव प्रथमं स्थान प्रदेयम्, पश्चात् मनःसंवेगैः सम्वद्धमूलतत्त्वस्य स्थानं भवितव्यम्।

मानसशास्त्रस्वीकृतेभ्यो भय-क्रोध घृणा-करुण (दुःख)-कामाऽऽश्चर्य-हास-दैन्याऽऽत्मगौरव ( उत्साह ) - वात्सल्येभ्यश्च ( स्नेहेभ्यः ) दशभ्यो मनःसंवेगेभ्यः पलायनमात्मरक्षा च, युयुत्सा, निवृत्तिर्वैराग्यञ्च, शरणागतिः, कामवृत्तिः, कौतुहलोजिज्ञासा च, आमोदः, आत्महीनता, आत्माभिमानः, पुत्रैषणारूपा दशमूलप्रवृत्तयो जायन्ते। तुलनात्मकदृष्ट्या मानसशास्त्रप्रोक्ताः दशमनःसंवेगाः रसशास्त्रे क्रमशो भय-क्रोध-जुगुप्सा-शोक - रति - विस्मय-हास निर्वेदोत्साह - वात्सल्यस्नेहरूपस्थायिभावाःप्रसिद्धाः, तेभ्य एव क्रमशो भयानकरस-रौद्ररस-वीभत्सरस-करुणरस-शृङ्गाररसाद्भुतरस-हास्यरस-शान्तरस-वीररस-वात्सल्यरसाः प्रादुर्भवन्ति। प्रोक्तदशमूलप्रवृतिभ्योऽतिरिक्ताः भोजना-

---

१. व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥ काव्यप्रकाशे ४।२८

२. निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः॥ काव्यप्रकाशे ४।४७

३. रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥ काव्यप्रकाशे ४।४५

न्वषणप्रवृत्तिः, सङ्ग्रहप्रवृत्तिः, सामूहिकप्रवृत्तिस्तथा विधायकप्रवृत्तिश्च स्वीकृता मानसशास्त्रे मानसशास्त्रज्ञैः। किन्तु तासां मूलचतुष्प्रभृतीनां रसेन सह सम्बन्धो नास्ति। वस्तुतो मनःसवेगैरपि सार्धं तासां सम्बन्धो नानुभूयते। प्रोक्तविवेचनस्य तुलनात्मकसरणिरियं प्रदर्श्यते—

| मनःसंवेगाः | मूलप्रवृत्तयः | स्थायिभावाः | रसाः |
|---|---|---|---|
| १. भयम् | पलायनमात्मरक्षा च | भयम् | भयानकरसः |
| २. क्रोधः | युयुत्सा | क्रोधः | रौद्ररसः |
| ३. घृणा | निवृत्तिर्वैराग्यञ्च | जुगुप्सा | वीभत्सरसः |
| ४. करुणा (दुःखं) | शरणागतिः | शोकः | करुणरसः |
| ५. कामः | कामप्रवृत्तिः | रतिः | शृङ्गाररसः |
| ६. आश्चर्यम् | कौतुहलो जिज्ञासा च | विस्मयः | अद्भुतरसः |
| ७. हासः | आमोदः | हासः | हास्यरसः |
| ८. दैन्यम् | आत्महीनता | निर्वेदः | शान्तरसः |
| ९. आत्मगौरवम् (उत्साहः) | आत्माभिमानम् | उत्साहः | वीररसः |
| १०. वात्सल्यम् (स्नेहः) | पुत्रेषणा | (स्नेहः) | वात्सल्यरसः |

प्रोक्तविवेचनस्य तात्पर्यमिदं प्रतिभाति यत् प्राचीनभारतीयरसशास्त्रज्ञैः मानसतत्त्वदृष्ट्यैव रसशास्त्रे नव दश वा स्थायिभावास्तथा नव दश वा रसाः स्वीकृताः। एवञ्च परिज्ञायते मानसशास्त्रे स्वीकृता मनःसवेगा एव रसशास्त्रे स्थायिभावसंज्ञया निगद्यन्ते। अनुभूयते चापि यदाधुनिकमानसशास्त्रं प्राचीनभारतीयरसशास्त्रेण प्रभावितं वर्तत इति।

## भक्तिरसस्य विभावाः

'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति महर्षिभरतप्रोक्तो रसनिष्पत्तिविषयकः सिद्धान्तो रसशास्त्रे धर्मशास्त्रे मनुवाक्यवदाद्रियते। एतत्सूत्रानुसारेणैव सर्वे रसविदो रसनिष्पत्तिं स्वीकुर्वन्ति। भक्तिरसप्रतिपादकैरपि प्रोक्तरसशास्त्रप्रक्रियानुसारेणैव भक्तिरसः प्रतिपाद्यते। नाट्यशास्त्रानुसारेण रसनिष्पत्तौ विभावः, अनुभावः, सञ्चारिभावः, स्थायिभावाश्च सहायकभूता भवन्ति। भक्तिरसेऽपि तथैव ते

विभावादयो सहायकभूता यथा शृङ्गारादिरसे। किन्त्वत्र भक्तिरसशास्त्रे प्रोक्तविभावादिचतुर्भ्योऽतिरिक्तः सहायकोऽपरः सात्त्विकभावोऽपि[1] मन्यते।

तत्र किं नाम विभावत्वम्—नाट्यशास्त्रे भक्तिरसशास्त्रे च रसस्य निष्पत्तौ यत्कारणं तदेव विभावः। विभावो नाम रसस्य निमित्तकारणमिति[2]। अग्निपुराणानुसारेण रत्यादिस्थायिभावा यत्र, येन विभाव्यते रत्याद्यास्वादनं क्रियते स विभाव[3] इति।

साहित्यदर्पणकारमते लोके रत्याद्युद्बोधका ये भावा भवन्ति, त एव काव्ये विभावाः[4]। एवञ्च 'विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः' इति विभावाः[5]। साधनत्वनिरूपणेऽयमेव भावः प्रतिपादितः श्रीभर्तृहरिणापि[6]। नाट्यदर्पणकारमतानुसारेण संस्काररूपेण हृदयस्थं स्थायिभावं रसत्वेन विभावयन्ति आविर्भावनाविशेषेण प्रयोजयन्तीति विभावाः[7]। रसशास्त्रज्ञानामिव भक्तिरसज्ञानां मतेऽपि रत्यास्वादनहेतुभूता भावा एव विभावा इति कथ्यन्ते[8]। एवं सर्वेषां रसज्ञानां मते रसनिष्पत्तौ कारणभूता भावा एव विभावाः। विभावोऽयमालम्बनोद्दीपनभेदेन द्विविधो भवति रसज्ञानां मते। तत्राऽऽलम्बनविभावोऽपि विषयाऽऽश्रयभेदेन द्विविधः। तत्र च यं विषयमवलम्ब्य स्थायिभावा समुद्दीप्यन्ते, ते विषयालम्बनविभावाः, येषां चेतसि स्थायिभावास्तिष्ठन्ति, त आश्रयालम्बनविभावाः।

---

१. विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। भक्तिरसामृतसिन्धौ ।१।५

२. विभावः कारणं निमित्तं हेतुरिति पर्यायः॥ नाट्यशास्त्रे पृष्ठे ७६२
बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥ नाट्यशास्त्रे ७।४
अलङ्कारकौस्तुभे, किरणे ५, पृष्ठे १९७।

३. विभाव्यते हि रत्यादिर्यत्र, येन विभाव्यते। अग्निपुराणे पृष्ठे ६६२

४. रत्याद्युधबोधका लोके विभावाः काव्यनाट्ययोः। साहित्यदर्पणे–३।२९

५. साहित्यदर्पणे ३।२८ श्लोके समुद्धृतवाक्यम्।

६. शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते॥ वाक्यपदीये ३ काण्डे

७. वासनात्मतया स्थितं स्थायिनं रसत्वेन भवन्तं विभावयन्ति, आविर्भावनाविशेषेण प्रयोजयन्तीत्यालम्बनोद्दीपनरूपा ललनोद्यानादयो विभावाः।
—नाट्यदर्पण ३ विवेके

८. तत्र ज्ञेया विभावास्तु रत्यास्वादनहेतवः॥ भक्तिरसामृतसिन्धौ २।१।१४

## भक्तिरसस्य विषयालम्बनविभावाः

यं विषयमवलम्ब्य भक्तानां चेतसि भक्तिरसोऽनुभूयते, स एव भक्तिरसस्य विषयालम्बनविभावः। भक्तिरसशास्त्रानुसारेण लोकोत्तरगुणगणनिलयः, सर्वनायकलक्षणयुक्तः, शीलशक्तिसौन्दर्यसमन्वितः, परमसौन्दर्यनिधिः, परमप्रेमास्पदभूतः, सकलगुणगणाश्रयः, निखिलरसानन्दमूर्तिः, परमात्मस्वरूपः श्रीकृष्णो[1] भक्तिरसस्य विषयालम्बनं वर्तते। रूपगोस्वामिमते नायकानां शिरोमणौ श्रीकृष्णे सर्वे महागुणाः नित्यमेव विराजन्ते[2]। स च श्रीकृष्णः स्वस्वरूपेणान्यस्वरूपेण च द्विविधो भक्तिरसस्य विषयालम्बनं भवति। तत्र पुनरावृत्तप्रकटभेदाभ्यां स्वस्वरूपं द्विविधम्। यद्यपि श्रीकृष्णः सर्वदैव निखिलगुणगणगरिष्ठः, सकलनेतृणां शिरोमणिर्विद्यते, तथापि भक्तानां भक्त्यनुसारेण भक्तिकाव्ये भक्तिनाट्ये च पूर्णः, पूर्णतरः, पूर्णतमश्चेति त्रिधा कथ्यते। तत्र भक्तानां भावनया श्रीकृष्णो द्वारकायामल्पगुणप्रकाशकत्वात् पूर्णः, मथुरायामसर्वगुणव्यञ्जकत्वात्पूर्णतरः, गोकुले निखिलगुणगणव्यञ्जकत्वात् पूर्णतमः। लौकिकनायकानामिव श्रीकृष्णस्यापि धीरोदात्त-धीरललित-धीरप्रशान्त-धीरोद्धतभेदेन चतुर्विधत्वं प्रतिपादितम्। यद्यप्येकस्मिन्नेव श्रीकृष्णे परस्परविरुद्धाः धीरोदात्तादयः चतुर्विधनायकगुणा असम्भवा एव तथापि परस्परविरुद्धबहुविधक्रियाश्रयत्वेन सर्वविधविरोधाश्रये श्रीकृष्णे ते गुणा लीलाभेदेन न विरुध्यन्ते। यद्यपि च धीरोद्धतस्य वर्णिता मात्सर्यादया[3] दोषाः श्रीकृष्णे दोषरूपेण प्रतीयन्ते, तथापि निरङ्कुशैश्वर्यात् ते दोषाः कृष्णे न दोषायन्ते। यतो हि विष्णुयामले[4] प्रोक्ताः मोहः, तन्द्रा, भ्रमः, रुक्षरसता, उत्कटकामः, मदः, मात्सर्यम्, हिंसा, खेदः, परिश्रमः, असत्यम्, क्रोधः, आकांक्षा, आशङ्का, विश्वविभ्रमः, विषमता, परापेक्षा चेत्यष्टादशदोषाः श्रीकृष्णे वैष्णवतन्त्रानुसारेण[5] सर्वशक्ति-

---

१. सर्वशुद्धरसवृन्दकान्दलः सर्वनायकघटाकिरीटगः।
अत्यलौकिकगुणैरलङ्कृतो गोकुलेन्द्र तनयः सुनायकः॥ अलङ्कारकौस्तुभे ५।२६

२. नायकानां शिरोरत्नं कृष्णस्तु भगवान् स्वयम्।
यत्र नित्यतया सर्वे विराजन्ते महागुणाः॥ भक्तिरसामृतसिन्धौ २।१।१७

३. भक्तिरसामृतसिन्धौ २।१।८६

४. मोहस्तन्द्रा भ्रमो रुक्षरसता काम उल्वणः।
लोलता मद-मात्सर्ये हिंसाखेदपरिश्रमौ॥
असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः।
विषमत्वं परापेक्षा दोषा अष्टादशोदिताः॥ विष्णुयामले

५. अष्टादशमहादोषै रहिता भगवत्तनुः।
सर्वैश्वर्यमयी सत्यविज्ञानानन्दरूपिणी॥ वैष्णवतन्त्रे

शालित्वात् न दोषायन्ते। अपि तु ते सर्वे तत्र गुणायन्त एव।

## भक्तिरसस्याऽऽश्रयालम्बनविभावाः

भगवद्भक्तिभावापन्नाः शुद्धान्तःकरणाः भक्ता भक्तिरसस्याऽऽश्रयालम्बनविभावा भवन्ति। सिद्धसाधकभेदेन द्विविधो भक्तः, तत्र सिद्धोऽपि नित्यसिद्ध-सम्प्राप्तसिद्धाभ्यां द्विविधः। तत्र भगवद्धामनि भगवल्लीलायां भगवदवतारकाले वा परिकररूपेण वर्तमानाः, नित्यभगवद्गुणोपेता भगवद्भक्तिरसान्विता भक्ता नित्यसिद्धाः, तथा साधनेन भगवत्कृपया वा भगवत्सानिध्यं प्राप्ता भक्ताः सम्प्राप्तसिद्धेति कथ्यन्ते। भगवत्साक्षात्कारप्राप्तयोग्यस्तथोत्पन्नरतिभेदेन साधको द्विविधो भवति। येषु भक्तेषु भगवद्रत्यङ्कुरत्वं जातम् किन्तु यदि भक्तिर्विघ्नरहिता न जाता, तदा सा रतिरुत्पन्नरतिरिति कथ्यते, किन्तु सर्वविघ्नान् निरस्य भगवद्भक्तिप्राप्तिशक्तिं प्राप्तास्तदा भगवत्साक्षात्कारयोग्या भक्ता निगद्यन्ते। आश्रयालम्बनभूतास्ते सर्वे भक्ताः स्वस्वभावानुसारेण निखिलरसानन्दमूर्त्तौ भगवति शान्ति-प्रीति-सख्य-वात्सल्य-प्रियता-भेदेन पञ्चविधाश्रयालम्बनत्वं प्राप्नुवन्ति।

एवञ्च भक्तिरसशास्त्रानुसारेण[1] तिरस्कृतकुसुमायुधसौन्दर्यसर्वस्वः कृतकमला-कुचतटीपत्रभङ्गो निखिलब्रह्माण्डनायको निखिलरसानन्दमूर्तिः परमप्रेमास्पदभूतः सर्वाश्रयभूतो भगवान् श्रीकृष्णस्तद्भक्तो वा भक्तिरसस्याऽऽलम्बनविभावो भवति भक्तिरसज्ञानां मते।

## भक्तिरसस्योद्दीपनविभावाः

परमसौन्दर्यनिधेः परमप्रेमास्पदस्य भक्तिरसविषयालम्बनभूतस्य श्रीकृष्णस्य गुणाः, चेष्टाः, प्रसाधनानि, वंशीध्वनिः, स्मिताङ्गसौरभम्, वचनानि, तुलसीपत्राणि, श्रीकृष्ण-पदाङ्कितानि पुण्यारण्यानि वृन्दावनादयः, तद्द्वारादयः, यमुनातटादयो भक्तिरसस्योद्दीपनभावा भवन्ति[2]। यैश्च भक्तिरसा उद्दीप्यन्ते, ते उद्दीपनविभावा निगद्यन्ते भक्तिरसज्ञैः।

आलम्बनभूतस्य भक्तिरसस्य श्रीकृष्णस्य गुणाः, चेष्टाः, अङ्गसौरभम्, प्रसाधनम्, क्षेत्रम्, सत्सङ्गादयश्चोद्दीपनभावाः सन्ति। ते चोद्दीपनभावाः गुण-नाम चरित्र-मण्डन-स्वजन-ताटस्थ्यभेदेन षड्विधाः। तत्र कायिक-वाचिक-मानसिकभेदेन गुणास्त्रिविधाः। भक्तिशास्त्रप्रोक्ताः पञ्चाशद् गुणा यथा—१–सुरम्याङ्गता, २–सर्वसुलक्षणता, ३–रुचिरता, ४–तेजः, ५–बलम्, ६–शोभनाऽवस्था, ७–विविधाद्भुतभाषावैशारद्यम्, ८–सत्य-

---

१. श्रीभगवन्नामकौमुद्याम् पृष्ठे ८०।

२. भक्तिरसामृतसिन्धौ २।१।११३–११४, भक्तिचन्द्रिकायाम् पृष्ठे ६५।

सम्भाषणम्, ९–प्रियवादित्वम्, १०–वावदूकता, ११–सुपाण्डित्यम्, १२–बुद्धिः, १३–प्रतिभा, १४–चातुर्यम्, १५–दक्षता, १६–कृतज्ञता, १७–सुदृढव्रतता, १८–देशकालपात्रज्ञता, १९–शास्त्रचाक्षुष्कता, २०–शुचिता, २१–जितेन्द्रियता, २२–स्थैर्यम्, २३–दान्तः, २४–क्षमाशीलता, २५–गाम्भीर्यम्, २६–धैर्यम्, २७–समत्वम्, २८–वदान्यता, २९–धार्मिकता, ३०–शूरत्वम्, ३१–कारुण्यम्, ३२–मान्यमानकृत्त्वम्, ३३–दाक्षिण्यम्, ३४–विनयित्वम्, ३५–लज्जा, ३६–शरणागतपालकत्वम्, ३७–सुखित्वम्, ३८–भक्तसख्यम्, ३९–प्रेमपारवश्यम्, ४०–सर्वशुभाङ्गत्वम्, ४१–प्रतापित्वम्, ४२–कीर्तिमत्त्वम्, ४३–लोकप्रियत्वम्, ४४–साधुसमाश्रयत्वम्, ४५–नारीगणमनोहारित्वम्, ४६–सर्वाराध्यत्वम्, ४७–समृद्धिशालित्वम्, ४८–वरेण्यत्वम्, ४९–ऐश्वर्यत्वम्, ५०–दुरवगाहाश्चेति पञ्चाशद्[1] गुणा भक्तिरसस्याऽऽश्रयालम्बनभूतस्य श्रीकृष्णस्य भवन्ति। भागवतानुसारेण भगवति नवत्रिंशदेव गुणाः प्रतिपादिताः[2]।

प्रोक्ता गुणा यद्यपि सामान्यतया किञ्चिदंशमात्रेण साधारणनायकेऽपि कदाचिद् भवन्ति, किन्तु तेषां गुणानां परिपूर्णता तु श्रीकृष्ण एव परिदृश्यते।

सदा स्वरूपस्थितिः, सर्वज्ञत्वम्, नित्यनूतनता सच्चिदान्दसान्द्राङ्गत्वम्, सर्वसिद्धिनिषेवितत्वञ्चेति पञ्चगुणाः साधारणनायके न सम्भवन्ति, लोकोत्तरनायके तु किञ्चिदंशमात्रेण भवन्ति किन्तु तेऽपि सर्वे गुणाः लोकोत्तरनायके भगवति श्रीकृष्णे पूर्णतया दीप्यन्त एव। अचिन्त्यमहाशक्तित्वम्, अनन्तकोटिब्रह्माण्डविग्रहत्वम्, अवतारलीलाबीजत्वम्, हतारिगतिदायकत्वम्, आत्मारामगुणाकर्षत्वञ्चेति पञ्चगुणाः केवल भगवत्येव प्रकाशन्ते नान्यस्मिन्। रूपगोस्वामिमतानुसारेण लीलामाधुर्यम्, वेणुमाधुर्यम्, रूपमाधुर्यञ्चेति माधुर्यचतुष्टयं सदा कृष्णे एव विराजन्ते। इत्थं च परिज्ञायते भक्तिरसस्य विषयालम्बनस्य श्रीकृष्णस्य वाचिक-मानसिकाश्रयाश्चतुःषष्टिगुणा भक्तिरसस्योद्दीपका भवन्ति।

वयो-रूप-लावण्य-सौन्दर्याभिरूपता-माधुर्य-मार्दवादिभेदेन सप्तविधाः कायिकागुणाः सन्ति। तत्र वयस्तुकौमार-पौगण्ड-कैशोरभेदेन त्रिविधम्। तत्र चाजन्मनः पञ्चवर्षपर्यन्तं पौगणम्, षोडशवर्षपर्यन्तं कैशोरं निगद्यते। तत्रौचित्यात् वात्सल्यरसे कौमारम्, परस्परक्रीडादिहेतुत्वात् श्रेयसि पौगण्डम्, सर्वरसौचित्यात् यद्यपि पौगण्ड सर्वत्रैवोद्दीप्यते, तथापि माधुर्यरसे विशेषतयोद्दीप्यते। कैशोरमप्याद्य-मध्य-शेषभेदेन त्रिविधम्।

---

१. भक्तिरसामृतसिन्धौ २।१।१९-२९, भक्तिचन्द्रिकायां पृष्ठे ६४।

२. भागवते १।१६।२६-२८।

कायिकगुणेष्वन्यगुणापेक्षया रूप-लावण्य-सौन्दर्य-माधुर्यादीनां वैशिष्ट्यं वर्तते। तत्राभूषिताङ्गजन्या शोभा रूपमिति[१], मौक्तिकाभ्यन्तरिततारल्यमिवाङ्गेषु प्रतीयमनं वस्तु लावण्यमिति,[२] अङ्गप्रत्यङ्गानां सुश्लिष्टसन्धिबन्धनं यथोचितं सन्निवेशः सौन्दर्यमिति[३], नायकस्य शरीरस्य स्वाभाविका अयत्नजा, मोहकता, मृदुता, लालित्यम्, रमणीयता च माधुर्यमिति। एवञ्चानिर्वाच्यं रूपं माधुर्यमिति[४]। धनञ्जयमतेऽनुल्वणत्वमेव[५] माधुर्यमिति। विश्वनाथमते[६] रमणीयतैव माधुर्यम्। प्रसाधननामकोद्दीपनविभावस्तु वसनाकल्पमण्डनभेदेन त्रिविधः।

तत्र सूर्यकिरणकाश्मीरकहरितालादिसदृशं भगवतो वसनं[७] भक्तिरस्योद्दीपकं भवति। केशबन्धनम्, चन्दनलेपनम्, माला, चित्रम्, तिलकः, ताम्बूलम् लीलाकमलमित्यादय[८] आकल्परूपोद्दीपनभावाः, किरीटम्, कुण्डले, हारः, केयूरे, नूपुरादयश्च मण्डनोद्दीपकाः[९]। रासादिलीला दुष्टवधादयश्च[१०] चेष्टारूपोद्दीपनभावा निगदिताः। वंशीध्वनिः, भूषणानां झङ्कृतिः, प्रियसख्यादीनां दर्शनम्, गोवर्द्धनादिप्रियधामादिभेदेन भगवत्सम्बन्धिनो बहव उद्दीपकाः सन्ति। तटस्थोद्दीपकास्तु भगवत्सम्बद्धाः चन्द्रिका, विद्युत्प्रकाशः, मेघः मधुमासः, निर्जनप्रदेशः, ततः परं श्रीकृष्णस्य मधुरमुरलीवादनमित्यादयः सन्ति।

## भक्तिरसस्यानुभावाः

अनु पश्चाद् भवन्तीत्यनुभावाः। रसानुभूतेः पश्चाद् ये भावं ज्ञापयन्ति तेऽनुभावाः। भरतमुनिमतानुसारेण ये वाचिकाऽऽङ्गिकाभिनयद्वारा रत्यादिस्थायिभावानामान्तरिकाभिव्यक्तिरूपार्थं बाह्यरूपेणानुभावयन्ति तेऽनुभावाः[११]। विश्वनाथमतानुसारेणाऽऽ

१. उज्ज्वलनीलमणौ २३, भक्तिरसामृतसिन्धौ २।१।१३२।
२. उज्ज्वलनीलमणौ २६।
३. उज्ज्वलनीमणौ २६, भक्तिरसामृतसिन्धौ २।१।१३२।
४. उज्ज्वलनीलमणौ।
५. दशरूपके २ ३६।
६. साहित्यदर्पणे ३।६७।
७. भक्तिरसामृतसिन्धौ २।१।१३६।
८. भक्तिरसामृतसिन्धौ २।१।१३६।
९. भक्तिरसामृतसिन्धौ २।१।१४३।
१०. भक्तिरसामृतसिन्धौ २।१।१२२।
११. वागङ्गाभिनेयेनेह यतस्त्वर्थोऽभाव्यते।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥ नाट्यशास्त्रे ७।५

लम्बनोद्दीपनरूपतत्तत्कारणैः समुत्पन्नभावा बहिः प्रकाशकाः, लोके कार्यरूपेण कथिताः भावा एवानुभावाः कथ्यन्ते[1]। मनोगतरत्यादीनां रसानां चाभिव्यञ्जका भावा एवानुभावाः कथ्यन्ते[2]। भक्तिरसज्ञानां मते चित्तस्थभावबोधकाः प्रायो बाह्यविक्रियास्वरूपा अनुभावाः। ते च भक्तिरसज्ञैरुद्भासुरनाम्ना ख्याप्यन्ते[3]। कायिक-मानसिकाऽऽहार्य-वाचिक-सात्त्विकभेदेनानुभावाः पञ्चधा भवन्ति। तत्र कायिक-मानसिकयोरनुभावयोरङ्गजायत्नज-स्वभावजभेदेन भेदत्रयं भवति। भक्तिरसशास्त्रानुसारेण सामान्यतया भक्तिरसस्य नृत्यम्, विलुठितम्, गीतम्, क्रोशनम्, तनुमोटनम्, हुङ्कारः, जृम्भणम्, श्वासभूमा, लोकानपेक्षिता, लालास्रवः, अट्टहासः, घूर्णम्, हिक्कादयश्च त्रयोदश अनुभावाः स्वीकृताः। ते च सर्वे शीतक्षेपणभेदेन द्विविधाः[4]। तत्र जृम्भादयः शीताः नृत्यादयश्च क्षेपणा इति कथ्यन्ते। पूर्वोक्तापेक्षया वपुरुत्फुल्लता, रक्तोद्गमतादयोऽपि अनुभावत्वेन गण्यन्ते, किन्तु ते भक्तिरसशास्त्रे नाद्रियन्ते भक्तिरसज्ञैः।

## भक्तिरसस्य सात्त्विकभावाः

भक्तिरसशास्त्रानुसारेण साक्षात् कदाचित् किञ्चिद्व्यवधानेऽपि श्रीकृष्णस्तद्भक्तसम्बन्धिभिर्भावैराक्रान्तं चित्तं सत्त्वमिति[5]। सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी चित्तस्यान्तरिकधर्मविशेषः, येन सामाजिकहृदयेषु वासनारूपेण स्थिताः रत्यादिस्थायिभावाः

---

१. उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः॥ साहित्यदर्पणे ३।१३२।

२. अनुलिङ्गनिश्चयात् पश्चाद् भावयन्ति गमयन्ति लिङ्गिनं रसमित्यनुभावाः।
नाट्यदर्पणे २ विवेके।

३. अनुभावस्तु चित्तस्थभावानामवबोधकाः।
ते बहिर्विक्रियाप्रायाः प्रोक्ता उद्भासुराख्यया॥ भक्तिरसामृतसिन्धौ २।२।१

४. नृत्यं विलुठितं गीतं क्रोशनं तनुमोटनम्।
हुङ्कारो जृम्भणं श्वासभूमा लोकानपेक्षिता॥
लालास्रवोऽट्टहासश्च घूर्णा हिक्काऽऽदयोऽपि च।
ते शीताः क्षेपणश्चेति यथाऽर्थाख्या द्विधोदिताः॥ भक्तिरसामृतसिन्धौ २।२।२-३

५. कृष्णसम्बन्धिभिः साक्षात् किंचिद् वाव्यवधानतः।
भावैश्चित्तमाक्रान्तं सत्त्वमित्युच्यते बुधैः॥ भक्तिरसामृतसिन्धौ २।३।१

समुदीप्यन्ते । तस्मात् सत्त्वात् समुत्पन्ना भावाः सात्त्विकभावाः[१] कथ्यन्ते । श्रीविश्वनाथमतेऽपि सत्त्वसंभूता विकाराः सात्त्विकभावा[२] इति । श्रीशिङ्गभूपालमतानुसारेण परेषां भावकानामानुकूल्येन सुखदुःखादिभावनाकृतभावनरूपं चित्तं सत्त्वमिति, तस्मात्समुत्पन्ना भावाः सात्त्विकभावाः[३] । भरतमतानुसारेण विशेषमनोवेगेनाभिनेयत्वाद् अनुभावा एव सात्त्विकभावरूपाः, विक्षिप्तचित्तवृत्त्या तस्याभिनेयत्वाच्च[४] । हेमचन्द्रमतानुसारेण सत्त्वगुणोत्कर्षात् साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वमिति । तस्मात् समुत्पन्ना भावाः सात्त्विकभावाः[५] ।

यद्यपि नाट्यशास्त्रानुसारेण नवस्थायिनस्त्रयस्त्रिंशद् व्यभिचारिणोऽष्टौ सात्त्विकभावाश्चेति पञ्चाशद्भावाः सत्त्वमूलत्वात् सात्त्विका एव, यतो हि लोके कामक्रोधादयो मनोभावा राजसतामसा भवन्तु किन्तु काव्ये गता तेऽपि सत्त्वतयैवानुभूयन्ते, अत एव ते सर्वे एव सात्त्विका एव, तत्कथमष्टावेव सात्त्विकभावा इति ? सत्त्वैकमूलत्वात् अष्टावेव सात्त्विकभावाः । भावसूचनात् ते एवानुभावा[६] इत्यपि कथ्यन्ते । बहिर्विक्षोभजनकत्वाच्च । आन्तरिकविक्षोभजनकत्वात् त एव सात्त्विकभावाः । एवञ्च 'गोवलीवर्दन्यायेन' सात्त्विकभावानुभावयोश्चाभेदेऽपि भेदो[७] वर्तते । दशरूपककारमतेऽपि तयोरभेद एव प्रतिपाद्यते । तन्मते सात्त्विकभावेऽनुभावेऽपि रोमाञ्चस्वेदादयो दृश्यन्ते, केवलं तयोरुत्पत्तिस्थानं भिन्नम्, यतो हि सात्त्विक-

१. सत्त्वादस्मात् समुत्पन्ना ये भावास्ते तु सात्त्विकाः ॥ भक्तिरसामृतसिन्धौ २।३।१
२. विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्त्तिताः ॥ साहित्यदर्पणे ३।१३४
३. अन्येषां सुखदुःखादिभावनाकृतभावनम् :
आनुकूल्येन यच्चित्तं भावकानां प्रवर्त्तते ॥
सत्त्वं तदिति विज्ञेयं प्राज्ञैः सत्त्वोद्भवानिमान् ।
सात्त्विका इति जानन्ति भरतादिमहर्षयः ।
सर्वेषामपि भावानां यैः सत्त्वं प्रविभाव्यते ॥
ते भावाः भावतत्त्वज्ञैः सात्त्विकाः समुदीरिताः ।
—रसार्णवसुधाकरे प्रथमविलासे
४. नाट्यशास्त्रे ६।६३ । ५. काव्यानुशासने २।५३ वृत्तौ ।
६. सर्वेऽपि सत्त्वमूलत्वाद् भावा यद्यपि सात्त्विकाः ।
तथाप्यमीषां सत्त्वैकमूलत्वात् सात्त्विकप्रथा ॥
अनुभावाश्च कथ्यन्ते भावसंसूचनादमी ।
एवं द्वैरूप्यमेतेषां कथितं भावकोविदैः ॥ रसार्णवसुधाकरे प्रथमविलासे
७. सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ॥ साहित्यदर्पणे ३।१३४

भावाः शुद्धसमाहितमनसः समुत्पद्यन्ते, किन्तु अनुभावास्तु केवलं शरीरादेव, अत एव तयोः वस्तुनः पार्थक्यं नास्ति । एकमेव वस्तु काकाक्षिन्यायेन अवस्थाभेदेन संज्ञाद्वय लभते । वस्तुतो विभेदो नास्ति[1] । यद्यपि भक्तिरसज्ञानामिव तन्मतेऽपि सात्त्विकभावा रसनिष्पत्तौ सहायकभूता भवन्त्येव[2] । किन्तु भरतमते रसनिष्पत्तौ सात्त्विकभावा नाङ्गीकृताः, तथापि तत्र तस्य वैशिष्ट्यमस्त्येव, अत एव तेषां पृथगुपादानं कृतं तेन । इत्थं च भरतमतप्रभावितैः कतिपयैः परवर्तिभिराचार्यैरनुभावे एव सात्त्विकभावा अन्तर्भाव्यन्ते ।

किन्तु तेषां प्रत्याख्यानं न केवलं भक्तिरसज्ञैरेव कृतम्, अपि तु हेमचन्द्राचार्येणापि कृतं काव्यानुशासने[3]। एवञ्च लौकिकविषयाद्यनवच्छिन्नसमाहितमनसि सत्त्वात् समुत्पन्नाः सात्त्विकभावाः केवलं शरीराद् समुत्पन्नेभ्योऽनुभावेभ्यो भिन्ना एव भवन्ति । अपि चानुभावैः समाजिकैः रसः समास्वाद्यते । किन्तु सात्त्विकभावं विना पूर्णरूपेण स्थायिभावो रसरूपेण नानुभूयते । यतो हि सात्त्विकभावदर्शनानन्तरमेव सामाजिकैः समाधिरिव पूर्णरसानन्दोऽनुभूयते । सात्त्विकभावत्वेन समाजिका नाटकं सत्यरूपेण पश्यन्ति, पश्चादेव पूर्णसाधारणीकरणप्रक्रियया रसस्तैरास्वाद्यते । अपि च रजस्तमोगुणविनाशानन्तरमेव सत्त्वोद्रेकाद् रसोनिष्पद्यते । मनसः शुद्धसत्त्वजन्यत्वादेव सत्त्वोद्रेकः सात्त्विकभाव इति । अपि च अनुभावोऽनुक्रियते, किन्तु सात्त्विकभावो नानुक्रियते । अत एव रसनिष्पत्तौ तेषां पृथगेव सत्ता विद्यते भक्तिरसज्ञानां मते ।

एवञ्च भगवत्सम्बन्धविशिष्टमन्तःकरणं सत्त्वम्, तस्मात् समुत्पन्नाः सात्त्विकभावाः सर्वेषां रसज्ञानां मते[4] स्तम्भ-स्वेद-रोमाञ्च-स्वरभेदवेपथु वैवर्ण्याश्रु-प्रलयश्चेत्यष्टौ स्वीकृताः[5] । भक्तिरसेऽपि त एव स्वीकृताः,[6] तत्र केवलं वात्सल्यरसे स्तनस्रावरूपनवमोऽपि सात्त्विकभावः स्वीकृतो भक्तिरसज्ञैः ।

---

१. दशरूपके ४।४ वृत्तौ ।

२. विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥ दशरूपके ४।१

३. बाह्यस्तु स्तम्भादयः शरीरधर्मा अनुभावाः, ते चान्तरालिकान् सात्त्विकान् भावान् गमयन्तः परमार्थतो रतिनिर्वेदादिगमकाः ॥ काव्यानुशासने २।५३ वृत्तौ

४. कृष्णतद्भक्तसम्बन्धाक्रान्तचित्तमिहोच्यते ।
सत्त्वं तत्प्रभावा ज्ञेयाः सात्त्विकाः ।
ततश्च भगवत्सम्बन्धविशिष्टमन्तःकरणं सत्त्वमिति । रसतरङ्गिण्याम्

५. साहित्यदर्पणे ३।१३५, दशरूपके ४।५, नाट्यशास्त्रे ६।२२ तथा ७।९२ ।

६. भक्तिरसामृतसिन्धौ २।३।१० ।

तत्र हर्ष-भयाश्चर्यविषादामर्षजन्यो वाग्व्यापारराहित्यनैश्चल्य - शून्यतादिरूपः स्तम्भ[१] इति, हर्षभयक्रोधादिजन्यः शरीरजलोद्गमः स्वेदरूपसात्त्विकभावः[२], आश्चर्य-हर्षोत्साहभयादिजन्यो रोमविक्रियारोमाञ्चः, विषाद - विस्मयामर्षहर्षभीत्यादिजन्यः स्वरभेदः[३], राग-द्वेष-श्रम-भयामर्षहर्षादिजन्यशरीरकम्पो वेपथुः[४], विषादरोषभयादि-जन्यो मुखमालिन्यशरीरकार्श्यादिरूपं वैवर्ण्यम्[५], हर्षरोषविषादादिजन्यनेत्रजलो-मद्गमोऽश्रुः[६], सुखदुःखादिजन्यश्चेष्टाज्ञानराहित्य-महीपतनात्मकः प्रलयरूपसात्त्विक-भावश्चेति[७]।

भक्तिरसशास्त्रानुसारेण ते सर्वे सात्त्विकभावाः स्निग्ध-दिग्धरूक्षभेदेन त्रिविधाः। तत्र स्निग्धोऽपि मुख्यगौणभेदेन द्विविधः।

सत्त्वमयं चित्तं यदा स्वं प्राणेषु समावेशयति, तदा क्षुब्धाः प्राप्तविकाराः प्राणाः शरीरं क्षोभयन्ति, ततः प्राणैः क्षुब्धः शरीरमेव पृथिव्यादितत्त्वचतुष्टयं समाश्रित्य स्तम्भादिष्वष्टदशासु प्रादुर्भवत् सात्त्विकभावो निगद्यते। तत्र विक्षुब्धाः प्राणाः पृथिव्यप्तेजो वायवाकाशतत्त्वानि समाश्रयन्ते, कदाचिच्च स्वप्रधानाः सन्त एव शरीरे विचरन्ति। तत्र पृथिव्यां स्थिताः प्राणाः स्तम्भः, जलाश्रिता अश्रुः, तेजःस्थाः स्वेदः, वैवर्ण्यगता वियद्गताश्च मूर्छा प्रलयो वा, स्वप्रधानाः ( वायुप्रधानाः ) प्राणाः क्रमान्मन्दमध्यतीव्रभेदात् रोमाञ्च कम्पवैवर्ण्यत्वं प्राप्नुवन्ति। एवञ्च सत्त्वमयं चित्त-मेव भक्तानां चेतसि तत्तत्त्वं समाश्रित्य तत्तत् सात्त्विकभावरूपेण परिलक्ष्यते। बहिरन्तश्च विक्षोभविधायित्वात् तदेव सात्त्विकभावत्वेनाऽपि कथ्यते, अनुभावोऽपि स एव निगद्यते।

---

(१) भक्तिरसामृतसिन्धौ २।३।१५, साहित्यदर्पणे ३।१३६, नाट्यशास्त्रे ७।९५।

(२) भक्तिरसामृतसिन्धौ २।३।१५, साहित्यदर्पणे ३।१३६, नाट्यशास्त्रे ७।९४।

(३) ,, २।३।१६, ,, ३।१३७, ,, ७।९७।

(४) ,, २।३।१७, ,, ३।१३७, ,, ७।९८।

(५) ,, २।३।१८, ,, ३।१३८, ,, ७।९५।

(६) ,, २।३।१९, ,, ३।१३९, ,, ७।९७।

(७) ,, २।३।२२, ,, ३।१३९, ,, ७।९६।

(८) ,, २।३।२३,२४ ,, ३।१२९, ,, ७।९८।

भक्तिरशास्त्रानुसारेण यद्यपि स्थायिव्यभिचर्यादयः सर्वेऽपि भावाः सत्त्वमूला एव भवन्ति, तथापि सत्त्वैकमूलत्वात् तेषामष्टानां सात्त्विकभावानां सात्त्विकता, सत्त्वस्य तारतम्यात् प्राणशरीरक्षोभतारतम्यमपि भजते। अत एव सर्वेषां सात्त्विकभावानां तातरम्यमपि परिलक्ष्यते। अत एव भूरिकालव्यापित्त्वेन बह्वङ्गव्यापित्त्वेन स्वरूपोत्कर्षत्वेन च तेषां सात्त्विकभावानां भेदत्रयं भवति। पुनश्च यथोत्तरं वृद्धिं प्राप्नुवन्तः सात्त्विकभावा धूमायित-ज्वलित-दीप्तोद्दीप्तभेदेन चतुर्विधा भवन्ति। तत्र यदा अद्वितीयाः सद्द्वितीयका वा केऽपि भावा ईषद्व्यक्ततां भजन्ते यथा वा सहजतया गोप्यन्ते, तदा ते धूमायिताः। द्वौ त्रयो युगपदेव प्रकटतां प्राप्नुवन्तः कृच्छ्रेण निह्नोतुं शक्या भावा ज्वलिताः, त्रयश्चत्वारः पञ्च वा प्रौढतया युगदेव प्राकट्यं प्राप्नुवन्तः संवरीतुमशक्याः भावा दीप्ता इति, एकदैव पञ्चषः सर्वे वा व्यक्तिमापन्नाः परमोत्कर्षं प्राप्ताः ते स्तम्भादयः सात्त्विकभावा उद्दीप्ताः प्रकीर्तिताः रसज्ञैः[1]। ते सर्वे समुद्दीपिताः श्रीकृष्णविषयकरतिषु महाभावेषु सुद्दीप्ता इति परां कोटिं प्राप्नुवन्ति।

रत्याभासजन्य-सत्त्वाभसजन्य-निःसत्त्व-प्रतीपभेदेन चतुर्विधाः सात्त्विकाभासा भवन्ति -भक्तिरसशास्त्रानुसारेण। तत्रमुमुक्षुजनेषु रत्याभासजन्याः सात्त्विकाभासाः। स्वभावतया श्लथे चेतसि कृष्णकथादिभिः समुत्पन्नाऽऽनन्दजन्याः सात्त्विकाः सत्त्वाभासजन्याः, सात्त्विकाभ्यासयुक्तभक्तजनस्य निःसर्गपिच्छलहृदये सात्त्विकाभासं विनैव क्वाचित्समुत्पन्नाः सात्त्विका अश्रुपुलकादय एव निःसत्त्वसात्त्विकाः, क्रुधादिभिः कृष्णस्य हितादन्यत्र समुत्पन्नाः सात्त्विकभावा एव प्रतीपाः[2]।

भक्तिरसज्ञैः रसाभासवत् सात्त्विकाभासस्य प्रतिपादनेन ज्ञायते यत् भक्तिरससिद्धान्ते सात्त्विकाभावानां विशिष्टं स्थानं स्वीक्रियते। भरतमुनिना नटमभिलक्ष्यैव सात्त्विकाः प्रतिपादिताः। अत एव तेन सात्त्विका गौणरूपेणानुभावरूपेण वा स्वीकृताः। किन्तु भक्तिरसशास्त्रानुसारेण रसाभिव्यक्तिरिव सात्त्विकाभिव्यक्तिरपि अनुकार्यानुकर्तृसामाजिकेषु सर्वत्र भवति। अत एव भक्तिरसशास्त्रे धूमायितज्वलितदीप्तोद्दीप्तादयः सात्त्विकभेदा भक्तमभिलक्ष्यैव वर्णिताः। सात्त्विकभावैरेव रासादिलीलादर्शकानां रसानुभूतिमन्येऽपि परिज्ञातुं समर्था भवन्ति। भक्तेषु या रसानुभूतिराभ्यन्तरया समनुभूयते, तस्या व्यञ्जकास्तु सात्त्विका एव भवन्ति। भक्तिरसज्ञानुसारेण यथा भक्तिरसनिष्पत्तिरनुकार्यानुकर्तृसामाजिकेषु स्वीक्रियते तथैव स्वीक्रियते सात्त्विकभावानां स्थितिरपि। यद्यपि रसस्तु केवलमनुभूतिविषयक एव परन्तु परेषामपि दृष्टिगोचरत्वात् सात्त्विका अनुभावत्वे-

१. भक्तिरसामृतसिन्धौ २।३।३३-३६।

२. भक्तिरसामृतसिन्धौ २।३।३६-४३

नापि निगद्यन्ते। तत्रानुभावास्तु रत्यादिस्थायिभावानां प्रकाशकत्वात् बाह्यक्रियारूपा एव, किन्तु सात्त्विकास्तु बाह्यक्रियाप्रकाशकाः, आभ्यन्तरिकक्रियाप्रकाशकाश्च भवन्तीत्युभयोर्भेदोऽपि प्रदर्शितः भक्तिरसामृतसिन्धुग्रन्थस्य दुर्गमसङ्गमिनीटीकाकारेण[1]।

भरतमतानुसारेण सात्त्विकभावानां प्रदर्शने यथा नटानां मनः समाधानस्य प्राधान्यं भवति तथैव भक्तौ भक्तिरसे च मनोनिरोधस्य प्राधान्यम्, यतो हि मनोनिरोध एव भक्तिरिति। स च मनोनिरोधः शुद्धसात्त्विकदशायामेव संभवति न तु रजस्तमसाच्छन्नदशायां संभवति। अत एव शृङ्गाररसापेक्षया भक्तिरसे सात्त्विकभावनां वैशिष्ट्यं विद्यते। तत्र भगवतः कथाश्रवणेन लीलादर्शनेन वाऽश्रुपूर्णचक्षूंषि पुलकरोमराजियुक्तशरीराणि च जायन्ते।

## भक्तिरसस्य सञ्चारिभावाः

विशेषेणाभिमुख्येन च स्थायिनं[2] प्रति चरन्तीति व्यभिचारिणः सञ्चारिणो वा। एवञ्च वाचिकाऽऽङ्गिकसात्त्विकरूपेण स्थायिभावस्य गतेः सञ्चलनात् सञ्चारिणोऽपि ते[3]। भक्तिरसाज्ञानां मते ते च सञ्चारिणः स्थायिभावरूपसुधासमुद्रे तरङ्गायन्ते तद्रूपतां च प्राप्नुवन्ति[4]। रत्यादयो निर्वेदादयो वा चित्तवृत्तिरूपभावा लौकिकदशायां नास्वाद्यन्ते, किन्तु त एव काव्यनाट्योः समास्वाद्यन्ते, अत एव भावयन्ति स्वात्मानमास्वाद्यं कुर्वन्तीति भावाः स्थायिनो व्यभिचारिणश्च। ते भावत्वेन नाट्यकाव्ययोः सामाजिकानां मनांसि परिप्लावयन्ति, यतो हि भावयन्ति व्याप्नुवन्ति मनः सामाजिकानामिति भावाः, तत्रापि ये भावाः प्राणिनां चेतसि जन्मत एव विराजन्ते ते स्थायिभावाः, किन्तु ये भावाः कार्यकारणभावेन समये समये यदा कदा प्रतीयमाना भवन्ति ते व्यभिचारिणः, तेऽनन्तवैचित्र्येण सहाविर्भावतिरोभाववन्तो गगने कल्पितविविधाकारा मेघा इव भवन्ति। अतस्ते व्यभिचारिणः। एवञ्च भरतमते रसेषु नानारूपेणाभिमुख्येन

---

१. नृत्यादीनां सत्यपि सत्योत्पन्नत्वेन बुद्धिपूर्विकाप्रवृत्तिः, स्तम्भदीनां तु स्वत एव प्रवृत्तिरित्यस्य लक्षणस्य नृत्यादिषु न व्याप्तिः। भक्तिरसामृतसिन्धौ २।३।२ टीकायाम्

२. विशेषेणाभितः काये स्थायिनं चारयन्ति ये।
अनुभावादिहेतूस्तान् वदन्ति व्यभिचारिणः ॥ सरस्वती कण्ठाभरणे ५।२१

३. विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति ॥
वाङ्गसत्वसूच्या ये ज्ञेयास्ते व्यभिचारिणः।
सञ्चारयन्ति भावस्य गतिं सञ्चारिणोऽपि ते ॥ भक्तिरसामृतसिन्धौ २।४।१-२

४. उन्मज्जन्ति निमज्जन्ति स्थायिन्यमृतवारिधौ।
ऊर्मिवद् वर्द्धयन्त्येनं यान्ति तद्रूपतां च ये ॥ दशरूपके ४।७
—भक्तिरसामृतसिन्धौ २।४।३

वा सञ्चरणशीला भावाः सञ्चारिणो व्यभिचारिणो वा[1] । मधुसूदनस्वामिमते काव्योंपदिष्टाः लौकिकरत्यादेः सहकारिण एव सञ्चारिणः[2] । एवमेव भावो हेमचन्द्राचार्येणापि व्याख्यातः[3] ।

दशरूपककारमतानुसारेण समुद्रे तरङ्ग इव स्थायिभावे ये भावा उन्मग्ना निमग्नाश्च जायन्ते ते सञ्चारिण[4] । पण्डितराजजगन्नाथमतानुसारेण[5] फेनबुद्बुद्न्यायेन स्थायिनं प्रति सञ्चरणशीला भावाः सञ्चारिणः, माघमतानुसारेण[6] स्थायिनः सहायकभूता भावा व्यभिचारिणो निगद्यन्ते । केषांचिन्मते स्थायिन उपकारार्थं समागताः पुनश्च स्थायिनमुपकृत्य गता भावाः सञ्चारिण[7] इति । संगीतरत्नाकरमतानुसारेण प्रभूतविभावादिभिः समुत्पन्ना रत्यादयः स्थायिभावाः स्वल्पविभावादिभिरुत्पन्नाः दुर्बला रत्यादयश्च सञ्चारिण[8] । श्रीशिङ्गभूपालमतानुसारेण यत् प्राधान्येन वागङ्गसत्त्वयुक्ता ये भावाः स्थायिनं प्रति स्वेतरभावान् सञ्चारयन्ति, ते च स्थायिभावरूपमहासमुद्रे जलकल्लोलवत् यावत् पर्यन्तं निमग्नोन्मग्ना भवन्ति तावत् पर्यन्तं सञ्चारिणः कथ्यन्ते किन्तु स्थायिरूपतायां तु त एव स्थायिभावा निगद्यन्ते[9] । विश्वनाथमतानुसारेण विभावादीनाम-

---

१. विविधाभावमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । नाट्यशास्त्रे ७ अध्याये

२. भक्तिरसायने ३।६  ३. भावयन्ति चित्तवृत्तय एवालौकिकवाचिकाद्यभिनयप्रक्रियारूढतया स्वात्मानं लौकिकदशायामनास्वाद्यमप्यास्वाद्यं कुर्वन्ति, यद् वा भावयन्ति सामाजिकानां मन इति भावाः स्थायिनो व्यभिचारिणश्च ।.....स्थायिनं विचित्रयन्तं प्रतिभासन्त इति व्यभिचारिण उच्यन्ते । काव्यानुशासने २।१८

४. विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥  दशरूपके ४।७

५. रसगङ्गाधरे पृ० १४७ ।  ६. शिशुपालवधे २।८७

७. ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम् ।
उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः ॥

८. रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः ।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः ॥  संगीतरत्नाकरे

९. व्यभी इत्युपसर्गौ द्वौ विशेषाभिमुखत्वयोः ।
विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति ॥
वागङ्गसत्वयुक्ता ये ज्ञेयास्ते व्यभिचारिणः ।
सञ्चारयन्ति भावस्य गतिं सञ्चारिणोऽपि ते ॥
उन्मज्जन्तो निमज्जन्तः स्थायिन्यम्बुनिधाविव ।
ऊर्मिवद् वर्द्धयन्त्येनं यान्ति तद्रूपतां च ते ॥ —रसार्णवसुधाकरे द्वितीयविलासे

पेक्षयाऽत्यौत्कट्येनाऽऽनुकूल्येन च वासनारूपेण सामाजिकहृदयेषु स्थितरत्यादिस्थायिभावान् समास्वादयोग्यकारकास्तथा समुद्रे तरङ्गा इव स्थायिभावे उन्मग्ननिमग्नाः सञ्चारिण[1] इति । एवञ्च सर्वेषां रसज्ञानां मते रत्यादिस्थायिभावे निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन सञ्चरणाद् सञ्चारिणो व्यभिचारिणो वेति ।

सामान्यतः सर्वेषां रसज्ञानां मते त्रयस्त्रिंशत्संख्यकाः सञ्चारिणः भरतप्रोक्ता एव स्वीक्रियन्ते । ते च सञ्चारिणो यथा—१–निर्वेदः, २–विषादः, ३–दैन्यम्, ४–ग्लानिः, ५–श्रमः, ६–मदः, ७–गर्वः, ८–शङ्का, ६–त्रासः, १०–आवेगः, ११–उन्मादः, १२–स्मृतिः, १३–व्याधिः, १४–मोहः, १५–धृतिः १६–आलस्यम्, १७–जाड्यम्, १८–व्रीडा, १६–अवहित्था, २०–वितर्कः, २१–चिन्ता, २२–मतिः, २३–हर्षः, २४–औत्सुक्यम्, २५–उग्रता, २६–आमर्षः, २७–असूया, २८–चापल्यम्, २६–निद्रा, ३०–स्वप्नः, ३१–विबोधः, ३२–अपस्मारः, ३३–मृतिरित्येते सञ्चारिणः[2] ।

केषाञ्चिन्मते प्रोक्तेभ्यस्त्रयस्त्रिंशद्भ्योऽतिरिक्ताः मात्सर्यम्, उद्वेगः, दम्भः, ईर्ष्या, विवेकः, निर्णयः, क्लैब्यम्, क्षमा, आश्चर्यम्, औत्कण्ठ्यम्, विनयः, संशयः, धाष्टर्यमित्येतेऽपि त्रयोदशभावाः सञ्चारित्वेन परिगण्यन्ते, किन्तु भक्तिरसशास्त्रे प्रोक्तेषु त्रयस्त्रिंशत्सञ्चारिभावेषु एव ते सर्वे त्रयोदशभावा अन्तर्भाव्यन्ते, अत एव तेषां पृथगुपादानं न कर्त्तव्यम् । यथाहि— असूयायां मात्सर्यस्य, त्रासे उद्वेगस्य, अवहित्थायां दम्भस्य, ईर्ष्यायामामर्षस्य, मत्यां विवेकनिर्णययोः, दैन्ये क्लैब्यस्य, धृत्यां क्षमायाः, औत्सुक्ये चाऽऽश्चर्यौत्कण्ठ्ययोः, तर्के संशयस्य, चापल्ये धाष्टर्यस्य चान्तर्भावो भवति । एवमेव प्रतिपादितं रसशास्त्रज्ञैरपि बहुभिः[3] ।

सामान्यतो भरतमुनिना प्रोक्ताः सञ्चारिभावाः त्रयस्त्रिंशत्संख्यकाः सर्वैरलङ्कारिकैः स्वीकृताः, किन्तु कतिपयैराचार्यैस्तेषां संख्यावृद्धयर्थं प्रयत्नमकारि । यथाहि पण्डितराजजगन्नाथमते त्रयस्त्रिंशदतिरिक्तो गुरुदेवनृपपुत्रादिविषयारतिश्चेति चतुस्त्रिंशत्सञ्चारिभावा भवन्ति[4] । भानुदत्तेनच्छलनामकः सञ्चारिभावोऽपि समुद्भावितः, तेन सञ्चारिभावे एव दशमदनावस्थाऽपि परिगणिता, अत एव तन्मते सञ्चारिभावाः

१. विशेषादाभिमुख्येन चरणाद् व्यभिचारिणः ।
स्थायिन्युन्मग्ननिमग्नाः...... ...............साहित्यदर्पणे ३।१४०

२. नाट्यशास्त्रे ६।१८–२१, काव्यप्रकाशे ४।३१–३४, भ० र० सिं० २।४।४–६, साहित्यदर्पणे ३।१४१, भक्तिचन्द्रिकायां पृष्ठे ६७ । दशरूपके ४।८

३. रसङ्गाधरे पृष्ठे ३६५ हिन्दीटीकासहिते १९६४ ई० चौखम्बाप्रकाशिते ।

४. गुरु देव-नृप-पुत्रादिविषयारतिश्चेति चतुस्त्रिंशत् । रसगंगाधरे पृष्ठे २६६ ।

चतुश्चत्वारिंशत्[1] सन्ति। राघवनमहोदयानुसारेण सर्वेऽनुभावाः, नायिकाया विंशत्यलङ्कारा:, हावः, भावः, आलापः, सात्त्विकभावाः, कामस्य दशावस्था चेत्यादयः सर्वे सञ्चारिभावे एव परिगणितव्याः[2]। रामचन्द्रशुक्लमतानुसारेण सञ्चारिभावस्य त्रयस्त्रिंशदितिसंख्या उपलक्षणमात्रमेव, तन्मते सञ्चारिणोऽनन्ता भवितुं शक्नुवन्ति। अत एव तन्मते स्मरणेनेव विस्मरणमपि[3] सञ्चारिभावेन भवितव्यम्। भक्तिरसप्रतिष्ठापकेन रूपगोस्वामिना यद्यपि नूतनाः त्रयोदशभावाः समुद्भाविताः, किन्तु तेषां सर्वेषां प्रोक्तेषु एवान्तर्भाव इति प्रतिपादितम्। तन्मते सर्वे सञ्चारिणः स्वतन्त्रपरतन्त्रभेदेन द्विविधा भवन्ति। तत्र परतन्त्रोऽपि वरावरभेदेन द्विविधः, तत्र वरः पुनः साक्षात्-व्यवहितभेदेन द्विविधः, तत्र मुख्यरतिपोषकः साक्षात्, गौणतिपोषको व्यवहितः। यद्यपि सञ्चारिणः स्वतन्त्रा न भवन्ति, तथापि यथा भृत्यस्य विवाहे भृत्यस्यैव प्राधान्यं न तु स्वामिनस्तथैव सदैव परतन्त्रा अपि सञ्चारिणः स्वतन्त्रा भवन्ति। अत एव स्वतन्त्रसञ्चारिणोऽपि रतिशून्य-रत्यनुस्पर्शि-रतिगन्धभेदेन त्रिधा भवन्ति। एवञ्च भक्तिरसशास्त्रे सूक्ष्मातिसूक्ष्मं भेदं समुद्भाव्य पुनस्तेषां प्रभेदानां त्रयस्त्रिंशत्सञ्चारिभावेष्वेवान्तर्भावः क्रियते। इत्थं च भक्तिरसशास्त्रे त्रयस्त्रिंशत्सञ्चारिभावा एव स्वीकृताः भक्तिरसज्ञैः।

ते सञ्चारिणः परस्परं विभावा अनुभावाश्चापि[4] भवन्ति। यथाहि-ईर्ष्या निर्वेदस्य विभावः, असूयायां सैवानुभावो भवति। चिन्ता निद्रायाः विभावस्तथा सैव औत्सुक्यस्य चानुभावः, निन्दा वैवर्ण्यामर्षयोर्विभावस्तथा असूयायाश्चानुभावः प्रहारो मूर्च्छासंमोहयोर्विभावस्तथा उग्रतायाश्चानुभावो भवति। एवञ्च सञ्चारिणां सात्त्विकानां परस्परं कार्यकारणभावोऽस्ति। त्रासनिद्राश्रमालस्यमदविबोधादीन् सञ्चारिणो विहाय शेषाः सप्तविंशतिसञ्चारिणः कदाचिदेव रत्यादिभावानां साक्षात्कार्याणि (अनुभावाः) भवन्ति। त्रासादिभिः षड्भिः सह साक्षात् रतेः सम्बन्धो जायते। तात्पर्यमिदम्-श्रीकृष्णः स्वयमेव साक्षात् त्रासश्रमादिभावान् नाशयति, अत एव तं प्रति सानुरक्तेषु भक्तेषु ते भावाः साक्षान्नोत्पद्यन्ते, किन्तु यदा कदा लीलादर्शनाय कृष्णात् त्रासादीनामुत्पत्तिः प्रदर्श्यत एव। किन्तु तान् भावान् प्रति श्रीकृष्णः साक्षात् कारणं न भवति। अपि तु ते भावा विरोधिसामग्र्या सह परम्परया एव श्रीकृष्णेन सम्बद्ध्यन्ते।

---

१. रसतरंगिण्याम् पृष्ठे ३० भानुदत्तकृते।

२. दी नम्बर आफ रसाज पृष्ठे १५: राघवनकृते।

३. रसमीमांसायाम पृष्ठे २१५ रामचन्द्रशुक्लकृते।

४. रसगंगाधारे पृष्ठे ३६६।

## स्थायिभावानामपि सञ्चारित्वम्

महिमभट्टमतानुसारेण स्थायिभावा अपि क्वचित् सञ्चारित्वं यथाहि—देवादिविषये रतिः, शृङ्गाररसादौ हासः, विप्रलम्भशृङ्गारादौ शोकः, प्रणयकोपादौ क्रोधः, वीरादौ विस्मयः, शृङ्गारादौ उत्साहः, अभिसारिकादौ भयम्, संसारनिन्दादौ जुगुप्सा, प्रसादोद्गमादौ शमश्चैते स्थायिभावाः सञ्चारित्वं प्राप्नुवन्ति[१]। सारङ्गदेवमतानुसारेण भूयिष्ठविभावादिभिरभिव्यञ्जिता रत्यादय एव स्थायित्वं प्राप्नुवन्ति, किन्तु न्यूनविभावादिभिरभिव्यञ्जिता रत्यादयस्तु व्यभिचारिण एव भवन्ति। तत्र शृङ्गारे हासः, शान्ते रतिः, वीरे क्रोधः, शोके भयम्, भयानके जुगुप्सा, सामान्यतः सर्वरसेषु उत्साहविस्मयौ सञ्चारिणौ भवतः[२]। एवमेव भानुदत्तेनापि प्रतिपादितं रसतरङ्गिण्याम्[३]। एवमेव च रूपगोस्वामिनोऽपि[४] निरूपितम्। भरतमुनिमतानुसारेण विविधस्थायिभावेषु यः स्थायिभावोऽन्यापेक्षा विपुलविभावादिभिः परिपुष्यते स एव रसपदवाच्यः, अन्यस्तु व्यभिचारिभावत्वमेव भजते[५]।

---

१. स्थायिनामपि व्यभिचारित्वं भवति। यथा रतेर्देवादिविषयायाः, हासस्य शृङ्गारादौ, शोकस्य विप्रलम्भशृङ्गारादौ, क्रोधस्य प्रणयकोपादौ, विस्मयस्य वीरादौ, उत्साहस्य शृङ्गारादौ, भयस्य अभिसारिकादौ, जुगुप्सायाः संसारनिन्दादौ, शमस्य कोपाभिहतस्य प्रसादोद्गमादौ।

व्यक्तिविवेके—टी० एस० एस० पृष्ठे ११–१२

२. रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः॥
रसान्तरेष्वपि तदा यथायोगं भवन्ति ते।
यथाहि हासः शृङ्गारे रतिः शान्ते च दृश्यते॥
वीरे क्रोधो भयं शोके जुगुप्सा च भयानके।
उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ॥ संगीतरत्नाकरे

३. स्थायिनोऽपि व्यभिचरन्ति। हासः शृङ्गारे, रतिः शान्तकरुणहास्येषु, भयशोकौ करुणशृङ्गारयोः। क्रोधो वीरे। जुगुप्सा भयानके। उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ।
रसतरङ्गिण्याम्।

४. भक्तिरसामृतसिन्धौ ४।८।२२–२७।

५. एक एव भवेत् स्थायी रसो मुख्यतमो हि यः।
रसास्तदनुयायित्वादन्ये स्युर्व्यभिचारिणः॥ नाट्यशास्त्रे

## भक्तिरसानां परस्परं मित्रत्वं शत्रुत्वञ्च

प्रायः रसशास्त्रपरम्परया एव भक्तिरसेऽपि रसानां परस्परं मित्रत्वं शत्रुत्वं च प्रतिपादितं भक्तिरसाचार्यैः ।

### मुख्यरसानां मित्रत्वशत्रुत्वे

| | मित्ररसाः | शत्रुरसाः |
|---|---|---|
| १—शान्तभक्तिरसस्य | दास्यः, विभत्सः, धर्मवीरः अद्भुतश्च । | मधुरः, युद्धवीरः, रौद्रः, भयानकश्च । |
| २—प्रीतभक्तिरसस्य | वीभत्सः शान्तः, धर्मवीरः दानवीरश्च । | मधुरो, युद्धवीरः, रौद्रश्च । |
| ३—प्रेयोभक्तिरसस्य | मधुरः, हास्यः, युद्धवीरश्च । | वत्सलः, वीभत्सः, रौद्रः, भयानकश्च । |
| ४—वात्सल्यभक्तिरसस्य | हास्यः, करुणः, भयानकश्च । | मधुरः, युद्धवीरः, दास्यः, रौद्रश्च । |
| ५—मधुरभक्तिरसस्य | हास्यः, सख्यश्च । | वत्सलः, वीभत्सः शान्तः, रौद्रः, भयानकश्च । |

### गौणरसानाम्

| | | |
|---|---|---|
| ६—हास्यभक्तिरसस्य | वीभत्सः, मधुरः, सख्यः, वात्सल्यः । | करुणः, भयानकः । |
| ७—अद्भुतभक्तिरसस्य | वीरः, शान्तः, दास्यः, संख्यः, वात्सल्यः, मधुरः, । | रौद्रः, वीभत्सः । |
| ८—वीरभक्तिरसस्य | अद्भुतः, हास्यः, दास्यः, सख्यः । | भयानकः, शान्तश्च । |
| ९—करुणभक्तिरसस्य | रौद्रः, वात्सल्यः । | हास्यः, शृङ्गारः, अद्भुतश्च |
| १०—रौद्रभक्तिरसस्य | करुणः, वीरश्च । | हास्यः, शृङ्गारः, भयानकश्च |
| ११—भयानकभक्तिरसस्य | वीभत्सः, करुणश्च । | वीरः, हास्यः, शृङ्गारः, रौद्रश्च । |
| १२—विभत्सभक्तिरसस्य | शान्तः, हास्यः, दास्यश्च । | शृङ्गारः, सख्यश्च । |

## रसाभासः

'रसवद् आभासते इति रसाभासः' इति व्युत्पत्त्या रसभिन्नत्वेऽपि रसवद् भासमानो रसो रसाभासः । यथा 'पर्वतो धूमवान् वह्नेः' इत्यत्र वह्निद्वारा धूमसिद्धावनुमाने वह्नि-

यद्यपि हेतुतया प्रतीयते तथापि सूक्ष्मेक्षिकयाऽयोगोकले तस्य व्यभिचारित्वं वर्तते, यतो हि तत्र वह्निरूपहेतुर्वर्तते किन्तु धूमरूपसाध्यं नास्ति । अत एव तत्र हेतुतायाः प्रतीतावपि वस्तुतस्तत्र सद्धेतुत्त्वं नास्ति, अतो हेतत्त्वाभासः सः, तथैव रसभिन्नत्वेऽपि रसवत् प्रतीयमानः स्थायिभाव एव रसाभासः ।

केषाञ्चिन्मते यथा सद्धेतुत्वं हेत्वाभासत्वं च नैकत्रं संभवति तथैव रसत्वं रसाभासत्वं चापि नैकत्रं भवितुमर्हति, अर्थात् रसो रसाभासश्च पृथक्-पृथक् भवति । रसाभासः कथमपि रसो भवितुं नार्हति अपि तु स च रसात् सर्वथा भिन्नो न्यूनश्च भवति । यतो हि रसस्तु निर्मलः शुद्धसत्त्वात्मको भवति । अतो रसगङ्गाधरकारमते 'अनुचितविभावालम्बनत्वं रसाभासत्वम्' इति रसाभासस्य लक्षणं प्रतिपादितम् । श्रीमदानन्दवर्धनाचार्यमते यत्रानौचित्यं भवति तत्र रसत्वं कथमपि न संभवति, यतो हि काव्येषु अनौचित्यमेव रसभङ्गस्य कारणं भवति[1] ।

अपरेषां मते यथा 'एकदेशविकृतमनन्यवद्' इति न्यायेन लाङ्गुलविहीनत्वरूपानौचित्येऽपि स्वरूपविनाशाभावेऽश्वोऽश्व एव भवति, न तु अश्वाद्भिन्नोऽन्यो भवति तथैव रसेऽनौचित्ये रसाभासः कथ्यते, तत्र स्वरूपविनाशाभावाद् रसोऽपि भवत्येव, किन्तु स तु रसाभासरूपेण तिष्ठति[2] । भक्तिरसज्ञानां मते भक्तिरसलक्षणहीनो रसो रसाभासः[3] ।

स च रसाभासो भक्तिरसशास्त्रानुसारेणोपरसानुरसापरसभेदेन त्रिविधो भवति । स चोत्तरोत्तरमुत्तमो मध्यमः कनिष्ठश्च भवति ।

तत्रोपरसः—स्थायिभावविभावानुभावादिभिः विरूपतां प्राप्ताः शान्तादिद्वादशभक्तिरसा उपरसाः[4] ।

अनुरसः--श्रीकृष्णसम्बन्धरहितैर्भक्तादिभिर्विभावादिभिर्हास्यादयाः सप्तगौणरसाः शान्तभक्तिरसश्चापि अनुरसाः[5] ।

अपरसः—हास्यादीनां सप्तगौणभक्तिरसानां विषयो यदा श्रीकृष्णस्य विपक्षी तदा रसज्ञैरपरसत्वमनुभूयते[6] ।

---

१. अनौचित्यादृते नास्ति रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ।। ध्वन्यालोके ३ पृष्ठे ३६२

२. 'तत्र रसाद्याभासत्वं ........ व्यवहारवदित्यपरे' रसगङ्गाधरे पृष्ठे ३६७

३. भक्तिरसामृतसिन्धौ ४।६।१

४. भक्तिरसामृतसिन्धौ ४।६।३

५. भक्तिरसामृतसिन्धौ ४।६।२०

६. भक्तिरसामृतसिन्धौ ४।६।२२

# उपसंहारः

भक्तिरसस्य मूलं स्रोतो भक्तिशास्त्रं विद्यते । यद्यपि भक्ति रसस्य बीजं वैदिकवाङ्मयेऽपि समुपलभ्यते, किन्तु तस्य स्पष्टस्वरूपं भक्तिशास्त्रेषु एव परिलक्ष्यते । भगवत्साधनायाः मुख्यं प्रयोजनं भगवन्तं प्रति स्नेह एव वर्तते । भक्तितत्त्वज्ञैः शाण्डिल्यनारदादिभिर्भक्तिः परमप्रेमस्वरूपा तथा "परानुरक्तिरीश्वरे" इत्यादिरूपेण प्रतिपादिता । अत एव तैः 'प्रेमा पुमर्थो महान्' इत्यादिना प्रेमा एव परमपुरुषार्थत्वेन स्वीकृतः । भगवद्रतिरेव क्रमशः प्रेम-प्रणय-मान-स्नेह-रागानुराग-भाव-महाभावादिरूपेण वृद्धिं गता यदा परमोत्कर्षत्वमेति तदा सैव रसराजभक्तिरसरूपेण परिणता भवति, भक्तिरसोऽयं समस्तसौन्दर्याणां सौन्दर्यम्, समग्ररसानां च मधुरनिर्यासः, यस्याऽऽनन्दातिरेकेण जीवत्मा भक्तो वा आत्मसम्पृक्त-परसम्पृक्तादिभावैः सर्वथाऽसंस्पृष्टः सन् चिदानन्दमयत्वं भजते । सूर्यकिरणवदथवाऽग्निस्फुलिङ्गवज्जीवात्मा नित्यरसस्वरूपस्य प्रेमरूपस्याऽऽनन्दस्वरूपस्य परमात्मनोंऽशोऽस्ति । अत एव विशुद्धः प्रेमरसानन्द एव जीवस्य प्रकृतिस्वरूपं स्वभावो वास्ति । विषयानवच्छिन्नचैतन्यमेव द्रुतान्तःकरणवृत्तौ समारूढं सत् स्थायिभावत्वं तदनन्तरं रसत्वञ्चोपैति ।

तात्पर्यमिदं भक्तिः श्रद्धा-विश्वास-स्नेहादिभिः परिपूर्णस्य भक्तहृदयस्य दिव्यमनोऽनुराग एव, यमवलम्ब्य उपासकः स्वोपास्यं प्रति स्वरुचिप्रवृत्ति-स्वभावानुसारेण मानवीयभावैरभिसिंच्य विविधभावात्मकसम्बन्धान् समुद्भावयति । अपि च मनोवाग्भ्यामगोचरं परमात्मानं मधुरभावबन्धने आबद्ध्याऽनिर्वचनीयाऽखण्डानन्दं समास्वादयति । एवं च भक्तिर्भक्तस्य विमलमानसात् निःसृता उज्ज्वलरसधारा वर्तते, यस्याः प्रवाहे लौकिकस्नेहस्य विषयानन्दः स्वसम्पूर्णकालुष्याणि प्रक्षाल्याऽलौकिकस्नेह तया परिणमते । लौकिकस्नेहस्य पारलौकिकस्नेहे परिणतिरियमेव । लौकिकप्रेमप्रतीकैरलौकिकप्रेमाभिव्यञ्जनस्येदमेव रहस्यम् ।

मानसशास्त्रदृष्ट्या मनुष्येषु कामस्य प्रवृत्तिः, एकत्वस्थापनस्य प्रवृत्तिः, सर्वाधिकाऽऽनन्दप्रदायकपदार्थान्वेषणस्य प्रवृत्तिः, आत्मरक्षणस्य प्रवृत्तिः, अभुक्तवासनायाः प्रवृत्तिश्च समुपलभ्यते । भक्तिस्तासां प्रवृतिनां प्रेरणाशक्तिरूपा विद्यते । मनोवैज्ञानिकदृष्ट्या प्रेम-रागो वा मानवजीवनस्य सर्वाधिको मौलिकभावो वर्तते । स च परस्परं सङ्गमेच्छुके जडचेतने सर्वस्मिन् विद्यते । स एव रागः पाश्चात्यमानसतत्त्वज्ञानां मते कामरूपः, यो हि जीवनस्य मूलवृत्तिरूपेण स्वीकृतस्तेन । मनुष्यस्य मूलप्रवृत्तिषु प्रजनप्रवृत्तिः प्रबलतमो विद्यते, कामश्चातिव्यापको मनोवेगोऽस्ति । कामसङ्कल्पेनैव संसारस्य सम्पूर्णः क्रियाकलापश्च प्रचलति । स एव प्राणिमात्रस्य मूलप्रेरकभावः, स एव स्नेहस्य, सुखस्य

दाम्पत्यरतेश्च सन्तुष्टिः। कामस्य यथार्थस्वरूपं तु हृदयस्य कामजन्यो मानसिकप्रवृत्तिजन्यो वा विद्यते, स पवित्रोत्तमः, उज्ज्वलः, आनन्दमयमधुरप्रभावः, यः विश्वस्य सर्जनशक्तीनामुद्गमस्थली वर्तते। सर्जनमेवाऽऽनन्दः, आनन्द एव रसः। संसारे सर्वे ज्ञाताज्ञातरूपेण दृश्यादृश्यरूपेण वा परस्परं सम्बद्धाः सन्ति। परस्परं सौन्दर्याकर्षणेन संमिलनादिनानाविधप्रेमव्यापारेण च कामस्य प्रभावः सर्वत्र सूक्ष्मरूपेण दृश्यते। भक्तिमूलेऽपि स एव कामभावः परिलक्ष्यते, किन्तु तत्र कामभावनाया उदात्तम्, स्वच्छम्, निर्मलं वा रूपमेवाभिव्यज्यते। कामो यदा वैषयिकसुखस्य विषयो भवति, तदा स निम्नवासनामूलको जायते। किन्तु यदा स एव रूपान्तरितः सन् परमार्थमूलकपुरुषार्थस्य स्वरूपतयाऽभिव्यज्यते तदा स एव मनुष्यमुन्नयति। दिव्यप्रेरणां च तस्मै ददाति। उदात्तः सन् स एव श्रद्धाभक्तिरूपेण परिणतो भूत्वाऽलौकिकस्नेहस्य स्वरूपमाप्नोति। जीवोन्मुखः स्नेहो यदा परमेश्वरोन्मुखो भवति तदा रागमयी साधनाभक्तिः प्रादुर्भवति। यतो भक्तिरसो निःसृतः सन् भक्तजनमनांसि परिसिञ्चति।

भक्तिरसस्य विषयालम्बने परमात्मनि, आश्रयालम्बनभूतासु, तच्छक्तिषु, च कोऽपि भेदो नास्ति। यद्यपि ब्रह्मतच्छक्तीनां च तात्त्विकस्वरूपस्य पारस्परिकसम्बन्धस्य च विषयेऽद्वैतावादः, विशिष्टाद्वैतवादः, शुद्धाद्वैतवादः, द्वैताद्वैतवादः द्वैतवादः, अचिन्त्यभेदादयो बहवः सिद्धान्ताः प्रतिपादिताः दार्शनिकैः। तथापि सर्वैरेव दार्शनिकैः यथाकञ्चित् ब्रह्मतच्छक्तीनां चैकत्वमनुमोदितमेव।

'भक्त्यर्थं कल्पितं द्वैतं' इत्यादिना वैष्णवाचार्यैर्मूलेऽद्वैतं स्वीकुर्वद्भिरपि भगवत्प्रीत्यर्थं द्वैतस्य तथा नामरूपस्योपासनया भगवतो भावाश्रितरूपस्य कल्पना कृता। प्रेम्णोऽनन्यतादृष्ट्याऽऽत्मनिवेदनासक्तेश्चरमोत्कर्षदृष्ट्या च भगवतो भावनाविनिर्मितमिदमेव साकाररूपं भक्तानामुपास्यादर्शो विद्यते। भक्तिमार्गे राधाकृष्णयोः, सीतारामयोश्च युगलोपासनाया इदमेव रहस्यम्। पुष्टिदर्शनस्य चायमेव मूलमन्त्रः, भक्तानां लीलादर्शनस्येदमेव तत्त्वम्।

वैष्णवाचार्याणां दार्शनिकसिद्धान्तेषु यद्यपि वैषम्यं दृष्टिगोचरं भवति तथापि तत्र मौलिकसामञ्जस्यमेव दृश्यते। सर्वैरेव भगवतो विष्णोरुपासनां व्यापकरूपेण गृहीता। रामकृष्णौ च विष्णोरक्तापरस्वरूपौ। सर्वैरेव श्रीशङ्कराचार्यस्याद्वैतवादस्य मायावादस्य चाव्यवहारिकत्वं स्वीकृतम्, स्वीकृतं च परमेश्वरावतारः, भक्तेरनिवार्यता, अनन्यप्रेमासक्तिः, विदेहमुक्तिः, पराप्रपत्तिः, नाममाहात्म्यम् सदाचारः, रूपोपासना, लीलामाहात्म्यं च। तान्येव तत्त्वानि सगुणोपासकानां भक्तानां भक्तिरससाधनायाः प्रेरकस्रोतः, तत्रापि सर्वोत्तमं लीलातत्त्वम्। वैष्णवदर्शनस्येदमेव लीलातत्त्वं भक्तिरसस्योद्गमभूमिः। यतो भक्तिरसस्य प्रेमोज्ज्वलसुधाधाराऽनन्तकालादद्यावधि अजस्ररूपेण प्रवहति।

निर्गुणोपासकैरपि वैष्णवाचार्याणां दार्शनिकं तथा साधनागतप्रोक्ततत्त्वेषु भक्तितत्त्वम्, नामतत्त्वम् पराप्रपत्तिः, अनन्यप्रेमासक्तिप्रभृतिभावा गृहीताः, तथा लोके निर्गुण-भक्तिः प्रचारिता। तेषां मतेऽपि जीवात्मपरमात्मनोः प्रेयसीप्रियतमसम्बन्धो विद्यते। तयोस्तादात्म्यस्थापनमेव भक्तिरसस्य दार्शनिकस्वरूपं विद्यते।

अनन्यासक्तिदृष्ट्या भगवत ऐश्वर्यभावापन्नलीला–माधुर्यभावापन्नलीलयोर्मध्ये माधुर्यभावयुक्तलीलाया एव प्राधान्यं विद्यते। यतो हि तत्रैव प्रभुत्वैश्वर्यापेक्षया च मानवीयभावैः समन्वितस्य भगवतो माधुर्यस्यानुभूतिः भवति साधकानाम्। तत्रैव भगवता सह भक्तस्य आत्मीयतापूर्णान्तरङ्गसम्बन्धश्च स्थाप्यते। एवं परमात्मा भक्तस्य पुत्रः, मित्रम्, पतिः, स्वामीत्यादिरूपेण तस्य परमप्रेमास्पदं जायते। इत्थभूतभगवत्स्नेहस्य तीव्रतायां भक्तो मानसिकतन्मयतां प्राप्नोति। मानसिकतन्मयताजन्य–सहजप्रसन्नतायाः विशिष्टभावदशायां भक्तिश्चरमोत्कर्षं प्राप्य भक्तिरसरूपो निष्पद्यते। सामान्यतः साधकः कान्ताभावेन, गोपीभावेन, सखीभावेन च भक्तिरसस्वादनं करोति। तत्राऽपि प्रेमानुभूतेः तीव्रतया, तन्मयतादृष्ट्या च कान्ताभावः सर्वश्रेष्ठोपासना। यतो हि तयैवोपासकः स्वोपास्येन सह प्रत्यक्षतयैव रमते। अत एव भगवता सह भक्तेर्यावद् भावात्मकः सम्बन्धः स्थाप्यते, तेषु कान्ताभावापन्नसम्बन्ध एव सर्वाधिकः सर्वश्रेष्ठः सर्वोत्तमश्च विद्यते। यतो हि कान्ताभावापन्नभक्तौ एव जीवात्माऽथवा भक्तप्रेयसी–परमात्मारूप-प्रियतमयोः प्रेमलीलासु एव माधुर्यभावस्य चरमोत्कर्षं दृश्यते। जीवात्मपरमात्मनोः दाम्पत्यसम्बन्धे स्नेहस्य तीव्रतमरूपस्याभिव्यञ्जना भवति। तादृशावस्थायां भक्तैः स्नेहस्य संयोग-वियोगात्मकास्ते सर्वे भावाः समनुभूयन्ते, ये च लौकिकनायकनायिकाभिः समनुभूयन्ते। यद्यपि कान्तादिविषयकलौकिकरसोऽपि परमानन्दस्वरूपैव, किन्तु तत्र जडसम्बन्धेन हीनता, न्यूनता, क्षणभङ्गुरता च समायाति। माधुर्यभावसम्पन्ने भक्तिरसेऽनवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणत्वेन तस्य परमानन्दरूपता प्रस्फुट्यते। निःसीमसमुद्रे यथा सरितां मधुरंमिलनं भवति तथैव परमरसमयेन परमप्रेमयेन परमानन्दस्वरूपेण परमात्मना सह जीवात्मनो मधुरसंयोगो भवति। जीवात्मपरमात्मनोः, भक्तप्रेयसी-परमात्मप्रियतमयोस्तन्मधुरमिलनम्, तज्जन्याऽऽनन्दश्चैव भक्तिरसस्य चरमं लक्ष्यं विद्यते।

●

गुरुं भक्त्याराध्यश्रमबहुलशोधोऽयमधुना
मयाऽलेखि श्रीमद्बुधजनकृपालब्धमतिना ।
अमुष्मिन् दोषा ये मम खलु गुणास्ते बुधगता-
श्चिकीर्षा शान्ता मे न पुनरभिमानो मम हृदि ॥

सदा ज्ञानानन्दस्तपसि निरतो ब्रह्मणि चरन्
सुशीलो लोकेऽस्मिन् परहितपरो दिव्यचरितः ।
कबीराख्ये मार्गे विनिहितमना मानभरितो,
गुरुर्मे देवोऽसौ वितरतु यशो रामलखनः ॥

विमृष्टा सद्भक्तिर्विविधरसचर्चापि विहिता,
सदुक्त्या सद्भक्तौ प्रचुररसता साधु निहिता ।
मतां प्राचीनानां नहि विविधरूपा विरहिता,
विमर्शोऽयं भक्तेर्भवतु भुवने विज्ञसुखदः ॥

●

# सहायक ग्रन्थानां पत्र-पत्रिकाणां च सूची


१–अथर्ववेदः स्वाध्यायमण्डल, पारडी १९५७ ई० ।

२–अग्निपुराणम् मनसुखरायमोर, कलकत्ता १९५४ई० प्रथमसंस्करणम् ।

३–अद्भुतदर्पणम्

४–अभिनवभारती अभिनवगुप्तः

५–अभिधानचिन्तामणिः

६–अभियुक्तसारावली

७–अध्यात्मरामायणम्

८–अमरकोशः अमरसिंहः, चौ० सं० सी० आफिस, वाराणसी ।

९–अलङ्कारकौस्तुभम् कविकर्णपूरः ।

१०–अलङ्कारशेखरः केशवमिश्रः

११–अलङ्कारसारसङ्ग्रहः उद्भट्टः ।

१२–अष्टाध्यायी पाणिनिः

१३–अहिर्बुध्न्यसंहिता

१४–आगमसारः

१५–आदित्यनाथझा अभिनन्दनग्रन्थः

१६–आपस्तम्बधर्मसूत्रम्

१७–आलबन्दारस्तोत्रम् यमुनाचार्यः

१८–इण्डियन इण्टरप्रेटर १९१० ई०

१९–इण्डियन एण्टीक्वेरी १८९४ ई० कलकत्ता ।

२०–ईशावास्योपनिषद् गीताप्रेस,गोरखपुर

२१–इण्ट्रौडक्शन टू द साइकोलाजी- थाउलेस

२२–इण्ट्रौडक्शन आफ रीलिजन

२३–इण्ट्रोडक्शन टू सोसल सायकोलाजी

२४–इण्ट्रोडक्टरी लेक्चर्स फ्रायड

२५–उज्ज्वनीलमणिः रूपगोस्वामी, निर्णयसागरप्रेस १९३२

२६–उपसर्गभाष्यम्

२७–उपदेशसाहस्त्री शकङ्कराचार्यः

२८–उपसर्गसङ्ग्रहः

२९–उत्तररामचरितम् भवभूतिः, चौ० सं० सी० आफिस, वाराणसी ।

३०–ऋग्वेदसंहिता सायणभाष्यम्, स्वाध्यायमण्डल, पारडी १९५७ ।

३१–एपिग्राफिका इण्डिका

३२–ऐन इण्ट्रोडक्शन टू दी बुद्धिस्ट विनयतोषभट्टाचार्यः

३३–ऐतरेयब्राह्मणम् सायणभाष्यम् ।

३४–ऐतरेयारण्यकम् सायणभाष्यम्

३५–कठोपनिषद् गीताप्रेस, गोरखपुर ।

३६–कबीरग्रन्थावली नागरीप्रचारिणी,काशी

३७–कल्याण पत्रिका-वेदान्ताङ्कः, उपासनाङ्कः, भक्त्यङ्कः ।

३८–कादम्बरी बाणभट्टः, पण्डित पुस्तकालय, काशी १९५९ ।

३९–कामकलाविलासः

४०–काव्यप्रकाशः मम्मटाचार्यः

४१–बीजकः कबीरः

४२–काव्यमीमांसा राजशेखरः, चौ० सं० सी० आ०, वारा० १९२५ ।

४३–काव्यादर्शः दण्डी

४४–काव्यकला और अन्य निबन्ध- जयशंकरप्रसाद

४५–कामिकागमः
४६–काव्यकला
४७–काव्यानुशासनम् हेमचन्द्राचार्यः
४८–काव्यालंकारः भामहाचार्यः
४९–काव्यालंकारसूत्रवृत्तिः वामनाचार्यः
५०–काव्यलंकारः रुद्रटः
५१–कुमारसम्भवम् कालिदासः
५२–कुलार्णवतन्त्रम्
५३–कूर्मपुराणम् मनसुखरायमोर, कलकत्ता २९६१ ।
५४–कौलविलासः
५५–कृत्यकल्पतरुः
५६–गरुडपुराणम् डा० रामशंकर भट्टाचार्य द्वारासम्पादितम्, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी १९६४ ।
५७–गीतगोविन्दम् जयदेवः
५८–गीतातात्पर्यः वल्लभाचार्यः
५९–गीताभाष्यम् बल्लभाचार्यः
६०–गोविन्दभाष्यम् बलदेवविद्याभूषणः
६१ गोपालचम्पू जीवगोस्वामि
६२–गोपालतापन्युवनिषद्
६३–गौडपादकारिका गौडपादाचार्यः
६४–गौतमधर्मसूत्रम्
६५–गौतमीयतन्त्रम्
६६–घेरण्डसंहिता
६७–चरकसंहिता निर्णयसागर प्रेस, बम्बई १९२२ ।
६८–चन्द्रालोकः जयदेवः
६९–चतुर्वर्गसंग्रहः
७ –चर्याचर्योविनिश्चयः
७१–चैतन्यचरितामृतम् कृष्णदासकविराजः
७२–चैतन्यशिक्षाष्टकः
७३–छान्दोग्योपनिषद् गीताप्रेस, गोरखपुर
७४–जयाख्यसंहिता
७५–जर्नल आफ रायल एशियाटिक सोसायटी १९१० ।
७६–तत्त्वत्रयनिर्णयवृत्तिः अघोरशिवाचार्यः
७७–तत्त्वत्रयम् सद्योज्योतिः
७८–तत्त्वदीपः बल्लभाचार्यः
७९ तत्त्वप्रकाशः भोजराजः
८० तत्त्वमुक्ताकलापः वेदान्तदेशिकः
८१ तत्त्वार्थदीपनिबन्धः बल्लभाचार्यः
८२ तैत्तिरीयोपनिषद् गीताप्रेस, गोरखपुर
८३ तैत्तिरीयारण्यकः
८४ तैत्तिरीयसंहिता
८५ त्रिपुरसुन्दरीरहस्यम्
८६ त्रिपुरासारसमुच्चयः नागभट्टः कलकत्ता
८७ थेरगाथा
८८ दशरूपकम् धनञ्जयः
८९ दशश्लोकी निम्बर्काचार्यः
९० द्विवेदी अभिनन्दनग्रन्थमाला
९१ दी नम्बर आफ रसाज राघवन
९२ द सायकोलाजी आफ सेक्स-ओस्वाल्ड स्क्वार्टज
९३ द सायकोलाजी आफ रीलिजन सेलवि
९४ द मेसन्स आफ फिलासफी-विलड्राण्ट
९५ द स्टडी आफ रीलिजन मारिस जस्टो
९६ द सायकोलोजी एण्ड रीलिजन क्वेस्ट आर० वी कैटल
९७ दुर्गासप्तशती
९८ देवीभागवतपुराणम् मनसुखरायमोर, कलकत्ता
९९ दैवीमीमांसादर्शनम्

१०० ध्वन्यालोकः आनन्दवर्धनाचार्यः
१०१ नउपादम्
१०२ नरसिंहपुराणम्
१०३ नादविन्दूपनिषद्
१०४ नाट्यदर्पणम् रामचन्द्रगुणचन्द्रौ
१०५ नारदभक्तिसूत्रम्
१०६ नारदपाञ्चरात्रसहिता
१०७ नाथसम्प्रदाय डा० हजारी प्रसाद द्विवेदी
१०८ निघण्टुः यास्काचार्यः
१०९ निरुक्तम् यास्काचार्यःश्रीरामलालकपूर, अमृतसर २०२१ वि० सं० ।
११० नीतिशतकम् भर्तृहरिः
१११ नैष्कर्मसिद्धिः सुरेश्वराचार्यः
११२ नैशधमहाकाव्यम् श्रीहर्षः
११३ न्यायसूत्रम् वात्सायन
११४ न्यायसिद्धाञ्जनम् वेदान्तदेशिक कृत वा० सं० वि० वि०, वाराणसी
११५ पञ्चतन्त्रम् चौ० विद्याभवन, वाराणसी २०१५ वि० सं०
११६ पञ्चदशी विद्यारण्य स्वामी
११७ पद्मपुराणम् मनसुखरायमोर, कलकत्ता १९५७ ।
११८ पुराणविमर्शः बलदेवोपाध्यायः, चौ० सं० सी०, वाराणसी १९६५ ।
११९ प्रज्ञापत्रिका का० हि० वि० वि० १९७० मार्च ।
१२० प्रबोधसुधाकरः शङ्कराचार्यः
१२१ प्रमेयरत्नावाली बलदेवविद्याभूषणः
१२२ प्रमेयपरिशोधिनी श्रीवैष्णवाचार्यः
१२३ प्रसन्नराघवम् जयदेवः
१२४ प्रश्नोपनिषद् गीताप्रेस, गोरखपुर ।
१२५ प्रीतिसन्दर्भः जीवगोस्वामी
१२६ प्रेमरसायनम् कविविश्वनाथः
१२७ प्रेमपत्तनम्
१२८ फिलासफी आफ ऐन्सीयेण्ट इन्डिया गार्बः
१२९ ब्रह्मसूत्रम् शाङ्करभाष्यम्, श्री भाष्यम्, आनन्दभाष्यम्, अणुभाष्यम्, गोविन्दभाष्यम् ।
१३० ब्रह्मसंहिता
१३१ ब्रह्मवैवर्तपुराणम् मनसुखरायमोर, कलकत्ता १९५४ ई० ।
१३२ ब्रह्मसिद्धिः मण्डनमित्रः
१३३ ब्रह्मपुराणम् मनसुखरायमोर, कलकत्ता १९५४ ई० ।
१३४ बृहदारण्यकोपनिषद् गीताप्रेस, गोरखपुर
१३५ बाम्बे गजेटियर सर आर० जी० भण्डारकर
१३६ बाराहीतन्त्रम्
१३७ बोधसारः नरहरिः
१३८ बोधपञ्चदशिका अभिनवगुप्तः
१३९ बोधायनवृत्तिः बोधायनाचार्यः
१४० बौद्धदर्शनम् बलदेवोपाध्यायः
१४१ बोधायनस्मृतिः
१४२ भगवत्सन्दर्भः जीवगोस्वामी
१४३ भक्तिमीमांसूत्रम्
१४४ भक्त्यधिकरणमाला नारायणयतिः
१४५ भक्तिसन्दर्भः जीवगोस्वामी
१४६ भगवन्नामकोमुदी लक्ष्मीधरः
१४७ भरतनाट्यशास्त्रम् भरतमुनिः, बड़ौदा
१४८ भट्टिकाव्यम् भट्टिः
१४९ भक्ति का विकास डा० मुंशीराम शर्मा

१५० भक्तिरसामृतसिन्धुः—रूपगोस्वामी
१५१ भक्तिरसार्णवः करपात्रस्वामी भक्ति सुधासहित्यपरिषत् कलकत्ता२०२६
१५२ भक्तिसुधा ,, ,, ,, २०२६वि. सं
१५३ भक्तिरसायनम् मधुसूदनस्वामी श्री दामोदरशास्त्रिद्वारा सम्पादिता।
१५४ भक्तिचन्द्रा नरायणतीर्थः, वा० स० वि० वि०, वाराणसी।
१५५ भक्तिमार्तण्डः जीवगोस्वामी
१५६ भक्तिरत्नावली नारायणगोस्वामी
१५७ भक्तिपुष्पाञ्जली हरिशरणगोस्वामी
१५८ भागवतपुराणम् गीताप्रेस, गोरखपुर
१५६ भारद्वाजसंहिता
१६० भारतीयदर्शनम् बलदेवोपाध्याय
१६१ भारतीयदर्शनम् डा० स० राधाकृष्णन्
१६२ भावचूडामणितन्त्रम्
१६३ भावप्रकाशनम् शारदातनयः
१६० भुवनेश्वर्युपनिषद्
१६५ महारामायणम्
१६६ मधुर रसः स्वरूप और विकास
१६७ मनुस्मृतिः मनुः
१६८ महासुन्दरीतन्त्रम्
१६६ महाभाष्यम् पतञ्जलिः
१७० महाभारतम् गीताप्रेस गोरखपुर।
१७१ मत्स्यपुराणम् मनसुखरायमोर, कलकत्ता १६५४।
१७२ मज्झिमनिकाय
१७३ महार्थमञ्जरी महेश्वरानन्दः, वा० सं० वि० वि०, वाराणसी।
१७४ मानसोल्लासः श्रीसुरेश्वराचार्यः
१७५ माधुर्यकादम्बनी विश्वनाथचक्रवर्ती
२७६ माहेश्वरतन्त्रम्
१७७ माहरश्रुतिः
१७८ मुण्डकोपनिषद् गीताप्रेस, गोरखपुर १६६७ सं०
१७६ मुक्तिकोपनिषद्
१८० मुक्ताफलम् वोपदेवः
१८१ मेदनीकोशः
१८२ मैत्रेयीसंहिता
१८३ मैत्रेयाण्युपनिषद् गीताप्रेस गोरखपुर
१८४ मृगेन्द्रवृत्तिः मृगेन्द्रस्य ग्रन्थस्य नारायणकण्ठकृत टीका
१८५ मृगेन्द्रवृत्तिदीपिका-अघोरशिवाचार्यः
१८६ मृच्छकटिकम शुद्रकः
१८७ यजुर्वेदः स्वाध्यायमण्डल, पाण्डी १६५७ ई०।
१८८ यतीन्द्रमतदीपिका श्रीनिवासाचार्यः, पुण्यनगरात्
१८६ यामलतन्त्रम्
१६० याज्ञवल्क्यस्मृतिः, महर्षि याज्ञवल्क्यः श्रीभीमसेनशर्मा, इटावा १६५० ई०
१६१ योगवासिष्ठः महर्षिवशिष्ठः
१६२ योगसूत्रम्
१६३ यागबीजम्
१६४ योगचिन्तामणिः शिवानन्दस्वामी
१६५ योगरसायनम्
१६६ योगदर्शन डा० सम्पूर्णानन्दः
१६७ रसविमर्शः डा० बाटवे
१६८ रसतरंगिणी भानुदत्तः
१६६ रसार्णवसुधाकरः शिंगभूपालः
२०० रसमीमांसा रामचन्द्रशुक्लः
२०१ रघुवंशम् कालिदासः
२०२ रसगंगाधरः पण्डितराजगन्नाथः
२०३ रसशिद्धान्त स्वरूप और विश्लेषण आनन्दप्रकाश दीक्षितः

२०४ रत्नत्रयम् अघोरशिवाचार्यः
२०५ रामतापन्युपनिषद्
श्रीरामवल्लातचार्यद्वारा सम्पादिता
२०६ रामचरितमानस श्रीतुलसीदासः
२०७ रामानन्दसिद्धान्तसारम्
श्रीवैष्णवाचार्यः, अहमदाबाद ।
२०८ रीलिजस कौससनेस विलियमपूट
२०९ लघुभागवतम् रूपगोस्वामी
२१० ललितासहस्त्रनामभाष्यम्
श्रीभाष्कररायः
२११ लिङ्गपुराणम् निर्णयसागर प्रेस,
बम्बई १९६३ वि० सं ।
२१२ वायुपुराणम् मनसुखरायमोर,
कलकत्ता १९५९ ई० ।
२१३ वाचस्पत्यम् चौ० सं० सी० आफिस,
वाराणसी १९६२ ई० ।
२१४ वाल्मीकिरामायणम् गीताप्रेस
२१५ वासुदेवमाहात्म्यम्
२१६ विदग्धमाधवनाटकम् रूपगोस्वामी
निर्णयसागर प्रेस, बम्बई १९२३ई०
२१७ विष्णुपुराणम् गीताप्रेस गोरखपुर ।
२१८ विष्णुधर्मोत्तरपुराणम् ओरियण्टल
इन्स्टिट्यूट, बड़ौदा १९५८ ई०
२१९ विष्णुयामलम्
२२० विश्वप्रकाशकोशः
२२१ विवेकचूडामणि शंकराचार्यः
२२२ विक्रमोर्वशीयम् कालिदासः
२२३ विक्रमाङ्कदेवचरितम् विल्हणकविः
२२४ विशिष्टाद्वैतदर्शनम् श्रीभगवदाचार्यः
२२५ विष्कसेनसंहिता
२२६ वेदस्वरूपविमर्शः करपात्रस्वामी
२२७ वेदान्तसारः श्रीभगवद्रामानुजाचाय
२२८ वेदार्थसंग्रहः श्रीरामानुजाचार्यः
२२९ वेदान्तकामधेनुः श्रीनिम्बार्काचार्यः
२३० वैदिकयोगसूत्रम् हरिशंकरजोशी
२३१ वैष्णवतन्त्रम्
२३२ वैखानससंहिता
२३३ वैष्णवमताब्जभास्करः
श्रीरामानन्दाचार्यः
२३४ वैष्णविज्म एण्ड क्रिश्चियनिटी
२३५ व्यक्तिविवेकः महिमभट्टः
२३६ शतपथब्राह्मणः रायल एशियाटिक
सोसायटी, बंगाल १९०३ ई० ।
२३७ शब्दकल्पद्रुमः मोतीलालबना
रसीदास, दिल्ली १९६१ ई० ।
२३८ शाकुन्लम् कालिदासः
२३९ शारदातिलकः लक्ष्मणदेशिकेन्द्र
२४० शाण्डिल्यभक्तिसूत्रम् गीताप्रेस,
गोरखपुर २००६ वि० सं० ।
२४१ शण्डिल्यसंहिता ”
२४२ शिवसंहिता
२४३ शिवपुराणम् गीताप्रेस, गोरखपुर
२४४ शिवार्कमणिदीपिका वेदान्तसूत्रोपरि
अप्पयदीक्षितकृत टीका
२४५ शिशुपालवधम् माघः
२४६ शिवानन्दलहरी
२४७ शुद्धाद्वैतमार्तण्डः श्रीवल्लभाचार्यः,
वा० सं० वि० वि०, वाराणसी ।
२४८ शैवधर्मः

२४६ शोधपत्रिका राजस्थान विद्यापीठ १६७० ई०
२५० श्रीमत् भगवद्गीता शांकरभाष्यम्-रामानुजभाष्यम्, आनन्दभाष्यम् ।
२५१ श्रीशंकराचार्यात्पूर्वमद्वैतस्वरूपम् डा० मुरलीधरपाण्डेयः
२५२ श्रृंगारप्रकाशः भोजदेवः
२५३ श्रीमन्नाथसुधा जयतीर्थः
२५४ श्वेताश्वतरोपनिषद् गीताप्रेस
२५५ श्लोकवार्त्तिकः कुमारिलभट्टः
२५६ षट्चक्रनिरूपणम् तत्त्वचिन्तामणि ग्रस्थस्य पञ्चमपटलः ।
२५७ षट्सन्दर्भः जीवगोस्वामी
२५८ षट्दर्शनसमुच्चयः गुणरत्नसूरि
२५६ षट्पदीयस्तोत्रम् शंकराचार्यः
२६० सर्वदर्शनसंग्रहः माधवाचार्यः
२६१ सर्वसम्वादः जीवगोस्वामी
२६२ सर्वदर्शनसिद्धान्तसंग्रहः शंकराचार्यः
२६३ सरस्वतीकण्ठाभरणम् भोजदेवः
२६४ सत्संगजीवनम्
२६५ सनत्कुमारतन्त्रम्
२६६ सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः गौरीशंकरभिक्षुः
२७६ सामवेदः स्वाध्यायमण्डलपारडी१६५४
२६८ सारस्वती सुषमा शोधपत्रिका, वा० सं० वि० वि०, वाराणसी ।
२६६ साहित्यदर्पणम् विश्वनाथः
२७० साहित्यसारम्
२७१ साहित्यिकनिबन्धावली देवेन्द्रनाथशर्मा
२७२ सिद्धसिद्धान्तसंग्रहः आदित्यनाथयोगी
२७३ सिद्धसिद्धान्तपद्धतिः गोरखनाथः
२७४ सिद्धित्रयम् यामुनाचार्यः
२७५ सिद्धान्तदीपिकः
२७६ सीतामन्त्रार्थः जानकीवल्लभदासः
२७७ सुन्दरदर्शन सुन्दरदासः
२७८ सुभाषितरत्नभाण्डागारम् काशीनाथ शर्मा, बम्बई १६३५ ।
२७६ सूरसागर सूरदासः
२८० सौन्दर्यलहरी शंकराचार्यः
२८१ सौरपुराणम्
२८२ संकल्पसूर्योदयः वेदान्तदेशिकः
२८३ संस्कृतसाहित्य का इतिहास सेठ कन्हैयालाल पोद्दार
२८४ संगीतरत्नकरः शारङ्गदेवः
२८५ सांख्यकारिका श्रीकृष्णः ईश्वर
२८६ सांख्ययोगदर्शन डा० उमेश मिश्र
२८७ सांख्यसारः विज्ञानभिक्षुः, काशी
२८८ स्वच्छन्दतन्त्रम्
२८६ स्कन्दपुराणम् मनसुखरामोर, कलकत्ता १६५१ ई० ।
२६० हठयोगप्रदीपिका स्वात्मारामयोगीन्द्रः
२६१ हिस्ट्र आफ संस्कृत पोयटिक्स पी० वी० काणे
२६२ हनुमत्संहिता

# शुद्धि-पत्रम्

| अशुद्धवाक्यम् | शुद्धवाक्यम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| तादृशम् | तादृशीनाम् | ४ | २ |
| शृङ्गाररयुक्तम् | शृङ्गारयुक्त | ४ | ६ |
| वणितम् | वर्णितम् | ४ | १६ |
| त | तं | ६ | ७ |
| सिद्ध्यति | सिद्ध्यन्ति | ८ | ५ |
| त्ययन्ता | त्यन्ता | ८ | २७ |
| द्वात्रिशद् | द्वात्रिंशद् | ६ | ५ |
| समीचीन | समीचीनं | १० | २८ |
| प्रसगे | प्रसंगे | १४ | २० |
| प्रयुक्तर्थेषु | प्रयुक्तार्थेषु | १५ | २१ |
| च्छन्दसा | च्छन्दसां | १६ | १० |
| भूततायाः | भूतायाः | १६ | २३ |
| पनषिद् | उपनिषद् | १८ | ६ |
| अव्यम् | अव्ययम् | २१ | ५ |
| त | तं | २२ | १२ |
| भगवन्त | भगवन्तं | २२ | १३ |
| भक्ति | भक्तिं | २२ | १३ |
| ह्यपासा | ह्युपासा | २५ | १ |
| ह्याग्नि | ह्यग्नि | २५ | ११ |
| पोपनासमेव | पोपासनमेव | २६ | ८ |
| निर्विशषेण | निर्विशेषेण | २७ | १६ |
| मदो | मन्दो | २८ | १७ |
| महिमात्मनः | महिमानमात्मनः | ३४ | ५ |
| स्वोपस्येन | स्वोपास्येन | ४१ | १७ |
| नन्यति | नन्दयति | ४३ | २६ |
| द्रुति | द्रुति | ४६ | ७ |
| कुशमुद्यौ | कुशमुष्ट्यौ | ५१ | २६ |
| पङ्ग | पङ्ग | ५३ | १ |
| मनव ए | मन एव | ५५ | ५ |

| अशुद्धवाक्यम् | शुद्धवाक्यम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| दर्निग्रहं | दुर्निग्रहं | ५५ | ६ |
| ऽऽध्यात्मिक | आध्यात्मिक | ५७ | २४ |
| मनावैज्ञानिक | मनोवैज्ञानिक | ५८ | १५ |
| माऩसतच्व | मानसतत्त्व | ६४ | १० |
| मङ्गलमययाः | मङ्गलमय्याः | ६४ | १३ |
| भावस्या | भावस्य | ६४ | १६ |
| मनस्तत्त्व | मानसतत्त्व | ६५ | ५ |
| प्रेमाभव | प्रेमभाव | ६८ | ४ |
| सर्श | सर्व | ७५ | २४ |
| विघव | विधैव | ७६ | ११ |
| श्रीशङ्कराचायादिभिः | श्रीशङ्कराचार्यादिभिः | ७६ | ३० |
| गृह्णौति | गृह्णाति | ७८ | ३ |
| द्वैतंश्चास्ति | द्वैतश्चास्ति | ७९ | १५ |
| मध्यकालिक | भक्तिकालिक | ८१ | ५ |
| तेज आदिभिः | तेजसादिभिः | ८३ | २१ |
| मध्यकालिकधर्म | भक्तिकालिकधर्म | ८४ | ९ |
| ज्ञानयोगरूतां | ज्ञानयोगरूपतां | ९३ | १६ |
| प्राब्धा | प्रारब्धा | ९६ | ११ |
| विनाशयींतीति | विनाशयतीति | ९६ | १२ |
| निषेणं | निषेधं | ९९ | २४ |
| पमात्म | परमात्म | १०० | १५ |
| वशिष्टद्वैत | विशिष्टाद्वैत | १०१ | १२ |
| श्री रमो | श्री रामो | १०३ | २ |
| सवृदेव | सकृदेव | १०३ | ६ |
| वह्निन | वह्नि | १०३ | १८ |
| विशिष्टदैतस्य | विशिष्टाद्वैतस्य | १०४ | ९ |
| विशिष्टदैता | विशिष्टाद्वैता | १०४ | १५ |
| जडजगभ्याश्च | जडजगद्भ्याश्च | १०८ | ९ |
| व्यप्ति | व्याप्ति | १०९ | २१ |
| इत्यादिनी | इत्यादीनि | १११ | ६ |

| अशुद्धवाक्यम् | शुद्धवाक्यम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| समक्षरब्रह्मेति | अक्षरब्रह्मेति | ११६ | ५ |
| कत्तर्यणु | कर्त्तर्यणु | ११७ | २२ |
| ज्ञानोपेक्षपा | ज्ञानापेक्षया | ११६ | २२ |
| जगददं | जगदिदं | १२१ | २२ |
| ब्रह्मणोर्भेदाभेदौ | ब्रह्मणोर्भेदाभेदौ | १२२ | १३ |
| माधुर्यरूस्तु | माधुर्यरूपस्तु | १२४ | २२ |
| सच्चिदातन्द | सच्चिदानन्द | १२४ | २६ |
| पञ्चतच्चानि | पञ्चतत्त्वानि | १२६ | १ |
| सेमां | सेवां | १२६ | २३ |
| क्षञ्च | क्षयञ्च | १३० | ८ |
| अपञ्च | अपरञ्च | १३० | ११ |
| हृदभावेन यस्य | हृदयस्य भावेन | १३२ | १३ |
| मनोनयम् | मनोमयम् | १३४ | १४ |
| सिद्धान्तानुसाणा | सिद्धान्तानुसारेणा | १३६ | ६ |
| पुरुषारिरिक्त | पुरुषातिरिक्त | १४० | १० |
| समरत्वं | समरसत्वं | १४५ | १२ |
| तदतरिक्त | तदतिरिक्त | १४८ | ५ |
| मोद्यसाधनानि | मोघसाधनानि | १५८ | १२ |
| शैवदानम् | शैवदर्शनम् | १५६ | १ |
| विविधर्मसाधना | विविधधर्मसाधना | १६४ | ३ |
| चाद्वैता | चाद्वैतता | १६५ | १६ |
| जनैरितित्याधुनिका | जनैरित्याधुनिका | १६६ | २ |
| नादस्यातत्त्वस्य | नादस्याहंतत्त्वस्य | १६६ | ३ |
| खामरस्यभावस्य | सामरस्यभावस्य | १७० | ११ |
| साधकसाध्यो | साधकसाध्ययो | १७० | १५ |
| निर्दिशयते | निर्दिश्यते | १७१ | ३ |
| तान्त्रिकाचारश | तान्त्रिकाचारश्च | १७२ | २३ |
| स्वसिद्धान्ततमप्रति-पादयत् | स्वसिद्धान्तंप्रत्य-पादयत् । | १७३ | १ |
| प्राप्त्यर्थंर्थद्वैते | प्राप्त्यर्थमद्वैते | १७३ | २० |
| सतविद्याचारेषु | सप्तविधाचारेषु | १७४ | ४ |

| अशुद्धवाक्यम् | शुद्धवाक्यम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| श्माशाने | श्मशाने | १७४ | ६ |
| सर्वाण | सर्वान् | १७४ | १२ |
| कुलशब्देण | कुलशब्देन | १७४ | १३ |
| कौलाचारस्न | कौलाचारस्य | १७४ | १४ |
| प्रत्याक्षरं | प्रत्यक्षरं | १७६ | १ |
| परमेवश्रः | परमेश्वरः | १७८ | १ |
| पञ्चावारं | पञ्चवार | १७८ | १० |
| परमामन | परमात्मन | १७९ | ४ |
| पश्यान्ति | पश्यन्ति | १७९ | २४ |
| प्रतीमानोऽपि | प्रतीयमानोऽपि | १८१ | ६ |
| लीलीपि तद्रूपत्वेन | लीलापि तद्रूपत्वेन | १९२ | १४ |
| प्रसिद्धसो | प्रसिद्ध्येत् | १९२ | १७ |
| व्यञ्जययतया | व्यञ्जयतया | १९४ | १८ |
| ध्वयालोके | ध्वन्यालोके | १९४ | २६ |
| गग्रन्थेषु | गमग्रन्थेषु | १९५ | ११ |
| कल्तरोः | कल्पतरोः | १९५ | २५ |
| पृथरूपेपेणोदभूता | पृथग्रूपेणोद्भूताः | १९८ | ८ |
| जुगुसास्थायि | जुगुप्सास्थायि | २०२ | २० |
| आनन्दादश्रु | आनन्दाश्रु | २०६ | १८ |
| इत्यविधीयते | इत्यभिधीयते | २०७ | १३ |
| वात्सल्परसः | वात्सल्यरसः | २१० | १० |
| एवखण्डरूपात्मको | एवाखण्डरूपात्मको | २११ | २२ |
| नैः श्रेयसोपद्दष्टिः | नैःश्रेयसोपदिष्टः | २१२ | १८ |
| विषयकात्यपेक्षणा | विषयकरत्यपेक्षया | २१७ | १२ |
| भक्तदेवपेणवत-रितवातः | भक्तरूपेणावत-रितवन्तः | २१८ | १६ |
| चेत | चेतसा | २२० | १९ |
| प्रधाननायकस्व | प्रधाननायकस्य | २२२ | १७ |
| भगद्गत | भगवद्गत | २२४ | २६ |
| धूमायितज्वलि | धूमायितज्वलित | २२५ | ३ |

| अशुद्धवाक्यम् | शुद्धवाक्यम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| सिद्धिान्तो | सिद्धान्तो | २२७ | ५ |
| प्राकतरसायापि | प्राकृतरसस्यापि | २२७ | १३ |
| पञ्चविधोथ्यः | पञ्चविधो यः | २२४ | ६ |
| धर्मार्थकामकमोक्षपि | धर्मार्थकाममोक्षमपि | २४६ | २१ |
| योगिनो | योगिनः | २५६ | ११ |
| प्रेमादपः | प्रेमादयः | २७२ | १२ |
| प्रेरयव्यत्र | प्रेरयत्यत्र | २८३ | २६ |
| स्नोधिक्यात् | स्नेहाधिक्यात् | २८८ | ११ |
| धरै | धीरै | २८८ | २८ |
| लौकिकरत्यदि-भावानां | लौकिकरत्यादी-भावानां | २९१ | २१ |
| सङ्गकुचन्त्या | सङ्कुचन्त्या | २९२ | २६ |
| सङ्गकोचं | सङ्कोचं | २९३ | ७ |
| भयङ्गकरा | भयङ्करा | २९३ | १६ |
| रस्यमानत्याद | रस्यमानत्वाद् | २९४ | १० |
| सग्रग्रहप्रवृत्तः | सङ्ग्रहप्रवृत्तिः | २९५ | १ |
| विष्णोरक्कापर | विष्णोरेवापर | ३१४ | २६ |
| मता | मतं | ३१६ | ११ |
| विविधरूपां | विविधरूपं | ३१६ | ११ |
| विरहिता | विरहितम् | ३१६ | ११ |